# श्री देवेंद्रसूरिविरचित–स्वोपज्ञ–टीकायुक्त

# कर्मग्रन्थः

## विभाग पहेलो

( कर्मग्रंथ १– २– ३– ४ )

शेठ वीरजी कल्याणजीना सुपुत्र रतनजीभाइ तथा शेठ जीवणभाइ जेचंदनी सहायथी

छपावी प्रसिद्ध करनार

### श्रीजैनधर्मप्रसारक सभा

वीर संवत् २४३६ भावनगर विक्रम संवत् १९६६

मुंबइ–कोलभाटलेन घर नं. २३ मां आवेला निर्णयसागर प्रेसमां बाळकृष्ण रामचंद्र घाणेकरे प्रसिद्ध करनारने माटे छाप्यो

# खास सूचना.

छए कर्मग्रंथनी टीका छपाववानी छे छतां चोतरफथी मागणी पर मागणी आवतां आ चार कर्मग्रंथनी टीकानो पहेलो विभाग करी बहार पाडवामां आवेल छे. बीजा विभागमां पांचमो ने छठ्ठो कर्मग्रंथ आववनार छे. आ ग्रंथनी प्रस्तावना केटलीक हकीकत साथे लखवानी छे, परंतु ते कार्य बीजा विभाग माटे मुलतवी राखेल छे. आ कार्यमां आर्थिक सहाय आपनारनी इच्छानुसार आ ग्रंथ तेना खपी साधु साध्वीने भेट तरीके आपवानुं मुकरर करवामां आव्युं छे. माटे तेओसाहेबे मंगावी लेवानी कृपा करवी.

छपावी प्रसिद्ध करनार–श्रीजैनधर्मप्रसारक सभानी वती शा. कुंवरजी आणंदजी. भावनगर.

# श्री कर्मग्रंथ सटीकनुं शुद्धिपत्र.

| पानुं. | पुठी | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| २ | १ | १ | भेदाना | भेदाना |
| ३ | १ | ११ | प्रदेशहग्रहणं | प्रदेशग्रहण |
| ६ | २ | १ | तेपा | तेपा |
| ७ | १ | २ | धंजो न सेसेसु | धजो य सेसेसु |
| ८ | १ | १३ | भेदात् | भेद |
| ९ | २ | १३ | कोऽसो | कोऽसौ |
| ११ | १ | ११ | तच्चैव | तच्चैव |
| २० | १ | १४ | हस्तिकर्णाश्व | हस्तिकर्णाकर्णौ च |
| २४ | १ | ६ | मनेजेष्वित्यर्यं. | मनुजेष्वित्यर्थः |
| २७ | २ | १ | जलेरखा | जलरेखा |
| ३४ | २ | ३ | सूत्र च | सूत्रे च |

| पानुं. | पुंठी. | पंक्ति | अशुद्ध. | शुद्ध. |
|---|---|---|---|---|
| ३८ | १ | ९ | संवंध | संवंधं |
| ३९ | २ | ११ | तेषा | तेषां |
| ४१ | १ | ६ | वामस्कधस्या | वामस्कंधस्य |
| ४२ | १ | ७ | मरिशादिवत् | मरिचादिवत् |
| ५३ | १ | १ | चौर्य | चौर्यं |
| ५५ | २ | १३ | किगंम | किमंग |
| ५८ | १ | ६ | तदुदंये | तदुदये |
| ५९ | २ | ८ | प्रतिपक्षणा | प्रतिपक्षणां |
| ६१ | १ | १ | सन्नव | संन्नव |
| ६५ | १ | १२ | नाया | न्याया |
| ६६ | १ | ७ | लिका | ज्ञिकां |
| ६७ | २ | १० | नदो | नेदो |
| ६८ | १ | ५ | नेदहेतु | ठेदहेतुः |

| पानु | पुंठी. | पंक्ति | अशुद्ध | शुद्ध. |
|---|---|---|---|---|
| ७७ | २ | १२ | अजागी | अजोगी |
| ७८ | २ | ए | सत्ताव्यवछेदः | सत्ताव्यवछेद' |
| ७ए | १ | ए | ' घडुर ' | ' गडुर ' |
| ८४ | २ | १ | प्रकृतिरहिता | प्रकृतिरहिता |
| ए२ | १ | ३ | वन्नु | मन्नु |
| ९३ | २ | १० | रैण | रैन |
| ९३ | २ | १३ | धर्म | धर्म |
| ए६ | २ | ५ | पयासा | पयांसा |
| ए७ | २ | १२ | योगतपस्या | योगतपस्य |
| ए८ | १ | १२ | भिमु | भिज |
| १०१ | १ | ५ | निमित्त | निमित्तं |
| १०१ | १ | १३ | गिता | तिका |

| पानुं. | पुंठी. | पंक्ति. | अशुद्ध. | शुद्ध. |
|---|---|---|---|---|
| १०५ | २ | ६ | विह्ंग | विहंग |
| ११० | १ | ३ | विशुद्धसु | विशुद्धासु |
| ११० | २ | १० | नयमेण | नियमेण |
| ११२ | २ | ८ | विणिज्जा | चिणिज्जा |
| ११५ | १ | ४ | पुरिरस्स | पुरिसस्स |
| ११६ | २ | ८ | स्थिरगुरुलघु | स्थिरागुरुलघु |
| ११८ | २ | २ | स्थापनरिहार | स्थापनपरिहार |
| ११९ | १ | १४ | समुद्धृघताः | समुद्धताः |
| १२२ | २ | ६ | पद्मलेश्या | पद्मलेश्ये |
| १२६ | २ | २ | अकम्मागा | अकम्मगा |
| १२९ | १ | १० | सन्नयः? | संन्नयः? |
| १३० | १ | १३ | सर्वःकेवळी | केवली |

| पानु | पुंठी. | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| १३३ | १ | १ | गुणहाण | गुणहीण |
| १३३ | १ | १० | अयो ता | अयोगता |
| १३४ | २ | ७ | अनाणतिग | अनाणतिगि |
| १३५ | २ | ए | अवधिद्विकेऽवधिज्ञानावधिदर्शनरूपे | अवधिदर्शने |
| १४० | १ | ४ | तथाः | तथा |
| १४० | २ | ३ | तदन्तिरसु | तदन्तिधित्सु |
| १४१ | १ | ७ | अपूकायिका | अप्कायिका |
| १४२ | १ | ११ | अयोगिऽनो | अयोगिनोऽ |
| १४५ | १ | ० | समुदूघात | समुद्घात |
| १५० | १ | ए | प्रवृत्ति. | प्रकृति. |
| १५३ | २ | १२ | णुदीरगजोगि | णुदीरगु अजोगि |
| १५६ | २ | १० | कौदयिकौदयिके | कौदयिके |

| पानुं. | पुंठी. | पंक्ति. | अशुद्ध. | शुद्ध. |
|---|---|---|---|---|
| १६२ | १ | १३ | संयोगि | सयोगि |
| १६६ | १ | ८ | परिणाम | परिमाण |
| १६८ | १ | ४ | एगरासी | एसरासी |

पृष्ठ १४७ पुंठी १ली पंक्ति ८ मीमां जवन्ति पछी 'न शेषाः सम्यक्त्वविरत्यजावात । तथा अयते अविरतसम्यग्दृष्टौ देशे देशविरते षमुपयोगा जवन्ति । तथाहि । नाणदंसणतिगं' आटलुं उमेरवुं.

श्रीदेवेंद्रसूरिविरचित–स्वोपज्ञ–टीकायुक्त-

# कर्मग्रंथः

॥ ॐ नमः श्रीप्रवचनाय ॥

दिनेशवद्ध्यानवरप्रतापैरनन्तकालप्रचितं समन्तात् ।
योऽशोषयत्कर्मविपाकपकं देवो मुदे वोऽस्तु स वर्धमानः ॥ १ ॥
ज्ञानादिगुणगुरूणां धर्मगुरूणां प्रणम्य पदकमलम् ।
कर्मविपाके विवृतिं स्मृतिबीजविवृद्धये विदधे ॥ २ ॥

तत्रादावेवाभीष्टदेवतानुत्यादिप्रतिपादिकामिमां गाथामाह–

सिरिवीरजिणं वंदिय कम्मविवागं समासओ वुच्छं । कीरइ जिएण हेउहिं जेणं तो भण्णए कम्मं ॥ १ ॥

टीका–श्रिया सकलत्रिभुवनजनमनश्चमत्कारिमनोहारिपरमार्हन्त्यमहामहिमाविस्तारि "अशोकवृक्षः सुरपुष्पवृष्टिर्दि-

व्यो ध्वनिश्चामरमासनं च। भामंडलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम् ॥१॥" इति स्पष्टाष्टप्रातिहार्यशोभया चतुस्त्रिंशदतिशयविभूत्या वा समन्वितो वीरः श्रीवीरः, स चासौ रागद्वेषमोहप्रभृतिवैरिवारपराजयाज्जिनश्च श्रीवीरजिनस्तं श्रीवीरजिनं श्रीमद्वर्धमानस्वामिनं वन्दित्वा विशुद्धमानसप्रणिधानसमन्वितेन वाग्योगेन स्तुत्वा, काययोगेन च प्रणम्य, 'वदुङ्' स्तुत्यभिवादनयोरिति वचनात्। एतेन मंगलार्थमभीष्टदेवतायाः स्तुतिरुक्ता। क्त्वाप्रत्ययस्य चोत्तरक्रियासापेक्षत्वादुत्तरक्रियामाह–" कर्मविपाकं वक्ष्ये " तत्र कर्मणां ज्ञानावरणादीनां विपाकोऽनुभवः कर्मविपाकस्तं कर्मविपाकं वक्ष्येऽभिधास्ये। अनेनाभिधेयमाह। कथमित्याह–" समासतः " संक्षेपेण, न विस्तरेण, दुःषमानुभावापचीयमानमेधायुर्बलादिगुणानामैदंयुगीनजनानां विस्तराभिधाने सति उपकारासंभवात्, तदुपकारार्थं चैष शास्त्रारंभप्रयासः। एतेन संक्षिप्तरुचिसत्त्वानाश्रित्य प्रयोजनमाचष्टे। संबन्धस्त्वर्थापत्तिगम्यः, स चोपायोपेयलक्षणः, साध्यसाधनलक्षणो, गुरुपर्वक्रमलक्षणो वा, स्वयमभ्यूह्य इति। अथ कर्मविपाकं वक्ष्य इत्युक्तं तत्र कर्मशब्दं व्युत्पादयन्नाह–क्रियते विधीयतेऽञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरपुद्गलनिचिते लोके क्षीरनीरन्यायेन वह्न्ययःपिंडवद्वा कर्मवर्गणाद्रव्यमात्मसंबद्धं येन कारणेन ततस्तस्मात्कारणात् कर्म भण्यत इति संबन्धः। केन क्रियत इत्याह–' जीवेन ' जन्तुना, तत्र जीवतीन्द्रियपंचकमनोवाक्कायबलत्रयोच्छ्वासनिःश्वासायुर्लक्षणान् दश प्राणान् यथायोगं धारयतीति जीवः। क इत्थंभूत इति चेदुच्यते–यो मिथ्यात्वादिकलुषितरूपतया सातादिवेदनीयादिकर्मणामभिनिवर्तकस्तत्फलस्य च विशिष्टसातादेरुपभोक्ता, नरकादिभवेषु च यथाकर्मविपाकोदयं संसर्ता, सम्यग्दर्शनज्ञानचारित्रोपसंपन्नरत्नत्रयाभ्यासप्रकर्षवशाच्च निःशेषकर्मांशापगमतः परिनिर्वाता सः जीवः सत्त्वः प्राणी आत्मे-

त्यादिपर्याया । उक्त च-" य कर्ता कर्मभेदाना भोक्ता कर्मफलस्य च । ससर्ता परिनिर्वाता स ह्यात्मा नान्यलक्षण॰ " ॥ १ ॥ इति । के कृत्वा जीवेन क्रियत इत्याह-' हेतुभि ' मिथ्यात्वाविरतिकषाययोगलक्षणैश्चतुर्भि सामान्यरूपै " पडिणीयत्तण निन्हव पर्उस उवघाय अतराएण । अच्चासायणयाए आवरणडुग जिऊ जयइ ॥ १ ॥ " इत्यादिभि-र्विशेषप्रकारैरभिहै वक्ष्यमाणै । तदयमत्र तात्पर्यार्थ -क्रियते जीवेन हेतुभिर्येन कारणेन तत॰ कर्म भण्यत इति । कथ-मेतत्सिद्धिरिति चेदुच्यते-इहात्मत्वेनाविशिष्टानामात्मना यदिद देवासुरमनुजतिर्यगादिरूप क्ष्मापतिद्रमकमनीषिमन्दमह-र्द्धिदरिद्रादिरूप वा वैचित्र्य, तन्न निर्हेतुकमेष्टव्य । मा प्रापत्सदा भावाभावदोषप्रसग । " नित्य सत्त्वमसत्त्व वाऽहेतोर-न्यानपेक्षणात् " । सहेतुकत्वाभ्युपगमे च यदेवास्य हेतुस्तदेवास्माक कर्मेति मतमिति तत्सिद्धिः । यदवोचाम श्रीदिन-कृत्यटीकाया जीवस्थापनाधिकार एनमेवार्थम्-" क्ष्माभृद्रककयोर्मनीषिजडयो सद्रूपनीरूपयो॰, श्रीमद्दुर्गतयोर्बलाबलव-तोर्नीरोगरोगार्त्तयो॰ । सौभाग्यासुभगत्वसगमजुषोस्तुल्येऽपि नृत्वेऽन्तर, यत्तत्कर्मनिबन्धन तदपि नो जीव विना युक्ति-मत् ॥ १ ॥ " अन्यत्राप्युक्तम्-" आत्मत्वेनाविशिष्टस्य॰ वैचित्र्य तस्य यद्वशात् । नरादिरूप तच्चित्रमदृष्ट कर्मसज्ञितम् ॥ १ ॥ " पौराणिका अपि कर्मसिद्धि प्रतिपद्यन्ते, तथा च ते प्राहु -" यथा यथा पूर्वकृतस्य कर्मण॰, फल निधानस्थ-मिवावतिष्ठते । तथा तथा तत्प्रतिपादनोद्यता, प्रदीपहस्तेव मति प्रवर्तते ॥ १ ॥ यत्तत्पुरा कृत कर्म, न स्मरन्तीह मानवा । तदिद पाण्डवश्रेष्ठ, दैवमित्यभिधीयते ॥ २ ॥ मुदितान्यपि मित्राणि, सुक्रुद्धाश्चैव शत्रव॰ । न हीमे तत्करि-

१ त्रिपचाशत्तमगाथारूपतया

ब्यन्ति, यन्न पूर्वं कृतं त्वया ॥ २ ॥ ” बौद्धा अप्याहुः—“ इत एकनवतौ कल्पे, शक्त्या मे पुरुषो हतः । तेन कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः ॥ १ ॥ तदपि कर्म पुद्गलस्वरूपं प्रतिपत्तव्यं, नामूर्त्तम्, अमूर्त्तत्वे हि कर्मणः सकाशादात्मनामनुग्रहोपघातासंभवात्, आकाशादिवत् । यदाह—“ [1]अन्ने उ अमुत्तं चिय, कम्मं मन्नंति वासणारूवं । तं तु न जुज्जइ तत्तो उवघायाणुग्गहाभावा ॥ १ ॥ नागासं उवघायं, अणुग्गहं वावि कुणइ सत्ताणमित्यादि । ” तच्च कर्म प्रवाहतोऽनादि “ [2]अणाइयं तं पवाहेण ” इति वचनात् । यदि प्रवाहापेक्षयापि सादि स्यात्तदा जीवानां पूर्वं कर्मवियुक्तत्वमासीत् पश्चादकर्मकस्य जीवस्य कर्मणा सह संयोगः संजातः, एवं सति मुक्तानामपि कर्मयोगः स्यात्, अकर्मकत्वाविशेषात्, ततश्च मुक्ता अमुक्ताः स्युः । न चेदमिष्टम् । तस्मादनादिर्जीवस्य कर्मणा सह संयोगः । नन्वनादिसंयोगे कथं वियोगो जीवस्य कर्मणा सह? उच्यते—अनादिसंयोगेऽपि वियोगो दृष्टः कांचनोपलवत् । तथाहि—कांचनोपलानां यद्यप्यनादिसंयोगस्तथापि तथाविधसामग्रीसद्भावे धमनादिना किट्टवियोगो दृष्टः, एवं जीवस्यापि ज्ञानदर्शनचारित्रध्यानानलादिनाऽनादिकर्मणा सह वियोगः सिद्धो भवति । यदाह भगवान् भाष्यसुधांभोनिधिः—“ [3]जह इह कंचणोवलसंयोगोणाइसंतइगउवि । वुच्छिज्जइ सोवायं तह जोगो जीवकम्माणं ॥ १ ॥ ” इत्यलं विस्तरेण ॥ १ ॥

---

१ अन्ये तु अमूर्तं चैव कर्म मन्यन्ते वासनारूपम् । तत् तु न युज्यते तत उपघातानुग्रहाभावात् ॥ १ ॥ नाकाशमुपघातमनुग्रहं वापि कुरुते सत्त्वानाम्. २ अनादिकं तत्प्रवाहेण, ३ यथेह कांचनोपलसंयोगोऽनादिसन्ततिगतोऽपि । व्युच्छिद्यते सोपायं तथा योगो जीवकर्मणोः

अथ कतिभेदं कर्मेत्याशङ्क्याह–

**पयइठिइरसपएसा त चउहा मोयगस्स दिठंता । मूलपगइठउत्तरपगईअडवन्नसयभेयं ॥ २ ॥**

टीका–तत्कर्म पूर्वव्यावर्णितशब्दार्थं ' चतुर्धा ' चतु प्रकार चतुर्भेद भवतीति शेष । कथमित्याह–"पयइठिइरसपएसत्ति " इह " गम्ययप कर्माधारे " सिद्धहेम २-२-७४ इति पचमी यथा प्रासादात्प्रेक्षत इति । ततश्च प्रकृतिस्थितिरसप्रदेशानाश्रित्य प्रकृतिबन्धस्थितिबन्धरसबन्धप्रदेशबन्धतयेत्यर्थ । तत्र स्थित्यनुभागप्रदेशबन्धाना य. समुदाय स प्रकृतिबन्ध , अध्यवसायविशेषगृहीतस्य कर्मदलिकस्य यत् स्थितिकालनियमन स स्थितिबन्ध , कर्मपुद्गलानामेव शुभोऽशुभो वा घात्यघाती वा यो रस सोऽनुभागबन्धो रसबन्ध इत्यर्थ', कर्मपुद्गलानामेव यद्ग्रहण स्थितिरसनिरपेक्षदलिकसख्या प्राधान्येनैव करोति स प्रदेशबन्ध । उक्त च–" ठिइबध दलस्स ठिई, पएसबधो पएसगहण जं । ताण रसो अणुभागो तस्समुदाओ पगइबधो ॥ १ ॥ " अन्यत्राप्युक्तम्–" प्रकृति. समुदाय स्यात्, स्थिति कालावधारणम् । अनुभागो रस प्रोक्त , प्रदेशो दलसचय ॥ १ ॥ " इद च प्रकृतिस्थितिरसप्रदेशाना स्वरूप मोदकस्य कणिक्कादिमयलड्डुकस्य दृष्टान्तेन भावनीयम् । दृष्टान्तादित्यत्र तृतीयार्थे पचमी । यदाह पाणिनि. स्वप्राकृतलक्षणे " व्यत्ययोऽप्यासा"मिति । यथा वातविनाशिद्रव्योत्पन्नो मोदक प्रकृत्या वातमुपशमयति, पित्तोपशमकद्रव्यनिर्वृत्त पित्तम्, कफापहारिद्रव्यसमुद्भूतः

---

१ स्थितिबन्धो दलस्य स्थिति , प्रदेशबध प्रदेशग्रहण यत् । तासा ( कर्मवर्गणाना ) रसोऽनुभागस्तत्समुदाय प्रकृतिबन्ध १

कफमित्येवंस्वभावा प्रकृतिः। स्थितिस्तु तस्यैव कस्यचिद्दिनमेकं, अपरस्य तु दिनद्वयं एवं यावत्कस्यचिन्मासादिकमपि कालं भवति ततः परं विनाशादिति। रसः पुनः स्निग्धमधुरादिरूपः तस्यैव कस्यचिदेकगुणोऽपरस्य द्विगुणोऽन्यस्य त्रिगुण इत्यादिकः। प्रदेशाश्च कणिक्कादिरूपास्तस्यैव कस्यचिदेकप्रसृतिप्रमाणा, अन्यस्य तु प्रसृतिद्वयप्रमाणा, यावदपरस्य सेतिकादिप्रमाणाः। एवं कर्मणोऽपि कस्यचिज्ज्ञानाच्छादनस्वभावा प्रकृतिः, अपरस्य दर्शनावरणरूपा, अन्यस्याह्लादादिप्रदानलक्षणा, कस्यचित् सम्यग्दर्शनादिविघातजननस्वभावेत्यादि। स्थितिश्च तस्यैव कस्यचित्त्रिंशत्सागरोपमकोटीकोटीरूपा, अपरस्य तु सप्ततिसागरोपमकोटीकोटिलक्षणेत्यादि। रसस्त्वनुभागशब्दवाच्यस्तस्यैवैकस्थानद्विस्थानत्रिस्थानादिरूपः। प्रदेशा अल्पबहुतरबहुतमादिरूपा इति। पुनः किंविशिष्टं तत्कर्म भवतीत्याह–"मूलपगइठ्ठउत्तरपगईअडवन्नसयभेयंति" मूलप्रकृतयः सामान्यरूपा अष्टावष्टसंख्या यत्र तन्मूलप्रकृत्यष्ट, उत्तरप्रकृतीनां मूलप्रकृतिविशेषरूपाणामष्टपंचाशच्छतभेदा यस्य तदुत्तरप्रकृत्यष्टपंचाशच्छतभेदमिति ॥ २ ॥

अधुना मूलप्रकृतिभेदतस्तस्यैवाष्टविधत्वमुत्तरप्रकृतिभेदतोऽष्टपंचाशच्छतभेदत्वं च प्रदर्शयन् स्वनामग्राहमष्टौ मूलभेदानेकैकस्य च भेदस्य यस्य यावन्त उत्तरभेदास्तांश्च वक्तुमाह–

**इह नाणदंसणावरणवेयमोहाउनामगोयाणि। विग्घं च पणनवदुअठ्ठवीसचउतिसयदुपणविहं ॥३॥**

टीका–इह प्रवचने "कर्मोच्यत"इति शेषः "नाणदंसणावरणत्ति" ज्ञायते परिच्छिद्यते वस्त्वनेनेति ज्ञानं, ज्ञप्तिर्वा ज्ञानं,

सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोध इत्यर्थ । तथा दृश्यतेऽनेनेति दर्शन, दृष्टिर्वा दर्शन, सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोध । आव्रियते आच्छाद्यतेऽनेनेत्यावरण, यद्वावृणोत्याच्छादयति "रम्यादिभ्य कर्तरि ५-३-१२६ अनटि प्रत्यये आवरण,- मिथ्यात्वादिसचिवजीवव्यापाराहृतकर्मवर्गणान्त पाती विशिष्टपुद्गलसमूह । ततो ज्ञान च दर्शन च ज्ञानदर्शने तयोरावरण ज्ञानदर्शनावरण ज्ञानावरण दर्शनावरण चेत्यर्थ । तथा वेद्यते सुखदु-खरूपतयानुभूयते यत्तद्वेद्यम्, "य एच्चात" ५-१-२८ इति ( सूत्रेण ) यप्रत्यये वेदनीय, यद्यपि सर्व कर्म वेद्यते तथापि पकजादिशब्दवद्वेद्यशब्दस्य रूढिविषयत्वात्सातासातरूपमेव कर्म वेद्यमित्युच्यते न शेषम् । तथा मोहयति जानानमपि प्राणिन सदसद्विवेकविकल करोतीति मोह ( ५-१-५० लिहादिभ्य ) "लिहादित्वादच्प्रत्यय " मोहनीयमित्यर्थ । तथा एति गच्छत्यनेन गत्यन्तरमित्यायु, यद्वा एति आगच्छति प्रतिबन्धकता स्वकृतकर्मावाप्तनरकादिदुर्गतेर्निर्गमितुम नसोपि जन्तोरित्यायु, उभयत्रापि ( इणो णित् ९९८ ) उणादिको "णुस् प्रत्यय ", यद्वायाति भवाद्भवान्तर सक्रामता जन्तूना निश्चयेनोदयमागच्छति "पृषोदरादय" ३-२-१५५ इत्यायु शब्दसिद्धि, यद्यपि च सर्व कर्मोदयमायाति तथाप्यस्त्यायुषो विशेषो, यत शेष कर्म बद्ध सत् किञ्चित्तस्मिन्नेव भव उदयमायाति, किञ्चित्तु प्रदेशोदययुक्त जन्मान्तरेऽपि स्वविपाकत उदय नायात्येवेत्युभयत्रापि व्यभिचार, आयुषि त्वय नास्ति, बद्धस्य तस्मिन्नेव भवेऽवेदनात्, जन्मान्तरसक्रान्तौ तु स्वविपाकतोऽवश्य वेदनादिति विशिष्टस्यैवोदयागमनस्य विवक्षितत्वात्तस्य चायुष्येव सद्भावात्तस्यैवैतन्नाम, अथवा

१ जानानमिति पाठान्तरम्

आयान्त्युपभोगाय तस्मिन्नुदिते सति तद्भवप्रायोग्याणि सर्वाण्यपि शेषकर्माणीत्यायुः। तथा नामयति गतिजातिप्रभृति-पर्यायानुभवनं प्रति प्रवणयति जीवमिति नाम। तथा "गुङ्" शब्दे, गूयते शब्द्यत उच्चावच्चैः शब्दैरात्मा यस्मात्तद्गोत्रं। ततो ज्ञानदर्शनावरणं च वेद्यं च मोहश्चायुश्च नाम च गोत्रं च ज्ञानदर्शनावरणवेद्यमोहायुर्नामगोत्राणि। तथा विशेषेण हन्यन्ते दानादिलब्धयो विनाश्यन्तेऽनेनेति "स्थास्नायुधिव्याधिहनिभ्यः कः" (स्थादिभ्यः कः ५-३-८२) इति कप्रत्यये विघ्नमन्तरायम्। "चः" समुच्चये। "पणनवदुअट्ठवीसेत्यादि" अत्र द्वन्द्वगर्भो बहुव्रीहिसमासः। भावार्थः पुनरयम्—पञ्चविधं ज्ञानावरणं, नवविधं दर्शनावरणं, द्विविधं वेद्यं, अष्टाविंशतिविधो मोहः, चतुर्विधमायुः, त्रिशतविधं नाम, त्रिभिरधिकं शतं त्रिशतं त्र्युत्तरशतविधमित्यर्थः, द्विविधं गोत्रं, पञ्चविधं विघ्नमिति। अत्राह—नन्वित्थं ज्ञानावरणाद्युपन्यासे किंचिदस्ति प्रयोजनमुत यथाकथंचिदेष प्रवृत्त इति। अस्तीति ब्रूमः। किं तदिति चेदुच्यते—इह ज्ञानं दर्शनं च जीवस्य स्वतत्त्वभूतं, तदभावे जीवत्वस्यैवायोगात्, चेतनालक्षणो हि जीवस्ततः स कथं ज्ञानदर्शनाभावे भवेत्, ज्ञानदर्शनयोरपि च मध्ये प्रधानं ज्ञानं, तद्वशादेव सकलशास्त्रादिविचारसंततिप्रवृत्तेः। अपि च-सर्वा अपि लब्धयो जीवस्य साकारोपयोगोपयुक्तस्योपजायन्ते, न दर्शनोपयोगोपयुक्तस्य, "[1]सव्वाउ लद्धीउ सागारोवउगोवउत्तस्स, नो अणागारोवउगोवउत्तस्स" इति वचनप्रामाण्यात्। अन्यच्च यस्मिन् समये सकलकर्मविनिर्मुक्तो जीवः संजायते, तस्मिन् समये ज्ञानोपयोगोपयुक्त एव, न दर्शनोपयोगोपयुक्तः, दर्शनोपयोगस्य द्वितीयसमये भावात्, ततो ज्ञानं प्रधानं तदावारकं

---

१ सर्वा लब्धयः साकारोपयोगोपयुक्तस्य नोऽनाकारोपयोगोपयुक्तस्य.

च ज्ञानावरण कर्म ततस्तत्प्रथममुक्त, तदनन्तर च दर्शनावरण, ज्ञानोपयोगाच्च्युतस्य दर्शनोपयोगेऽवस्थानात्, एते च ज्ञानदर्शनावरणे स्वविपाकमुपदर्शयन्ती यथायोगमवश्य सुखदु'खरूपवेदनीयकर्मविपाकोदयनिमित्ते भवतः। तथाहि—ज्ञानावरणमुपचयोत्कर्षप्राप्त विपाकतोऽनुभवन् सूक्ष्मसूक्ष्मतरवस्तुविचारासमर्थमात्मान जानान. खिद्यते भूरिलोक', ज्ञानावरणकर्मक्षयोपशमात् पाटवोपेतश्च सूक्ष्मतराणि वस्तूनि निजप्रज्ञया विजानानो बहुजनातिशायिनमात्मान पश्यन् सुख वेदयते। तथातिनिविडदर्शनावरणविपाकोदये जात्यन्धादिरनुभवति दु खसन्दोह वचनगोचरातिक्रान्तम्। दर्शनावरणक्षयोपशमपटिष्ठतापरिकरितश्च स्पष्टचक्षुराद्युपेतो यथावद्वस्तुनिकुरंब सम्यगवलोकमानो वेदयतेऽमन्दमानन्दसन्दोह, तत एतदर्थप्रतिपत्त्यर्थ दर्शनावरणानन्तरं वेदनीयग्रहणम्। वेदनीयं च सुखदु खे जनयति, अभीष्टानभीष्टविषयसबन्धे चावश्यं ससारिणा रागद्वेषौ, तौ च मोहनीयहेतुकौ, तत एतदर्थप्रतिपत्तये वेदनीयानन्तर मोहनीयग्रहण, मोहनीयमूढाश्च जन्तवो बह्वारम्भपरिग्रहप्रभृतिकर्मादानासक्ता नरकाद्यायुष्कमारभयन्ति ततो मोहनीयानन्तरमायुर्ग्रहणम्। नरकाद्यायुष्कोदये चावश्य नरकगत्यादीनि नामान्युदयमायान्ति, तत आयुरनन्तर नामग्रहणम्। नामकर्मोदये च नियमादुच्चनीचान्यतरगोत्रकर्मविपाकोदयेन भवितव्यमतो नामग्रहणानन्तर गोत्रग्रहणम्। गोत्रोदये चोच्चै कुलोत्पन्नस्य प्रायो दानलाभान्तरायादिक्षयो भवति, राजप्रभृतीना प्राचुर्येण दानलाभादिदर्शनात्, नीचै'कुलोत्पन्नस्य तु दानलाभान्तरायाद्युदयो, नीचजातीना तथा दर्शनात्, तत एतदर्थप्रतिपत्त्यर्थ गोत्रानन्तरमन्तरायग्रहणमिति ॥ ३ ॥

अथ "यथोद्देशं निर्देश" इति न्यायात् प्रथमं तावत् पंचधा ज्ञानावरणं व्याचिख्यासुराह—

**मइसुयओहीमणकेवलाणि नाणाणि तत्थ मइनाणं। वंजणवग्गह चउहा मणनयणविणिंदियचउक्का॥४॥**

टीका—इह ज्ञानशब्दस्य प्रत्येकं संबन्धान्मतिज्ञानं, श्रुतज्ञानमवधिज्ञानं, "मणत्ति" पदैकदेशे पदसमुदायोपचारान्मनःपर्यवज्ञानं मनःपर्यायज्ञानं वा, केवलज्ञानं। तत्र "बुधिं मनिं च ज्ञाने" मननं मतिः, यद्वा मन्यते इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनयेति मतिर्योग्यदेशावस्थितवस्तुविषय इन्द्रियमनोनिमित्तोऽवगमविशेषः, मतिश्च सा ज्ञानं च मतिज्ञानं, इदं चागमे आभिनिबोधिकज्ञानमुच्यते। यदाह भगवान् देवर्द्धिक्षमाश्रमणः—"[१]नाणं पंचविहं पन्नत्तं, तं जहा आभिणिबोहियनाणं सुयनाणं ओहिनाणं मणपज्जवनाणं केवलनाणं"। तत्र चायमाभिनिबोधिकज्ञानशब्दार्थः—अभीत्याभिमुख्ये, नीति नैयत्ये, ततश्चाभिमुखो वस्तुयोग्यदेशावस्थानापेक्षी नियत इन्द्रियमनः समाश्रित्य स्वस्वविषयापेक्षी बोधनं बोधोऽभिनिबोधः, स एवाभिनिबोधिकं ७-२-१६९ विनयादिभ्यः "विनयादेराकृतिगणत्वादिकण् प्रत्ययः"। अभिनिबुध्यत इत्यभिनिबोध इति कर्तरि "लिहादित्वादच्" वा। यद्वाभिनिबुध्यते आत्मना स इत्यभिनिबोध इति ५-३-१८ भावाकर्त्रोः कर्मणि घञ् स एवाभिनिबोधिकमिति तथैव, आभिनिबोधिकं च तज्ज्ञानं चाभिनिबोधिकज्ञानम्। तथा श्रवणं श्रुतमभिलापप्लावितार्थग्रहणहेतुरुपलब्धिविशेषः, एवमाकारं वस्तु घटशब्दाभिलाप्यं जलधारणाद्यर्थक्रियासमर्थमित्यादिरूपतया प्रधानी-

---

१ ज्ञानं पंचविधं प्रज्ञप्तं, तद्यथाभिनिबोधिकज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं.

कृतत्रिकालसाधारणसमानपरिणाम शब्दार्थपर्यालोचनानुसारीन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थ, श्रुत च तज्ज्ञान च श्रुतज्ञानम्। तथावधानमवधिरिन्द्रियाद्यनपेक्षमात्मन' साक्षादर्थग्रहणम्, अत एवेद प्रत्यक्षज्ञानम्। यदुक्तं नन्द्यध्ययने- "नो' इंदियपच्चक्ख तिविह पन्नत्त, त जहा ओहिनाणपच्चक्ख मणपज्जवनाणपच्चक्ख केवलनाणपच्चक्खं" अथवावशब्दोऽध -शब्दार्थ, अत्र अधोऽधो विस्तृत वस्तु धीयते परिच्छिद्यते ऽनेनेत्यवधि । यद्वावधिर्मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा, तदुपलक्षितं ज्ञानमप्यवधि, अवधि च तज्ज्ञान चावधिज्ञानम्। तथा परि सर्वतोभावे, अवनमव' "तुदादिभ्योऽनकावित्यधिकारेऽकितौ चेत्यनेन ( तुदादिविपगुहिभ्य. कित् ५ ) ( सूत्रेण ) "औणादिकोऽकारप्रत्यय " अवन गमन वेदनमिति पर्याया, परिअव पर्यव', मनसि मनसो वा पर्यवो मन पर्यव सर्वतस्तत्परिच्छेद इत्यर्थ, मन'पर्यवश्च स ज्ञान च मन पर्यवज्ञानम्। यद्वा मन पर्यायज्ञानम्। तत्र सञ्ज्ञिभिर्जीवै काययोगेन गृहीतानि मनःप्रायोग्यवर्गणाद्रव्याणि चिन्तनीयवस्तुचिन्तनव्यापृतेन मनोयोगेन मनस्त्वेन परिणमय्यालम्ब्यमानानि मनासीत्युच्यन्ते, तेषा मनसा पर्यायाश्चिन्तनानुगताः परिणामा मन पर्यायास्तेषु तेषा वा सबन्धि ज्ञान मन पर्यायज्ञान, यद्वात्मभिर्वस्तुचिन्तने व्यापारितानि मनासि पर्येति अवगच्छतीति मन पर्याय, "कर्मणोऽण्" इति (सूत्रेण) अण् प्रत्यय, मन पर्याय च तज्ज्ञान च मन पर्यायज्ञानम्। तथा केवलमेक मत्यादिज्ञानरहितत्वात् "नट्ठम्मि उ छाउमत्थिए नाणे" इति वचनप्रामाण्यात् । आह-यदि मत्यादीनि ज्ञानानि स्वस्वावरणक्षयोपशमजा-

१ नोइन्द्रियप्रत्यक्ष त्रिविध प्रज्ञप्त, तद्यथावधिज्ञानप्रत्यक्ष मन पर्यवज्ञानप्रत्यक्ष केवलज्ञानप्रत्यक्षम् २ नष्टे छाद्मस्थिके ज्ञाने.

वेऽपि प्रादुःषन्ति ततो निःशेषतः स्वस्वावरणक्षये सुतरां भवेयुश्चारित्रपरिणामवत्, तत्कथं तेषा तदानीमभावः, आह च-"[1]आवरणदेसविगमे, जाइं विज्जंति मइसुयाईणि। आवरणसव्वविगमे, कह ताइ न हुंति जीवस्स" ॥ १ ॥ इति, उच्यते- इह यथा सहस्रभानोरतिसमुन्नतघनाघनघनपटलान्तरितस्यापान्तरालावस्थितकटकुड्याद्यावरणविवरप्रविष्टप्रकाशो घटपटादीन् प्रकाशयति, तथा केवलज्ञानावरणावृतस्य केवलज्ञानस्यापान्तरालावस्थितमतिज्ञानावरणादिक्षयोपशमरूपविवरविनिर्गतप्रकाशो जीवादीन् प्रकाशयति, स च तथा प्रकाशयन्मतिज्ञानमित्यादिलक्षणं तत्तत्क्षयोपशमानुरूपमभिधानमुद्वहति, ततो यथा सकलघनपटलकटकुड्याद्यावरणापगमे स तथाविधः प्रकाशः सहस्रभानोरस्पष्टरूपो न भवति, किंतु सर्वात्मना स्फुटरूपोऽन्य एव, तथेहापि सकलकेवलज्ञानावरणमतिज्ञानाद्यावरणविलये न तथाविधो मतिज्ञानादिसंज्ञितः केवलज्ञानस्य प्रकाशो भवति, किं तु सर्वात्मना यथावस्थितं वस्तु परिच्छिन्दन् परिस्फुटरूपोऽन्य एवेत्यदोषः। उक्तं च श्रीपूज्यैः-"[2]कटविवरागयकिरणा, मेहंतरियस्स जह दिणेसस्स। ते कडमेहावगमे न हुंति जह तह इमाइं पि ॥ १ ॥" अन्यैरपि न्यगादि-"मलविद्धमणेर्व्यक्तिर्यथानेकप्रकारतः। कर्मविद्धात्मविज्ञप्तिस्तथानेकप्रकारतः ॥ १ ॥" यथा जात्यस्य रत्नस्य निःशेषमलहानितः। स्फुटैकरूपाभिव्यक्तिर्विज्ञप्तिस्तद्वदात्मनः ॥ २ ॥ अन्ये पुनराहुः-सन्त्येव मतिज्ञानादीन्यपि सयोगिकेवल्यादौ, केवलमफलत्वात् सन्त्यपि तदानीं न विवक्ष्यन्ते, यथा सूर्योदये नक्षत्रादीनि। उक्तं च-

---

१ आवरणदेशविगमे, यानि विद्यन्ते मतिश्रुतादीनि। आवरणसर्व (सर्वावरण) विगमे, कथं तानि न भवन्ति जीवस्य ॥ १ ॥

२ कटविवरागतकिरणा, मेघान्तरितस्य यथा दिनेशस्य। ते कटमेघापगमे, न भवन्ति यथा तथेमान्यपि ॥ १ ॥

"अन्ने आभिणिबोहियनाणाईणिवि जिणस्स विज्जंति । अफलाणि य सूरुदए जहेव नक्खत्तमाईणि ॥१॥" शुद्धं वा केवलं तदावरणमलकलंकपंकापगमात्। सकलं वा केवलं तत्प्रथमतयैव निःशेषतदावरणविगमतः संपूर्णोत्पत्तेः । असाधारणं वा केवलमनन्यसदृशत्वात् । अनन्तं वा केवलं ज्ञेयानन्तत्वात्, अपर्यवसितानंतकालावस्थायित्वाद्वा । निर्व्याघातं वा केवलं लोकेऽलोके वा क्वापि व्याघाताभावात् । केवलं च तज्ज्ञानं च केवलज्ञानं यथावस्थितसमस्तभूतभवद्भाविभावस्वभावावभासि ज्ञानमिति भावना ।' आह-नन्वेतेषां पञ्चानां ज्ञानानामित्थं क्रमोपन्यासे किं कारणम् । उच्यते-इह मतिश्रुते तावदेकत्र वक्तव्ये, परस्परमनयोः स्वामिकालकारणविषयपरोक्षत्वसाधर्म्यात् । तथाहि, य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्यापि "जत्थ मइनाणं तत्थ सुयनाणं, जत्थ सुयनाणं, तत्थ मइनाणं" इत्यादिवचनप्रामाण्यात्, ततः स्वामिसाधर्म्यम् । तथा यावानेव मतिज्ञानस्य स्थितिकालस्तावानेव श्रुतज्ञानस्यापि, तत्र प्रवाहापेक्षयातीतानागतवर्तमानरूपः सर्वः कालः, अप्रतिपतितैकजीवापेक्षया षट्षष्टिसागरोपमाणि समधिकानि, उक्तं च-"दोवारे विजयादिसु, गयस्स तिन्नच्चुए अहव ताइं । अइरेगं नरभविय नाणाजीवाण सवद्धा ॥ १ ॥" इति कालसाधर्म्यम् । यथा चेन्द्रियनिमित्तं मतिज्ञानं तथा श्रुतज्ञानमपीति कारणसाधर्म्यम् । तथा यथा मतिज्ञानमादेशतः सर्वद्रव्यादिविषयमेव श्रुतज्ञानमपीति विषयसाधर्म्यम् ।

१ अन्ये आभिनिबोधिकज्ञानादीन्यपि जिनस्य विद्यन्ते । अफलानि च सूर्योदये यथैव नक्षत्रादीनि ॥ १ ॥ २ यत्र मतिज्ञानं तत्र श्रुतज्ञानं यत्र श्रुतज्ञानं तत्र मतिज्ञानम् । ३ द्वौ वारौ विजयादिषु गतस्य, त्रीन् ( वारान् ) अच्युतेऽथवा तानि ( सागराणि ६६ ) । अतिरेकं नरभविकं नानाजीवानां सर्वाद्धा

तथाहि, यथावधिज्ञानं छद्मस्थस्य भवति तथा मनःपर्यायज्ञानमपि इति छद्मस्थसाधर्म्यम् । तथा यथावधिज्ञानं रूपिद्रव्यविषयं तथा मनःपर्यायज्ञानमपि, तस्य मनःपुद्गलालंबनत्वादिति विषयसाधर्म्यम् । तथा यथावधिज्ञानं क्षायोपशमिके भावे वर्तते तथा मनःपर्यायज्ञानमपीति भावसाधर्म्यम् । तथा यथावधिज्ञानं प्रत्यक्षं तथा मनःपर्यायज्ञानमपीति प्रत्यक्षत्वसाधर्म्यम् । उक्तं च–"[1]कालविवज्जयसामित्तलाभसाहम्मओवही तत्तो । माणसमित्तो छउमत्थविसयभावाइसाहम्मा॥१॥" तथा मनःपर्यायज्ञानानन्तरं केवलज्ञानस्योपन्यासः, सर्वोत्तमत्वादप्रमत्तयतिस्वामिसाधर्म्यात्सर्वावसाने लाभाच्च । तथाहि, सर्वाण्यपि मतिज्ञानादीनि ज्ञानानि देशतः परिच्छेदकानि, केवलज्ञानं तु सकलवस्तुस्तोमपरिच्छेदकं सर्वोत्तमम्, सर्वोत्तमत्वाच्चान्ते सर्वशिरःशेखरकल्पं उपन्यस्तम् । तथा यथा मनःपर्यवज्ञानमप्रमत्तयतेरेवोत्पद्यते तथा केवलज्ञानमपीत्यप्रमत्तयतिस्वामिसाधर्म्यम् । तथा यः सर्वाण्यपि ज्ञानानि समासादयितुं योग्यः स नियमात् सर्वज्ञानावसाने केवलज्ञानमवाप्नोति, ततः सर्वान्ते केवलमुक्तम् । उक्तं च–"[2]अंते केवलमुत्तमजइसामित्तावसाणलाभाओ" इति । व्याख्यातानि नामसंस्कारमात्रेण पंचापि ज्ञानानि । अथ तान्येव सविस्तरं व्याचिख्यासुः प्रथमं मतिज्ञानं प्रकटयन्नाह– "तत्थ मइनाणं" इत्यादि–तत्र तेषु पंचसु ज्ञानेषु मतिज्ञानमष्टाविंशतिभेदं भवतीत्युत्तरगाथायां संबन्धः । इह किल द्वेधा मतिज्ञानं श्रुतनिश्रितमश्रुतनिश्रितं च । तत्र यत् प्रायः श्रुताभ्यासमन्तरेणापि सहजविशिष्टक्षयोपशमवशादुत्पद्यते तदश्रुतनिश्रितमौ-

---

१ कालविपर्ययस्वामित्वलाभसाधर्म्यतोऽवधिः ततः । मानसं (मनःपर्यायं) इतः छद्मस्थविषयभावादिसाधर्म्यात्. २ अन्ते केवलमुत्तमयतिस्वामित्वावसानलाभात्.

त्पत्तिक्यादिबुद्धिचतुष्टयम्, यदाह श्रीदेवर्द्धिवाचक —"से किं त मइनाण, मइनाण दुविह पन्नत्त, त जहा, सुयनिस्सिय च असुयनिस्सिय च। से किं त अस्सुयनिस्सिय, अस्सुयनिस्सिय चउविह पन्नत्त, तजहा, उप्पत्तिया वेणइया कम्मिया परिणामिया। बुद्धी चउविहा वुत्ता पचमा नोवलब्भई"। तत्रौत्पत्तिकी बुद्धिर्यथा रोहकस्य, वैनयिकी बुद्धि पददर्शनात्क-रिण्यादिज्ञायकच्छात्रस्येव, कर्मजा कर्षकस्येव, पारिणामिकी श्रीवज्रस्वामिन इव। यत्तु पूर्व श्रुतपरिकर्मितमतेर्व्यवहारकाले पुनरश्रुतानुसारितया समुत्पद्यते तत् श्रुतनिश्रितम्। यदुक्त श्रीविशेषावश्यके—"पुव्व सुयपरिकम्मियमइस्स जं सपय सुया-ईय। त निस्सियमियर पुण अणिस्सिय मइचउक्क त ॥१॥ तच्चतुर्धा जवति तद्यथा—अवग्रह ईहाऽपायो धारणा। यदाह—"[3]से किं त सुयनिस्सिय मइनाण, सुयनिस्सिय मइनाणं चउविह पन्नत्त, तं जहा उग्गहो ईहा अवाए धारणा"। पुन-रवग्रहो द्वेधा व्यंजनावग्रहोऽर्थावग्रहश्च। आह च—"से[4] किं त उग्गहे, उग्गहे दुविहे पन्नत्ते, तजहा, वजणुग्गहे अत्थु-ग्गहे य"। तत्र व्यज्यते प्रकटीक्रियतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनम्। आह च—"वंजिज्जइ जेणत्थो, घडुव्व दीवेण

१ अथ किं तन्मतिज्ञान, मतिज्ञान द्विविध प्रज्ञप्त, तद्यथा, श्रुतनिश्रित चाश्रुतनिश्रित च। अथ किं तदश्रुतनिश्रितम्, अश्रुतनिश्रित चतुर्विध प्रज्ञप्त, तद्यथा, औत्पत्तिकी वैनयिकी कर्मजा पारिणामिकी बुद्धिश्चतुर्विधा प्रोक्ता पचमी नोपलभ्यते २ पूर्वं श्रुतपरिकर्मितमतेर्य-त्साप्रत श्रुतातीत। तन्निश्रितमितरत्पुनरनिश्रित मतिचतुष्क तत् ३ अथ किं तत् श्रुतनिश्रित मतिज्ञान, श्रुतनिश्रित मतिज्ञान चतुर्विध प्रज्ञप्त, तद्यथा, अवग्रह ईहा अपाय धारणा ४ अथ कोऽसाववग्रह, अवग्रहो द्विविध प्रज्ञप्त, तद्यथा, व्यजनावग्रहोऽर्थावग्रहश्च। ५ व्यज्यते येनार्थं घट इव दीपेन व्यजन तच

वंजणं तं च "। तच्चोपकरणेन्द्रियं कदंबपुष्पातिमुक्तचन्द्रक्षुरप्रनानाकृतिसंस्थितश्रोत्रघ्राणरसनस्पर्शनलक्षणं शब्दगन्धरसस्पर्शपरिणतद्रव्यसंघातो वा। ततश्च व्यञ्जनेनोपकरणेन्द्रियेण व्यञ्जनानां शब्दादिपरिणतद्रव्याणामवग्रहणं परिच्छेदनमेकस्य व्यञ्जनशब्दस्य लोपाद्व्यञ्जनावग्रहः । किमपीदमित्यव्यक्तज्ञानरूपार्थावग्रहादधोऽव्यक्ततरं ज्ञानमित्यर्थः। अयं चतुर्धा। यदाह सूत्रकृत् "वंजणवग्गहचउहत्ति" स्पष्टं । चातुर्विध्यमेव भावयति "मणनयणविणिंदियचउक्कत्ति" मनश्च मानसं नयनं च लोचनं मनोनयने,मनोनयने विना मनोनयनविना,"नाम नाम्नैकार्थ्ये समासो बहुलमिति" ३-१-१८ (सूत्रेण) समासः। इन्द्रियाणां चतुष्कमिन्द्रियचतुष्कं तस्मादिन्द्रियचतुष्कात्, अत्र "गम्ययपः कर्माधारे" २-२-७४ इति पंचमी। मनोनयनवर्जमिन्द्रियचतुष्कमाश्रित्य व्यंजनावग्रहश्चतुर्धा भवतीति भावार्थः। उक्तं च नन्द्यध्ययने–"से किं तं वंजणुग्गहे, वंजणुग्गहे चउविहे पन्नत्ते, तंजहा, सोइंदियवंजणुग्गहे घाणिंदिअवंजणुग्गहे रसणिंदियवंजणुग्गहे फासिंदियवंजणुग्गहे"। मनोनयनयोर्वर्जनं किमर्थमिति चेदुच्यते, मनोनयनयोरप्राप्तकारित्वात्, अप्राप्तकारित्वं च विषयकृतानुग्रहोपघातशून्यत्वात्, प्राप्तकारित्वे पुनरनलजलशूल्यादीनां चिन्तनेऽवलोकने च दहनक्लेदनपाटनादयः स्युः। अत्र च विषयदेशं गत्वा न पश्यति, प्राप्तं चार्थं नालंबत इत्येतावन्नियम्यते, मूर्तिमता पुनः प्राप्तेन भवत एवानुग्रहोपघातौ दिनकरकिरणादिनेति। अन्यस्त्वाह–व्यवहितार्थानुपलब्धेरनुमानात्प्राप्तकारित्वं लोचनस्येत्येतदयुक्तम्, अनैकान्ति-

---

१ अथ कोऽसो व्यंजनावग्रहः, व्यंजनावग्रहश्चतुर्विधः प्रज्ञप्तः, तद्यथा, श्रोत्रेन्द्रियव्यंजनावग्रहो घ्राणेन्द्रियव्यंजनावग्रहो रसनेन्द्रियव्यंजनावग्रहः स्पर्शेन्द्रियव्यंजनावग्रहः.

कत्वात् काचाभ्रपटलस्फटिकान्तरितस्याप्युपलब्धे । स्यादेतत्, नायना रश्मयो निर्गत्य तमर्थं गृह्णन्तीति दर्शने रश्मीना तेजसत्वात्तेजोऽव्यैरप्रतिस्खलनाददोष इति, एतदप्ययुक्तं, महाज्वालादौ प्रतिस्खलनोपलब्धेरित्यत्र बहु वक्तव्यं, तत्तु नोच्यते, ग्रन्थगहनताप्रसंगात् । व्यञ्जनावग्रहस्य च कालो जघन्य आवलिकासख्येयभागतुल्य , उत्कृष्ट आनप्राणपृथक्त्वम् । उक्त च–"वंजणवग्गहकालो आवलियअसखभागतुल्लो उ । थोवो उक्कोसो पुण आणापाणप्पहुत्तंति " ॥ १ ॥ इत्युक्तश्चतुर्धा व्यजनावग्रह ॥ ४ ॥

अथार्थावग्रहादीन् व्याचिख्यासुराह–

अत्थुग्गहईहावायधारणा करणमाणसेहि छहा । इय अठवीसभेय चउदसहा वीसहा व सुय ॥५॥

टीका–अर्यत इत्यर्थस्तस्य शब्दरूपादिभेदानामन्यतरेणापि भेदेनानिर्धारितस्य सामान्यरूपस्यावग्रहणमर्थावग्रह , किमपीदमित्यव्यक्तज्ञानमित्यर्थः, स च करणमानसै षोढा भवति, तत्र करणानि चेन्द्रियाणि पच मानसं च मन करणमानसानि तै करणमानसै कृत्वा । इदमुक्त भवति-श्रोत्रेन्द्रियार्थावग्रहः, चक्षुरिन्द्रियार्थावग्रह , घ्राणेन्द्रियार्थावग्रह , रसनेन्द्रियार्थावग्रह , स्पर्शनेन्द्रियार्थावग्रहः, मानसार्थावग्रह इति षोढार्थावग्रह । तथावगृहीतस्यैव वस्तुन किमय भवेत् स्थाणुरेव न तु पुरुष इत्यादिवस्तुधर्मान्वेषणात्मक ज्ञानचेष्टनमीहा, ईहनमीहेति कृत्वा । "अरण्यमेतत् सवितास्तमागतो न

१ व्यजनावग्रहकाल आवलिकासंख्यभागतुल्य तु । स्तोक उत्कृष्ट पुनरानप्राणपृथक्त्वम् इति

चाधुना संभवतीह मानवः । प्रायस्तदेतेन खगादिभाजा भाव्यं स्मरारातिसमाननाम्ने[1]" त्याद्यन्वयधर्मघटनव्यतिरेकधर्मनिराकरणाभिमुखताऽलिंगितो ज्ञानविशेष ईहेति हृदयम् । सापि करणमानसैः षोढैव । तथेहितस्यैव वस्तुनः स्थाणुरेवायमिति निश्चयात्मको बोधविशेषोऽपायः, अयमपि करणमानसैः षोढा । तथा निश्चितस्यैवाविच्युतिस्मृतिवासनारूपं धरणं धारणा, सापि करणमानसैः षोढैव । अर्थावग्रहादीनां च कालप्रमाणमिदम्—"[2]उग्गह एक्कं समयं ईहावाया मुहुत्तमद्धं तु । कालमसंखं संखं च धारणा होइ नायव्वा ॥ १ ॥" इति । पूर्वोक्तप्रकारेणार्थावग्रहादीनां चतुर्णां प्रत्येकं षड्विधत्वात् व्यञ्जनावग्रहभेदचतुष्टयेन सह श्रुतनिश्रितं मतिज्ञानमष्टाविंशतिभेदं भवति, अश्रुतनिश्रितेन त्वौत्पत्तिक्यादिबुद्धिचतुष्टयेन सह द्वात्रिंशद्भेदं भवति । जातिस्मरणमपि समतिक्रान्तसंख्यातभवावगमस्वरूपं मतिज्ञानभेद एव । तथा चाचारांगटीका—"जातिस्मरणं त्वाभिनिबोधिकविशेषः" अथवा बहुबहुविधक्षिप्रानिश्रितासंदिग्धध्रुवाणां सेतराणामिति वचनादष्टाविंशतिरपि द्वादशधा भिद्यते, तथाहि, बहूनामपि श्रोतॄणामविशेषेण प्राप्तिविषयस्थेऽपि शंखभेर्यादितूर्यसमुदाये क्षयोपशमवैचित्र्यात् कश्चिदवग्रहादिभिर्बहु गृह्णाति, एकहेलास्फालितानामपि शंखभेर्यादितूर्याणां पृथक् पृथक् शब्दं गृह्णातीत्यर्थः ॥१॥ अपरस्त्वबहु गृह्णाति, अव्यक्ततूर्यध्वनिमेवोपलक्षत इत्यर्थः ॥ २ ॥ अन्यस्तु योषिदादिवाद्यमानतामधुरमन्द्रत्वादिबहुपर्यायोपेतान् शंखादिध्वनीन् पृथक् पृथक् जानातीति बहुविधग्राहीत्युच्यते ।३। एकद्विपर्यायोपेतांस्तु तानेव जानानोऽबहुविधग्राही ।४। अन्यस्तु क्षिप्रमचिरेणार्थं जानाति ।५। अन्यस्तु विमृश्य चिरेणेति ।६। अन्यस्त्वनिश्रितमलिंगं गृह्णाति

१ स्थाणुनाम्नेत्यर्थः. २ अवग्रह एकं समयमीहापायौ मुहूर्तमध्यं (भिन्नमुहूर्त्तं) तु । कालमसंख्यातं संख्यातं च धारणा भवति ज्ञातव्या ॥१॥

न पुन पताकयेव देवकुलम् ।७। अपरस्तु पताकया देवकुलमिव लिंगनिश्रया गृह्णाति ।८। यदसंशयं गृह्णाति तदसंदिग्धम् ।९। संशयोपेत तु यद्गृह्णाति तत्संदिग्धम् ।१०। यदेकदा गृहीत तत् सर्वदैवावश्य गृह्णाति, न पुन कालान्तरे तद्ग्रहणे परोपदेशादिकमपेक्षते तद्ध्रुवम् ।११। यत्पुन कदाचिदेव गृह्णाति, न सर्वदा तदध्रुवम् ।१२। एवमेतैर्द्वादशभिर्भेदैरवग्रहादय पूर्वोक्तभेदयुक्ता वस्तु गृह्णन्तीत्यष्टाविंशत्या द्वादशभिर्गुणितया त्रीणि शतानि षट्त्रिंशदधिकानि भवन्ति । यदाह भाष्यपीयूषपयोधि –"[1]जं बहुबहुविहखिप्पानिस्सियनिच्छियधुवेयरविभत्ता । पुणरुग्गहादर्ड तो त छत्तीसं तिसयभेय ॥१॥ [2]नाणासद्दसमूह बहु पिह मुणइ भिन्नजाईयं । बहुविहमणेगभेय इक्किक्कं निद्धमहुराई ॥ २ ॥ [3]खिप्पमचिरेण तं चिय सरूवर्ड त अणिस्सियमलिंग । निच्छियमसंसय ज धुवमच्चत न य कयाई ॥३॥" अश्रुतनिश्रितबुद्धिचतुष्टयेन सह चत्वारिंशदधिकानि त्रीणि शतानि मतिज्ञानस्य भेदाना भवति । यद्वा मतिज्ञान चतुर्विध, द्रव्यक्षेत्रकालभावभेदात् । यदाहुर्निर्दलिताज्ञानसञ्चारप्रसरा श्रीदेवर्द्धिवाचकवरा –"[4]त समासर्ड चउविह पन्नत्त, तजहा, दव्वर्ड खेत्तर्ड कालर्ड भावर्ड, दव्वर्ड ण

१ यत् बहुबहुविधक्षिप्रानिश्रितनिश्चितध्रुवेतरविभक्ता । पुनरवग्रहादयोऽतस्तत् षट्त्रिंशत्त्रिशतभेदम् ॥१॥ २ नानाशब्दसमूह बहु पृथक् जानाति भिन्नजातिकम् । बहुविधमनेकभेदमेकैक स्निग्धमधुरादि ॥ २ ॥ ३ क्षिप्रमचिरेण तच्चैव स्वरूपत तदनिश्रितमलिंगम् । निश्चित मसशय यद्ध्रुवमत्यन्त न च कदाचित् ॥३॥ ४ तत् समासतश्चतुर्विध प्रज्ञप्त, तद्यथा, द्रव्यत क्षेत्रत कालतो भावत, द्रव्यत णमिति वाक्यालकारे (एव सर्वत्र) आभिनिबोधिकज्ञानी आदेशेन सर्वद्रव्याणि जानाति न पश्यति, क्षेत्रत आभिनिबोधिकज्ञानी आदेशेन सर्वं क्षेत्र जानाति न पश्यति, कालत आभि० आदेशेन सर्वं काल जानाति न पश्यति, भावत आ० आदेशेन सर्वं भाव जानाति न पश्यति ।

आभिणिबोहियनाणी आएसेणं सवदवाइं जाणइ न पासइ, खित्तओ णं आभिणिबोहियनाणी आएसेणं सवं खित्तं जाणइ न पासइ, कालओ णं आभिणिबोहियनाणी आएसेणं सवकालं जाणइ न पासइ, भावओ णं आभिणिबोहियनाणी आएसेणं सवे भावे जाणइ न पासइ" इति। व्याख्यातं सप्रपंचं मतिज्ञानम्। सांप्रतं श्रुतज्ञानं व्याचिख्यासुराह—"चउदसहा वीसहा व सुयंति"। श्रुतं श्रुतज्ञानं चतुर्दशधा चतुर्दशभेदं विंशतिधा विंशतिप्रकारं वा भवतीति ॥ ५ ॥

तत्र प्रथमं श्रुतस्य चतुर्दशभेदान् व्याख्यानयन्नाह—

**अक्खर सन्नी संमं साइअं खलु सपज्जवसियं च। गमियं अंगपविठं सत्त वि एए सपडिवक्खा ॥६॥**

टीका—इह श्रुतशब्दः पूर्वगाथातः संबध्यते। ततोऽक्षरश्रुतं संज्ञिश्रुतं सम्यक्श्रुतं सादिश्रुतं सपर्यवसितश्रुतं गमिकश्रुतमंगप्रविष्टश्रुतमित्येते सप्त भेदाः सप्रतिपक्षाः श्रुतस्य चतुर्दश भेदा भवन्ति। तथाहि, अक्षरश्रुतप्रतिपक्षमनक्षरश्रुतम्, एवमसंज्ञिश्रुतं मिथ्याश्रुतमनादिश्रुतमपर्यवसितश्रुतमगमिकश्रुतमंगबाह्यश्रुतमिति। तत्राक्षरं त्रिधा संज्ञाव्यञ्जनलब्धिभेदात्। उक्तं च—"[1]तं सन्नावंजणलद्धिसन्नियं तिविहमक्खरं भणियं। सुबहुलिविभेयनिययं सन्नक्खरमक्खरागारो ॥१॥" सुबहवो या एता अष्टादशलिपयः श्रूयन्ते, तथाहि—"[2]हंसलिवी भूयलिवी जक्खी तह रक्खसी य बोधवा। उड्डी जवणि

१ तत् संज्ञाव्यंजनलब्धिसंज्ञिकं त्रिविधमक्षरं भणितम्। सुबहुलिपिभेदनियतं संज्ञाक्षरमक्षराकारः ॥ १ ॥ २ हंसलिपिर्भूतलिपिर्यक्षी तथा राक्षसी च बोद्धव्या। उड्डी यवनी तुरुष्की कीरी द्राविडी च सिंधविका ॥ २ ॥

तुरुक्की कीरी दविमी य सिंधविया ॥१॥ मालविणी नडि नागरि लाडलिवी पारसी य बोधवा। तह अनिमित्तीयलिवी चाणक्की मूलदेवी य ॥ २ ॥" व्यञ्जनाक्षरमकारादिहकारपर्यन्तमुच्यते । तदेतद्वितयमज्ञानात्मकमपि श्रुतकारणत्वादुपचारेण श्रुतम् । लब्ध्यक्षर तु शब्दश्रवणरूपदर्शनादेरर्थप्रत्यायनगर्भाक्षरोपलब्धि । यदाह–"जो अक्खरोवलंभो सा लद्धी त च होइ विन्नाणं । इंदियमणोनिमित्त जो आवरणक्खओवसमो ॥ १ ॥" ततोऽक्षरैरभिलाप्यभावानां प्रतिपादनप्रधान श्रुतमक्षरश्रुतम् । नन्वनभिलाप्या अपि किं केचिद्भावा सन्ति, येनैवमुच्यतेऽभिलाप्यभावाना प्रतिपादनप्रधान श्रुतमिति, उच्यते सन्त्येव । यदाहु श्रीपूज्या–"पंणवणिज्जा भावा अणतभागो उ अणभिलप्पाण । पणवणिज्जाण पुण अणंतभागो सुयनिबद्धो ॥ १ ॥ जं चउदस पुव्वधरा छट्ठाणगया परुप्परं हुंति । तेण उ अणतभागो पणवणिज्जाण ज वुत्त ॥ २ ॥ अक्खरलंभेण समा ऊणहिया हुंति मइविसेसेणं (हि)। ते वि हु मईविसेसा सुयनाणब्भतरे जाण ॥३॥" अनक्षरश्रुत क्ष्वेडितशिर कम्पनादिनिमित्तं मामाह्वयति वारयति वेत्यादिरूपमभिप्रायपरिज्ञानम् । तथा सञ्ज्ञिश्रुत तत्र सञ्ज्ञान सञ्ज्ञा "उपसर्गादात " ५ ३-११० इत्यङ्प्रत्यय । सा च त्रिविधा दीर्घकालिकी हेतुवादोपदेशिकी दृष्टिवादोपदेशिकी यदाह भाष्यसुधा-

---

१ मालविनी नटी नागरी लाटलिपि पारसी च बोद्धव्या । तथाऽनिमित्तिका लिपिश्चाणक्या मौलदेवी च ॥ २ ॥ २ योऽक्षरोपलभ सा लब्धिस्तच्च भवति विज्ञानम् । इन्द्रियमनोनिमित्त य आवरणक्षयोपशम ॥१॥ ३ प्रज्ञापनीया भावा अनन्तभागस्त्वनभिलाप्यानाम् । प्रज्ञापनीयाना पुनरनन्तभाग श्रुतनिबद्ध ॥ १ ॥ ४ यच्चतुर्दशपूर्वधरा षट्स्थानगता परस्पर भवन्ति । तेन त्वनतभाग प्रज्ञापनीयाना यत्प्रोक्त ॥ २ ॥ ५ अक्षरलम्भेन समा ऊनाधिका भवन्ति मतिविशेषेण(वै)। तेऽपि तु मतिविशेषा श्रुतज्ञानाभ्यन्तरे(इति) जानीहि॥३॥

भोनिधिः—"इह दीहकालिगित्ति सन्ना नेया जया सुदीहंपि । संभरइ भूयमेस्सं चिंतेइ य किह णु कायवं ॥ १ ॥ [२]जे पुण संचिंतेउं इट्ठाणिट्ठेसु विसयवत्थूसु । वट्टंति नियत्तंति य स देहपरिवालणाहेउं ॥ २ ॥ पाएण संपयं च्चिय कालंमि न यावि दीहकालं जा । ते हेउवायसन्नी निच्चिट्ठा हुंति अस्सण्णी ॥ ३ ॥ सम्मद्दिट्ठी सन्नी संते नाणे खओवसमियंमि । अस्सण्णी मिच्छत्तंमि दिट्ठिवाओवएसेणं ॥४॥" ततश्च संज्ञा विद्यते येषां ते संज्ञिनः परं सर्वत्राप्यागमे ये दीर्घकालिक्या संज्ञया संज्ञिनस्ते संज्ञिन उच्यन्ते, ततः संज्ञिनां श्रुतं संज्ञिश्रुतं समनस्कानां मनःसहितैरिन्द्रियैर्जनितं श्रुतं संज्ञिश्रुतमिति भावः। मनोरहितेन्द्रियजं श्रुतमसंज्ञिश्रुतम् । तथा सम्यग्दृष्टेरर्हत्प्रणीतं मिथ्यादृष्टिप्रणीतं वा यथास्वरूपमवगमात् सम्यक्श्रुतं, मिथ्यादृष्टेः पुनः अर्हत्प्रणीतमितरद्वा मिथ्याश्रुतं, यथास्वरूपमनवगमात् । आह–मिथ्यादृष्टेरपि मतिश्रुते सम्यग्दृष्टेरिव तदावरणकर्मक्षयोपशमसमुद्भवे सम्यग्दृष्टेरिव पृथुबुध्नोदराद्याकारं घटादिकं च संविदाते, तत् कथं मिथ्यादृष्टेरज्ञाने । उच्यते, सदसद्विवेकपरिज्ञानाभावात् । तथाहि, मिथ्यादृष्टिः सर्वमप्येकान्तपुरःसरं प्रतिपद्यते, न भगवदुक्तस्याद्वादनीत्या, ततो घट एवायमिति यदा ब्रूते तदा तस्मिन् घटे घटपर्यायव्यतिरेकेण शेषान् सत्त्वज्ञेयत्वप्रमेयत्वादीन् सतोऽपि धर्मानपलपति, अन्यथा घट एवायमित्येकान्तेनावधारणानुपपत्तेः । घटः सन्नेवेति ब्रुवाणः पररूपेण नास्तित्वस्यानभ्युपगमात्

---

१ इह दीर्घकालिकीति संज्ञा ज्ञेया यया सुदीर्घमपि । संस्मरति भूतमेष्यत् चिन्तयति च कथं नु कर्तव्यम् ॥१॥ २ ये पुनश्चिन्तयित्वा इष्टानिष्टेषु विषयवस्तुषु । वर्तन्ते निवर्तन्ते च स्वदेहपरिपालनाहेतोः ॥२॥ ३ प्रायेण सांप्रतं चैव काले न चापि दीर्घकालं यत् । ते हेतुवादसंज्ञिनः निश्चेष्टा भवंति असंज्ञिनः ॥३॥ ४ सम्यग्दृष्टिः संज्ञी सति ज्ञाने क्षायोपशमिके । असंज्ञी मिथ्यात्वे दृष्टिवादोपदेशेन ॥ ४ ॥

पररूपतामसतीमपि, तत्र प्रतिपद्यते। तत सन्तमसन्त प्रतिपद्यतेऽसन्त च सन्तमिति सदसद्विशेषपरिज्ञानाभावादज्ञाने मिथ्यादृष्टेर्मतिश्रुते। इतश्च ते मिथ्यादृष्टेरज्ञाने, भवहेतुत्वात्। तथाहि, मिथ्यादृष्टीना मतिश्रुते पशुवधमैथुनादीना धर्मसाधकत्वेन परिच्छेदके ततो दीर्घतरससारपथप्रवर्तिनी। तथा यदृच्छोपलम्भादुन्मत्तकविकल्पवत्। तथाहि, उन्मत्तकविकल्पा वस्त्वनपेक्ष्यैव यथाकथचित् प्रवर्तन्ते। यद्यपि च ते क्वचिद्यथावस्थितवस्तुसवादिनस्तथापि सम्यग्यथावस्थितवस्तुतत्त्वपर्यालोचनाविरहेण प्रवर्तमानत्वात् परमार्थतोऽपरमार्थिका। तथा मिथ्यादृष्टीना मतिश्रुते यथावद्वस्त्वविचार्यैव प्रवर्तेते, ततो यद्यपि ते क्वचिद्रसोऽयस्पर्शोऽयमित्यादावनधारणाध्यवसायाभावे सवादिनी, तथापि न ते स्याद्वादमुद्रापरिभावनातस्तथा प्रवृत्ते, कि तु यथाकथचित्, अतस्ते अज्ञाने। तथा ज्ञानफलाभावात्। ज्ञानस्य हि फल हेयस्य हानिरुपादेयस्य चोपादान, न च ससारात्पर किचन हेयमस्ति, न च मोक्षात्पर किचिदुपादेय, ततो भवमोक्षावेकान्तेन हेयोपादेयौ, भवमोक्षयोश्च हान्युपादाने सर्वसगविरतेर्भवत', तत सावश्य तत्त्ववेदिना कर्तव्या, सैव च तत्त्वतो ज्ञानस्य फलम्। तथाचाह भगवानुमास्वातिवाचक –"ज्ञानस्य फल विरतिरिति"। सा च मिथ्यादृष्टेर्नास्तीति ज्ञानफलाभावादज्ञाने मिथ्यादृष्टेर्मतिश्रुते। यदाह भाष्यसुधाम्भोनिधि –"सदसदविसेसणाओ भवहेउ जहिच्छिओवलभाओ। नाणफलाभावाओ मिच्छद्दि-

१ सदसदविशेषणाद्भवहेतुतो यदृच्छोपलभात्। ज्ञानफलाभावान्मिथ्यादृष्टेरज्ञानम् ॥ १ ॥

ठिस्स अन्नाणं ॥ १ ॥ " इति । तथा–"साईयं, सपज्जवसियं, अणाईयं, अपज्जवसियं, इच्चेयं दुवालसंगं वुच्छित्तिनयट्ठयाए साईयं सपज्जवसियं, अवुच्छित्तिनयट्ठयाए अणाईयं अपज्जवसियं, तं समासओ चउव्विहं पन्नत्तं, तं जहा, दव्वओ खित्तओ, कालओ, भावओ, दव्वओ णं संमसुयं एगं पुरिसं पडुच्च साईयं सपज्जवसियं, बहवे पुरिसे पडुच्च अणाईयं अपज्जवसियं, खित्तओ णं पंच भरहाइं पंच एरवयाइं पडुच्च साईयं सपज्जवसियं, पंच महाविदेहाइं पडुच्च अणाईयं अपज्जवसियं, कालओ णं उस्सप्पिणिं अवसप्पिणिं च पडुच्च साईयं सपज्जवसियं नोउस्सप्पिणिं नोअवसप्पिणिं च पडुच्च अणाईयं अपज्जवसियं" । नो उत्सर्पिणी नो अवसर्पिणी चेति कालो महाविदेहेषु ज्ञेयस्तत्रोत्सर्पिण्यवसर्पिणीलक्षणकालाभावात् । "भावओ णं जे जया जिणपन्नत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति, ते तया पडुच्च साईयं सपज्जवसियं, खाओवसमियं पुण भावं पडुच्च अणाईयं अपज्जवसियं । अहवा भवसिद्धियस्स सुयं साईयं सपज्जवसियं"

---

१ सादिकं सपर्यवसितमनादिकमपर्यवसितमित्येतत् द्वादशांगं व्युच्छित्तिनयार्थतया सादिकं सपर्यवसितम्, अव्युच्छित्तिनयार्थतयानादिकमपर्यवसितम्, तत्समासतश्चतुर्विधं प्रज्ञप्तं, तद्यथा, द्रव्यतः क्षेत्रतः कालतो भावतः, द्रव्यतः सम्यक् श्रुतं एकं पुरुषं प्रतीत्य सादिकं सपर्यवसितम्, बहून् पुरुषान् प्रतीत्यानादिकमपर्यवसितम्, क्षेत्रतः पंच भरतानि पंचैरवतानि प्रतीत्य सादिकं सपर्यवसितम्, पंच महाविदेहानि प्रतीत्यानादिकमपर्यवसितम्, कालत उत्सर्पिणीमवसर्पिणीं च प्रतीत्य सादिकं सपर्यवसितम्, नो उत्सर्पिणीं नो अवसर्पिणीं प्रतीत्यानादिकमपर्यवसितम्. २ भावतो ये यदा जिनप्रज्ञप्ता भावा आख्यायन्ते प्रज्ञाप्यन्ते प्ररूप्यन्ते दर्श्यन्ते निर्दर्श्यन्ते, तान् तदा प्रतीत्य सादिकं सपर्यवसितम्, क्षायोपशमिकं पुनर्भावं प्रतीत्यानादिकमपर्यवसितम् । अथवा भवसिद्धिकस्य श्रुतं सादिकं सपर्यवसितम्.

केवलज्ञानोत्पत्तौ तदभावात्, "नट्ठम्मि उ छाउमत्थिए नाणे" इति वचनात्। "अभवसिद्धियस्स सुयं अणाईयं अपज्जव-सियं"। इह च सामान्यतः श्रुतशब्देन श्रुतज्ञानं श्रुताज्ञानं चोच्यते। यदाह—"अविसेसियं सुयं सुयनाणं सुयअन्नाणं च"। तथा गमाः सदृशपाठास्ते विद्यन्ते यत्र तद्गमिकम्, "अतोऽनेकस्वरादिति ७-२-६ (सूत्रेण) इकप्रत्ययः" तत् प्रायो दृष्टिवादगतम्। अगमिकमसदृशाक्षरालापकं तत् प्रायः कालिकश्रुतगतम्। अङ्गप्रविष्टं द्वादशाङ्गीरूपम्। तथाहि—"अट्ठा-रस पयसहस्सा आयारे दुगुण दुगुण सेसेसु। सूयगडेठाणेसमवायेभगवईनायधम्मकहा॥ १॥ अंगं उवासगदसा अंतगड-अणुत्तरोववाइदसा पन्हावागरणं तह विवायसुयमिगदस अंगं॥ २॥ परिकम्मं सुत्तपुव्वाणुजोगपुव्वगयचूलिया एवं। पण दिट्ठिवायभेया चउदस पुव्वाइ पुव्वगयं॥ ३॥ उप्पाए पयकोडी अग्गाणीयम्मि छन्नवइलक्खा। विरियपवाए अत्थि-प्पवाउ लक्खा सयरिसट्ठी॥ ४॥ एगपऊणा कोडी पयाण नाणप्पवायपुव्वम्मि। सच्चप्पवायपुव्वे एगा पयकोडि छच्च पया॥ ५॥ छव्वीसं पयकोडी पुव्वे आयप्पवायनामम्मि। कम्मप्पवायपुव्वे पयकोडी असिइलक्खजुया॥६॥ पच्चक्खाणंमिहाणे पुव्वे

१ नष्टे तु छाद्मस्थिके ज्ञाने २ अभवसिद्धिकस्य श्रुतमनादिकमपर्यवसितम् ३ अविशेषितं श्रुतं श्रुतज्ञानं श्रुताज्ञानं च ४ अष्टादश पदसहस्राणि आचारे द्विगुणद्विगुणानि शेषेषु। सूत्रकृतेस्थानेसमवायेभगवतीज्ञाताधर्मकथाः॥ १॥ अंगमुपासकदशान्तकृदनुत्तरोपपातिक दशाः। प्रश्नव्याकरणं तथा विपाकश्रुतमेकादशमङ्गम्॥ २॥ परिकर्मसूत्रपूर्वानुयोगपूर्वगतचूलिका एवम्। पञ्च दृष्टिवादभेदाश्चतुर्दश पूर्वाणि पूर्वगतम्॥ ३॥ उत्पादे पदकोटी अग्रायणीये षण्णवतिलक्षाः। वीर्यप्रवादेऽस्तिप्रवादे लक्षाः सप्ततिषष्टी॥ ४॥ एकपदोना कोटी पदानां ज्ञानप्रवादपूर्वे। सत्यप्रवादपूर्वे एका पदकोटी षट् च पदानि॥ ५॥ षड्विंशतिः पदकोटी पूर्वे आत्मप्रवादनामनि। कर्मप्रवादपूर्वे पदकोटी

चुलसीइ पयसयसहस्सा । दसपयसहस्सजुया पयकोमीविज्जापवायंमि ॥ ७ ॥ कल्लाणंनामधिज्जे पुव्वंमि पयाण कोमि बवीसा । बप्पन्नलक्ककोमी पयाण पाणाउपुव्वंमि ॥ ८ ॥ किरियाविसालपुव्वे नव पयकोमी उ विंति समयविऊ । सिरिलोकबिन्दुसारे सड्ढुवालस य पयलक्का ॥ ए ॥" अंगबाह्यं श्रुतमावश्यकदशवैकालिकादि । इति व्याख्यातं चतुर्दशधा श्रुतम् ॥ ६ ॥

संप्रति विंशतिधा श्रुतं व्याख्यानयन्नाह–

**पज्जयअक्कर पयसंघाया पमिवत्ति तह य अणुउगो । पाहुडपाहुमपाहुमवत्थूपुव्वा य ससमासा ॥ ७ ॥**

पर्यायश्चाक्षरं च पदं च संघातश्च पर्यायाक्षरपदसंघाताः । "पमिवत्ति त्ति" प्रतिपत्तिः । प्राकृतत्वाल्लुप्तविभक्तिको निर्देशः । तथा चानुयोगोऽनुयोगद्वारलक्षणः, प्राभृतप्राभृतं च प्राभृतं च वस्तु च पूर्वं च प्राभृतप्राभृतप्राभृतवस्तुपूर्वाणि । प्राकृतत्वाल्लिंगव्यत्ययः । यदाह पाणिनिः स्वप्राकृतलक्षणे "लिंगं व्यभिचार्यपि" । "चः" समुच्चये । एते पर्यायादयः श्रुतस्य दश भेदाः कथंभूता इत्याह–"ससमासत्ति" समासः संक्षेपो मीलक इत्यर्थः, सह समासेन वर्तन्ते ससमासास्ततश्च प्रत्येकं संबन्धः । तथाहि, पर्यायः पर्यायसमासः, अक्षरमक्षरसमासः, पदं पदसमासः, संघातः संघातसमासः, प्रतिपत्तिः

अशीतिलक्षयुता ॥ ६ ॥ प्रत्याख्यानाभिधाने पूर्वे चतुरशीतिपदशतसहस्रा । दशपदसहस्रयुक्ता पदकोटी विद्याप्रवादे ॥ ७ ॥ कल्याणनामधेये पूर्वे पदानां कोटिः षड्विंशतिः । षट्पंचाशल्लक्षकोटी पदानां प्राणायुः पूर्वे ॥ ८ ॥ क्रियाविशालपूर्वे नव पदकोटीः तु ब्रुवते समयविदः । श्रीलोकबिन्दुसारे सार्धद्वादश च पदलक्षम् ॥ ९ ॥

प्रतिपत्तिसमास, अनुयोगोऽनुयोगसमास, प्राभृतप्राभृत प्राभृतप्राभृतसमास, प्राभृत प्राभृतसमास, वस्तु वस्तुसमास पूर्व पूर्वसमास, इति विंशतिधा श्रुत भवतीति गाथाक्षरार्थ । भावार्थस्त्वयम्–पर्यायो ज्ञानस्यांशो विभाग पलिच्छेद इति पर्याया । तत्रैको ज्ञानांश पर्यायोऽनेके तु ज्ञानांशा॰ पर्यायसमास, एतदुक्त भवति–लब्ध्यपर्याप्तस्य सूक्ष्मनिगोदजीवस्य यत् सर्वजघन्य श्रुतमात्र तस्मादन्यत्र जीवान्तरे य एकश्रुतज्ञानांशो विभागपलिच्छेदरूपो वर्धते स पर्याय ॥ १ ॥ ये तु द्व्यादय श्रुतज्ञानविभागपलिच्छेदा नानाजीवेषु वृद्ध्या लभ्यन्ते ते समुदिता॰ पर्यायसमास ॥ २ ॥ अकारादिलब्ध्यक्षराणामन्यतरदक्षरम् ॥ ३ ॥ तेषामेव द्व्यादिसमुदायोऽक्षरसमासः ॥ ४ ॥ पद तु । अर्थपरिसमाप्ति पदमित्याद्युक्तिसद्भावेऽपि येन केनचित्पदेनाष्टादशपदसहस्रादिप्रमाण आचारादिग्रन्था गीयन्ते तदिह गृह्यते, तस्यैव द्वादशांगश्रुतपरिमाणेऽधिकृतत्वात्, श्रुतभेदानामेव चेह प्रस्तुतत्वात्, तस्य च पदस्य तथाविधाम्नायाभावात्प्रमाण न ज्ञायते, तत्रैक पद पदमुच्यते ॥ ५ ॥ द्व्यादिपदसमुदायस्तु पदसमास ॥ ६ ॥ "गइइंदिए य काए" इत्यादिगाथाप्रतिपादितद्वारकलापस्यैकदेशो यो गत्यादिकस्तस्याप्येकदेशो यो नरकगत्यादिकस्तत्र जीवादिमार्गणा यका क्रियते स सघातः ॥ ७ ॥ द्व्यादिगत्याद्यवयवमार्गणा सघातसमास ॥ ८ ॥ गत्यादिद्वाराणामन्यतरैकपरिपूर्णगत्यादिद्वारेण जीवादिमार्गणा प्रतिपत्ति ॥ ९ ॥ द्वारद्व्यादिमार्गणा तु प्रतिपत्तिसमास ॥ १० ॥ "संतपयपरूवणया दव्वपमाणं चेत्यादि" अनुयोगद्वाराणामन्यतरदेकमनुयोगद्वारमुच्यते ॥ ११ ॥ तद्व्यादिसमुदाय पुनरनुयोगद्वारसमास ॥ १२ ॥ प्राभृतान्तर्वर्ती अधिका-

१ गति इन्द्रिय काय २ सत्प्ररूपणता द्रव्यप्रमाण च

रविशेषः प्राभृतप्राभृतं ॥ १३ ॥ तद्द्व्यादिसमुदायस्तु प्राभृतप्राभृतसमासः ॥ १४ ॥ वस्त्वन्तर्वर्ती अधिकारविशेषः प्राभृतम् ॥ १५ ॥ तद्द्व्यादिसंयोगस्तु प्राभृतसमासः ॥ १६ ॥ पूर्वान्तर्वर्ती अधिकारविशेषो वस्तु ॥ १७ ॥ तद्द्व्यादिसंयोगस्तु वस्तुसमासः ॥ १८ ॥ पूर्वमुत्पादपूर्वादि पूर्वोक्तस्वरूपम् ॥ १९ ॥ तद्द्व्यादिसंयोगस्तु पूर्वसमासः ॥ २० ॥ एवमेते संक्षेपतः श्रुतज्ञानस्य विंशतिर्भेदा दर्शिताः, विस्तरार्थिना तु बृहत्कर्मप्रकृतिरन्वेषणीया । एते च पर्यायादयः श्रुतभेदा यथोत्तरं तीव्रतीव्रतरादिक्षयोपशमलभ्यत्वादित्थं निर्दिष्टा इति परिभावनीयमिति । अथवा चतुर्विधं श्रुतज्ञानं, तथाहि, द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्यतः श्रुतज्ञानी सर्वद्रव्याण्यादेशेन जानाति, क्षेत्रतः सर्वक्षेत्रमादेशेन श्रुतज्ञानी जानाति, कालतः सर्वं कालमादेशेन श्रुतज्ञानी जानाति, भावतः सर्वान् भावानादेशेन श्रुतज्ञानी जानातीति व्याख्यातं सविस्तरं श्रुतज्ञानम् ॥ ७ ॥

संप्रत्यवधिज्ञानं व्याख्यायते, तच्च द्वेधा, भवप्रत्ययं देवनारकाणां, गुणप्रत्ययं मनुष्यतिरश्चाम्, तच्च षोढा, तथा चाह सूत्रम्—

**अणुगामिवड्ढमाणयपडिवाईयरविहा छहा ओही। रिउमइविउलमई मणनाणं केवलमिगविहाणं ॥८॥**

आनुगामि च वर्धमानकं च प्रतिपाति च इतराणि चानानुगामिहीयमानकाप्रतिपातीनि आनुगामिवर्धमानकप्रतिपातीतराणि, विधानानि विधा भेदाः, तत आनुगामिवर्धमानकप्रतिपातीतराणि विधा यस्य तत्तथा तस्मादानुगामिवर्धमानकप्रतिपातीतरविधात्, षड्धा अवधिरवधिज्ञानं भवति । उक्तं च नन्द्यध्ययने—"[१]तं समासओ छव्विहं पन्नत्तं, तं जहा,

---

१ तत्समासतः षड्विधं प्रज्ञप्तम्, तद्यथा, आनुगामिकमनानुगामिकं वर्धमानकं हीयमानकं प्रतिपात्यप्रतिपाति ।

आणुगामिय अणाणुगामिय वड्ढमाणय हीयमाणयं पडिवाई अपडिवाई"। तत्र गच्छन्त पुरुषमासमन्तादनुगच्छतीत्येव शीलमानुगामि, यद्देशान्तरगतमपि ज्ञानिनमनुगच्छति लोचनवत्तदवधिज्ञानमानुगामीति भाव । तथा नानुगामि अनानुगामि शृङ्खलानद्धप्रदीप इव यन्न गच्छन्त ज्ञानिनमनुगच्छति, यत् किल तद्देशस्थस्यैव भवति, तद्देशनिबन्धनक्षयोपशमजत्वाद्देशान्तरगतस्य त्वपैति, तदवधिज्ञानमनानुगामीति भाव । यदाह भगवान् श्रीदेवर्द्धिक्षमाश्रमण –"से किं त अणाणुगामिय ओहिनाण अणाणुगामिय ओहिनाणं से जहानामए केइ पुरिसे एगं महं जोइट्ठाण काउ तस्सेव जोइट्ठाणस्स परिपेरंतेसु परिहिंडमाणे परिघोलमाणे तमेव जोइट्ठाण पासइ, अन्नत्थ गए न पासइ । एवमेव अणाणुगामिय ओहिनाणं जत्थेव समुप्पज्जइ, तत्थेव सखिज्जाणि वा असखिज्जाणि वा जोयणाइ पासइ, न अन्नत्थ" । भाष्यकारोऽप्याह–"अणुगामि उ अणुगच्छइ गच्छत लोयण जहा पुरिस । इयरो उ नाणुगच्छइ ठियप्पईवव्व गच्छत ॥१॥" तथा वर्धत इति वर्धमानः, तत. सज्ञाया 'कन्' प्रत्यय , बहुबहुतरेन्धनप्रक्षेपाद्भिवर्धमानज्वलनज्वालाकलाप इव पूर्वावस्थातो यथायोग प्रशस्तप्रशस्ततराध्यवसायतो वर्धमानमवधिज्ञान वर्धमानकम् । एतच्चाङ्गुलासख्येयभागादिविषयमुत्पद्य पुनर्वृद्धि विषयविस्तरणात्मिका

१ अथ किं तदनानुगामिकमवधिज्ञान, अनानुगामिकमवधिज्ञान तद्यथानाम कश्चित्पुरुष एक महज्ज्योति स्थान कृत्वा तस्यैव ज्योति स्थानस्य परिपर्यन्तेषु परिहिंडमान परिघोलायमान तदेव ज्योति स्थान पश्यति, अन्यत्र गतो न पश्यति । एवमेवानानुगामिकमवधिज्ञान यत्रैव समुत्पद्यते तत्रैव सख्येयानि वाऽसख्येयानि वा योजनानि पश्यति, नान्यत्र २ अनुगामि त्वनुगच्छति गच्छन्त लोचन यथा पुरुषम् । इतरत्तु नानुगच्छति स्थितप्रदीप इव गच्छन्तम् ॥ १ ॥

याति यावदलोके लोकप्रमाणान्यसंख्येयानि खण्डानीति । तथा हीयते तथाविधसामग्र्यभावतो हानिमुपगच्छतीति हीयमानं, 'कर्मकर्तृविवक्षायामानश् प्रत्ययः,' हीयमानमेव हीयमानकम्, "कुत्सिताल्पाज्ञाते कप्रत्ययः," ७-३-३३. पूर्वावस्थातो यदधोऽधो ह्रासमुपगच्छति तद्धीयमानकमवधिज्ञानमिति । उक्तं च नन्दिचूर्णौ–"हीयमाणं पुव्वावत्थाउ अहो हो हस्समाणंति"[1] । तथा प्रतिपततीत्येवं शीलं प्रतिपाति । यदाह–"से[2] किं तं पडिवाइ पडिवाइ जन्नं जहन्नेणं अंगुलस्स असंखिज्जइभागं वा, वालग्गं वा, वालग्गपुहत्तं वा, एवं लिक्खं वा, जूयं वा, जवं वा, जवपुहत्तं वा, अंगुलं वा, अंगुलपुहत्तं वा, एवं एएणं अहिलावेणं विहत्थिं वा, हत्थं वा, कुच्छिं वा (कुक्षिर्हस्तद्वयमुच्यते), धणुं वा, गाउयं वा, जोयणं वा, जोयणसयं वा, जोयणसहस्सं वा, संखिज्जाणि वा असंखिज्जाणि वा जोयणसहस्साइं । उक्कोसेणं लोगं पासित्ताणं पडिवडिज्जा, से तं पडिवाइ" । तथा न प्रतिपाति अप्रतिपाति । यत् किलालोकस्य प्रदेशमेकमपि पश्यति तदप्रतिपातीति भावः । हीयमानकप्रतिपातिनोः कः प्रतिविशेष इति चेदुच्यते, हीयमानकं पूर्वावस्थातोऽधोऽधोह्रासमुपगच्छदभिधीयते । यत्पुनः प्रदीप इव निर्मूलमेककालमपगच्छति तत्प्रतिपातीति । यद्वानन्तद्रव्यभावविषयत्वात्तत्तारतम्यविवक्षयानन्तभेदम्, असंख्येयक्षेत्रकालविषयत्वात्तु तत्ता-

---

१ हीयमानं पूर्वावस्थातोऽधोऽधो ह्रासं गच्छेत्. २ अथ किं तत्प्रतिपाति, प्रतिपाति, यज्जघन्येनांगुलस्यासंख्येयभागं वा, वालाग्रं वा, वालाग्रपृथक्त्वं वा, एवं लिक्षां वा, यूकां वा, यवं वा, यवपृथक्त्वं वा, अंगुलं वा, अंगुलपृथक्त्वं वा, एवमेतेनाभिलापेन वितस्तिं वा, हस्तं वा, कुक्षिं वा, धनुर्वा, क्रोशं वा, योजनं वा, योजनशतं वा, योजनसहस्रं वा, संख्येयानि वा असंख्येयानि वा योजनसहस्राणि । उत्कृष्टेन लोकं दृष्ट्वा प्रतिपतेत्, एतत्तत् प्रतिपाति ।

रतस्यविवक्षयाऽसख्येयभेदमवधिज्ञानम् । यद्वा चतुर्विधमवधिज्ञान द्रव्यक्षेत्रकालभावात् । तथा चाह–"तं समासओ चउविह पन्नत्त, त जहा, दव्वओ खेत्तओ कालओ भावओ । दव्वओ ण ओहिनाणी जहन्नेण अणताइ रूविदव्वाइ जाणइ पासइ, उक्कोसेण सव्वरूविदव्वाइ जाणइ पासइ । खित्तओ ण ओहिनाणी जहन्नेण अगुलस्स असखेज्जभाग, उक्कोसेण असखेज्जाइ अलोएलोयपमाणमित्ताइ खडाइ जाणइ पासइ । कालओ ण ओहिनाणी जहन्नेण आवलियाए असखिज्जभाग, उक्कोसेण असखिज्जाओ उस्सप्पिणीओसप्पिणीओ तीय च अणागय च काल जाणइ पासइ । भावओ ण ओहिनाणी जहन्नेण वि अणते भावे जाणइ पासइ, उक्कोसेण वि अणते भावे जाणइ पासइ सव्वभावाण अणतभाग" । इत्युक्तमवधिज्ञानम् । इदानी मन पर्यवज्ञान व्याख्यानयन्नाह–"रिजमइविउलमई मणनाण ति" । मनोज्ञान मन पर्यायज्ञानमित्यर्थ । ऋजुमतिविपुलमतिभेदाद्द्विविधम् । तत्र ऋज्वी सामान्यग्राहिणी मतिर्ऋजुमति । घटोऽनेन चिन्तित इत्यध्यवसायनिबन्धना मनोद्रव्य-

१ ततसमासतश्चतुर्विध प्रज्ञप्त, तद्यथा, द्रव्यत क्षेत्रत कालतो भावत । द्रव्यतोऽवधिज्ञानी जघन्येनानन्तानि रूपिद्रव्याणि जानाति पश्यति, उत्कृष्टेन सर्वरूपिद्रव्याणि जानाति पश्यति । क्षेत्रतोऽवधिज्ञानी जघन्येनागुलस्यासख्येयभाग, उत्कृष्टेनासख्येयानि अलोके लोकप्रमाणमात्राणि खडानि जानाति पश्यति । कालतोऽवधिज्ञानी जघन्येनावलिकाया असख्येयभाग, उत्कृष्टेनासख्येया उत्सर्पिण्यवसर्पिणी अतीत चानागत च काल जानाति पश्यति । भावतोऽवधिज्ञानी जघन्येनाप्यनन्तान् भावान् जानाति पश्यति उत्कृष्टेनापि अनन्तान् भावान् जानाति पश्यति सर्वभावानामनन्तभागम् ।

परिच्छित्तिरित्यर्थः । यदाह–"[1]रिउसामन्नं तम्मत्तगाहिणी रिउमई मणोनाणं । पायं विसेसविमुहं घडमित्तं चिंतियं मुणइ ॥ १ ॥" तथा विपुला विशेपग्राहिणी मतिर्विपुलमतिः, घटोऽनेन चिन्तितः स च सौवर्णः पाटलिपुत्रकोऽद्यतनो महानित्याद्यध्यवसायहेतुभूता मनोद्रव्यविज्ञप्तिरिति भावार्थः । अस्यां व्युत्पत्तौ स्वतंत्रं ज्ञानमेव गृह्यत इति । अथवा ऋज्वी सामान्यग्राहिणी मतिरस्य स ऋजुमतिः । विपुला विशेषग्राहिणी मतिरस्य स विपुलमतिः । अस्यां व्युत्पत्तौ तद्वान् गृह्यते । यद्वा मनःपर्यायज्ञानं चतुर्विधं द्रव्यक्षेत्रकालभावभेदात् । उक्तं च–"तं[2] समासउ चउव्विहं पन्नत्तं, तं जहा, दव्वउ खित्तउ कालउ भावउ । दव्वउ णं उज्जुमई अणंते अणंतपएसिए खंधे जाणइ पासइ । ते चेव विउलमई अब्भहियतराए विमलतराए जाणइ पासइ त्ति ।" क्षेत्रतः पुनरृजुमतिरधो यावदधोलौकिकग्रामान् जानाति । यदाहुश्चतुर्दशप्रकरणशतप्रासादसूत्रधारकल्पप्रभुश्रीहरिभद्रसूरिपादा नंदिवृत्तौ–"इहाधोलौकिकान् ग्रामान्, तिर्यग्लोकविवर्तिनः । मनोगतांस्त्वसौ भावान्, वेत्ति तद्वर्तिनामपि ।१। ऊर्ध्वं यावत् ज्योतिश्चक्रस्योपरितलं "तिरियं जाव अंतोमणुस्सखित्ते अड्ढाइज्जेसु दीवेसु दोसु य समुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमिसु छप्पन्नाए अंतरदीवेसु सन्नीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणइ पासइ । तं चेव विउलमई अड्ढाइज्जेहिं अंगुलेहिं अब्भहियतरयं विसुद्धतरयं खेत्तं जाणइ पासइ" । इह

१ ऋजु सामान्यं तन्मात्रग्राहिणी ऋजुमतिर्मनोज्ञानम् । प्रायोविशेपविमुखं घटमात्रं चिन्तितं मनुते ॥ १ ॥ २ तत्समासतश्चतुर्विधं प्रज्ञप्तम्, तद्यथा, द्रव्यतः क्षेत्रतः कालतो भावतः । द्रव्यत ऋजुमतिरनन्ताननन्तप्रदेशान् स्कन्धान् जानाति पश्यति । तांश्चैव विपुलमतिरभ्यधिकतरान् विमलतरान् जानाति पश्यति ।

व्याख्या–अन्तर्मध्येमनुष्यक्षेत्रस्यार्धतृतीयद्वीपेषु जवूद्वीपधातकीखण्डपुष्करवरद्वीपार्धेषु द्वयोः समुद्रयोर्लवणसमुद्रकालोदसमुद्रयो पञ्चदशसु कर्मभूमिषु भरतपञ्चकैरवतपञ्चकमहाविदेहपञ्चकलक्षणासु त्रिंशत्यकर्मभूमिषु हैमवतपञ्चकहरिवर्षपञ्चकदेवकुरुपञ्चकोत्तरकुरुपञ्चकरम्यकपंचकहैरण्यवतपंचकरूपासु तथा लवणसमुद्रस्यान्तर्मध्ये भवा द्वीपा आन्तरद्वीपास्ते च षट्पञ्चाशत्सङ्ख्या, तथाहि, इह जंबूद्वीपे भरतस्य हैमवतक्षेत्रस्य च सीमाकारी भूमिनिमग्नपञ्चविंशतियोजनो योजनशतोच्छ्रयपरिमाणो भरतक्षेत्रापेक्षया द्विगुणविष्कम्भो हेममयश्चीनपट्टवर्णो नानावर्णविशिष्टद्युतिमणिनिकरपरिमण्डितोभयपार्श्वः सर्वत्र तुल्यविस्तरो गगनमण्डलोल्लेखिरत्नमयैकादशकूटोपशोभितो वज्रमयतलविविधमणिकनकमण्डितभूमिभागदशयोजनावगाढपूर्वपश्चिमयोजनसहस्रायामदक्षिणोत्तरपंचयोजनशतविस्तारपद्महृदशोभितशिरोमध्यविभागः सर्वत कल्पपादपश्रेणिरमणीय पूर्वापरपर्यन्ताभ्या लवणोदार्णवजलसस्पर्शी हिमवन्नामपर्वतस्तस्यलवणोदार्णवजलसस्पर्शादारभ्य पूर्वस्या पश्चिमाया च दिशि प्रत्येक द्वे द्वे गजदन्ताकारे दंष्ट्रे विनिर्गते, तत्रैशान्या दिशि या विनिर्गता दंष्ट्रा तस्या हिमवतः पर्यन्तादारभ्य त्रीणि योजनशतानि लवणसमुद्रमवगाह्यात्रान्तरे योजनशतत्रयायामविष्कम्भ किंचिन्न्यूनैकोनपञ्चाशदधिकनवयोजनशतपरिरय एकोरुकनामा द्वीपो वर्तते, अय च पञ्चधनु शतप्रमाणविष्कम्भया द्विगव्यूतोच्छ्रितया पद्मवरवेदिकया सर्वतः परिमण्डित, सापि च पद्मवरवेदिका सर्वतो वनखण्डपरिक्षिप्ता, तस्य च वनखण्डस्य चक्रवालतया विष्कम्भो देशोने द्वे योजने परिक्षेप पद्मवरवेदिकाप्रमाण । तथा तस्यैव हिमवत पर्वतस्य पर्यन्तादारभ्य दक्षिणपूर्वस्या दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य द्वितीयदंष्ट्राया उपरि एकोरुकद्वीपप्रमाण आभासिकनामा द्वीपो वर्तते । तथा तस्यैव हिम-

वतः पश्चिमायां दिशि पर्यन्तादारभ्य दक्षिणपश्चिमायां त्रीणि योजनशतानि लवणसमुद्रमवगाह्य दंष्ट्राया उपरि यथोक्त-
प्रमाणो वैषाणिकनामा द्वीपः। तथा तस्यैव हिमवतः पश्चिमायां दिशि पर्यन्तादारभ्य पश्चिमोत्तरस्यां दिशि त्रीणि योजन-
शतानि लवणसमुद्रमवगाह्य दंष्ट्राया उपरि पूर्वोक्तप्रमाणो नांगोलिकनामा द्वीपः। एवमेते चत्वारो द्वीपा हिमवतश्चतसृ-
ष्वपि विदिक्षु तुल्यप्रमाणा अवतिष्ठन्ते। तत एषामेकोरुकादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु
प्रत्येकं चत्वारि चत्वारि योजनशतान्यतिक्रम्य चतुर्योजनशतायामविष्कंभाः किंचिन्न्यूनपंचषष्टिसहितद्वादशयोजनशत-
परिक्षेपा यथोक्तपद्मवरवेदिकावनखंडमंडितपरिसरा जंबूद्वीपवेदिकातश्चतुर्योजनशतप्रमाणान्तरा हयकर्णगजकर्णगोकर्णश-
ष्कुलीकर्णनामानश्चत्वारो द्वीपाः। तद्यथा, एकोरुकस्य परतो हयकर्णः, आभासिकस्य परतो गजकर्णः, वैषाणिकस्य परतो
गोकर्णः, नांगोलिकस्य परतः शष्कुलीकर्णः, एवमग्रेऽपि भावना कार्या। तत एतेषामपि हयकर्णादीनां चतुर्णां द्वीपानां
परतः पुनरपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं पंच पंच योजनशतान्यतिक्रम्य पंचयोजनशतायामविष्कंभा एकाशी-
त्यधिकपंचदशयोजनशतपरिक्षेपाः पूर्वोक्तप्रमाणपद्मवरवेदिकावनखंडमंडितबाह्यप्रदेशा जंबूद्वीपवेदिकातः पंचयोजनशत-
प्रमाणान्तरा आदर्शमुखमेंढमुखायोमुखगोमुखनामानश्चत्वारो द्वीपाः। एतेषामप्यादर्शमुखादीनां चतुर्णां द्वीपानां परतो
भूयोऽपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं षट् षट् योजनशतान्यतिक्रम्य षड्योजनशतायामविष्कंभाः सप्तनवत्यधिकाष्टा-
दशयोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखंडमंडितपरिसरा जंबूद्वीपवेदिकातः षड्योजनशतप्रमाणान्तरा अश्व-
मुखहस्तिमुखसिंहमुखव्याघ्रमुखनामानश्चत्वारो द्वीपाः। एतेषामप्यश्वमुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरा-

दिविदिक्षु प्रत्येक सप्त सप्त योजनशतान्यतिक्रम्य सप्तयोजनशतायामविष्कम्भास्त्रयोदशाधिकद्वाविंशतियोजनशतपरिरया पूर्वोक्तप्रमाणपद्मवरवेदिकावनखण्डसमवगूढा जंबूद्वीपवेदिकातः सप्तयोजनशतप्रमाणान्तरा अश्वकर्णहयकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपाः । ततः एतेषामश्वकर्णादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकमष्टावष्टौ योजनशतान्यतिक्रम्याष्टयोजनशतायामविष्कम्भा एकोनत्रिंशदधिकपंचविंशतियोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमंडितपरिसरा जंबूद्वीपवेदिकातोऽष्टयोजनशतप्रमाणान्तरा उल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्ताभिधानाश्चत्वारो द्वीपाः । ततोऽमीषामप्युल्कामुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं नव नव योजनशतान्यतिक्रम्य नवयोजनशतायामविष्कम्भाः पंचचत्वारिंशदधिकाष्टाविंशतियोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा जंबूद्वीपवेदिकातो नवयोजनशतप्रमाणान्तरा घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानश्चत्वारो द्वीपाः । एवमेते सप्तचतुष्का हिमवति पर्वते चतसृष्वपि विदिक्षु व्यवस्थिताः, सर्वसंख्ययाष्टाविंशतिः । एवं हिमवत्तुल्यवर्णप्रमाणे पद्महृदप्रमाणायामविष्कम्भावगाहपुण्डरीकहृदोपशोभिते शिखरिण्यपि लवणोदार्णवजलसंस्पर्शादारभ्य यथोक्तप्रमाणान्तराश्चतसृषु विदिक्षु व्यवस्थिता एकोरुकादिनामानोऽक्षुणापान्तरालायामविष्कम्भा अष्टाविंशतिसंख्या द्वीपा वक्तव्याः, सर्वसंख्यया षट्पंचाशदान्तरद्वीपाः । एतद्गता मनुष्या अप्येतन्नामानः उपचाराद्भवन्ति । "तात्स्थ्यात्तद्व्यपदेशो" यथा पंचालदेशनिवासिनः पुरुषाः पंचाला इति । ते च मनुष्या वज्रऋषभनाराचसंहननिनः समचतुरस्रसंस्थानाः सर्वांगोपांगसुन्दराः कमण्डलुकलशयूपस्तूपवापीध्वजपताकासौवस्तिकयवमत्स्यमकरकूर्मरथवरस्थालांशुकाष्टापदांकुशसुप्रति-

ष्ठकमयूरश्रीदामाभिषेकतोरणमेदिनीजलधिवरभवनादर्शपर्वतगजवृषभसिंहचामररूपप्रशस्तोत्तमद्वात्रिंशल्लक्षणधराः स्वभावत एव सुरभिवदनाः प्रतनुक्रोधमानमायालोभाः सन्तोषिणो निरौत्सुक्या मार्दवार्जवसंपन्नाः सत्यपि मनोहारिणि मणिकनकमौक्तिकादौ ममत्वकारणे ममत्वाभिनिवेशरहिताः सर्वथापगतवैरानुबन्धा हस्त्यश्वकरभगोमहिषादिसद्भावेऽपि तत्परिभोगपराङ्मुखाः पादविहारिणो ज्वरादिरोगयक्षभूतपिशाचादिग्रहमारिव्यसनोपनिपातविकलाः परस्परप्रेष्यप्रेषकभावरहितत्वादहमिन्द्राः, तेषां पृष्ठकरंडकानि चतुःषष्टिसंख्याकानि चतुर्थातिक्रमे चाहारग्रहणमाहारोऽपि च न शाल्यादिधान्यनिष्पन्नः किं तु पृथिवीमृत्तिका कल्पद्रुमाणां पुष्पफलानि च । तथाहि, जायन्ते खलु तत्रापि विस्रसात एव शालिगोधूममुद्गमाषादीनि धान्यानि, परं न तानि मनुष्याणामुपभोगं गच्छन्ति, या तु पृथिवी सा शर्करातोऽप्यनन्तगुणमाधुर्या, यश्च कल्पद्रुमफलानामास्वादः स चक्रवर्तिभोजनादप्यधिकगुणः । यदुक्तम्—“तेसिं णं भंते पुप्फफलाणं केरिसए आसाए पन्नते, गोयमा से जहानामए, रंनो चाउरंतचक्कवट्टिस्स कल्लाणे भोयणजाए सयसहस्सनिप्फन्ने वन्नोववेए गंधोववेए रसोववेए फासोववेए आसायणिज्जे विस्सायणिज्जे दप्पणिज्जे मयणिज्जे सव्विंदियगायपल्हायणिज्जे आसाएणं पन्नते, इत्तोइट्ठअइट्ठतराए चेव पन्नते” । ततः पृथिवी कल्पपादपपुष्पफलानि च तेषामाहारः । तथाभूतं चाहारमाहार्य

---

१ तेषां भगवन् पुष्पफलानां कीदृश आस्वादः प्रज्ञप्तः, गौतम स यथा नाम राज्ञश्चातुरंतचक्रवर्तिनः कल्याणं भोजनजातं शतसहस्रनिष्पन्नं वर्णोपपेतं गन्धोपपेतं रसोपपेतं स्पर्शोपपेतं आस्वादनीयं विस्वादनीयं दर्पणीयं मदनीयं सर्वेन्द्रियगात्रप्रह्लादनीयमास्वादेन प्रज्ञप्तं, इतोऽधिकेष्टतरश्चैव प्रज्ञप्तः ।

प्रासादादिसस्थाना ये गृहाकारा कल्पद्रुमास्तेषु यथासुखमवतिष्ठन्ते । न च तत्र क्षेत्रे दशमशकयूकामत्कुणमक्षिकादय शरीरोपद्रवकारिणो जन्तव उपजायन्ते । येऽपि जायन्ते भुजगव्याघ्रसिंहादयस्तेपि मनुष्याणा न बाधायै प्रभवन्ति । नापि ते परस्पर हिंस्यहिंसकभावे वर्तन्ते, क्षेत्रानुभावतो रौद्रभावरहितत्वात् । मनुष्ययुगलानि च पर्यवसानसमये युगल प्रसुवते, तत्पुनर्युगलमेकोनाशीति दिनानि पालयन्ति, तेषा शरीरोच्छ्रयोऽष्टौ धनु शतानि, पल्योपमासख्येयभागप्रमाणमायु, स्तोककषायतया स्तोकप्रेमानुबन्धतया च ते मृत्वा दिवमुपसर्पन्ति, मरण च तेषा जृम्भिकाकाशक्षुतादिमात्रव्यापारपुरस्सरं भवति, न शरीरपीडाभरपुरस्सरमिति । अत्र गाथा –" हिंमगिरिनिग्गयपुधावरदाढा विदिसि सठिया लवणे । जोयणतिसए गतु तिन्निसए वित्थरायामा ॥ १ ॥ वेइयवणसजुया चउअतरदीव तेसि नामाइ । एगोरुग आभासिय वेसाणियनाम नगूली ॥ २ ॥ एसि परउ चउपणछसत्तअडनवयजोयणसएसु । हयकना गयकंना गोकंना सक्कुलीकना ॥ ३ ॥ आयसगमिंढमुहा अउमुहा गोमुहा चउरदीवा । अस्समुहा हत्थिमुहा सिहमुहा तह य वग्घमुहा ॥४॥ तत्तो य अस्सकना हत्थि अकन्ना य कन्नपावरणा । उक्कामुह मेहमुहा विज्जुमुहा विज्जुदता य ॥ ५ ॥ घणदतलट्ठदता निगूढदता य सुद्धदता

१ हिमगिरिनिर्गतपूर्वापरदाढा विदिशि सस्थिता लवणे । योजनत्रिशत गत्वा त्रीणि शतानि विस्तरायामा ॥ १ ॥ वेदिकावनखडयुताश्चत्वार आतरद्वीपास्तेषा नामानि । एकोरुक आभासिको वैषाणिकनामा नागोलि ॥ २ ॥ एषा परतश्चतु पचषट्सप्ताष्टनवकयोजनशतेषु । हयकर्णा गजकर्णो गोकर्णो शष्कुलीकर्ण ॥ ३ ॥ आदर्शमुखमेंढमुखायोमुखो गोमुखश्चत्वारो द्वीपा । अश्वमुखो हस्तिमुख सिंहमुखस्तथा च व्याघ्रमुख ॥ ४ ॥ ततश्चाश्वकर्णो हस्तिकर्णाश्च कर्णप्रावरण । उल्कामुखो मेघमुखो विद्युन्मुखो विद्युद्दन्तश्च ॥ ५ ॥ घनदन्त

य । इय सिहरिम्मि वि सेले अट्ठावीसंतरद्दीवा ॥ ६ ॥ ” उभयेऽपि मिलिताः षट्पंचाशत्संख्याः–“ एएसु जुगलधम्मा धणुसयअट्ठूसिया परमरूवा । पल्लअसंखिज्जाऊ गुणसीदिणवच्चपालणया ॥ ७ ॥ चउसट्ठीपिट्ठिकरंडमंडियंगा चउत्थभोई य । कप्पतरुपूरियासा सुरगइगामी तणुकसाया ॥ ८ ॥ शेषं सूत्रं स्पष्टम् । “ कालओ णं उज्जुमई जहन्नेणं पलिओवमस्स असंखिज्जइभागं, उक्कोसेण वि पलिओवमस्स असंखिज्जइभागं तीयं अणागयं च कालं जाणइ पासइ । तं चेव विउलमई अब्भहियतरागं जाणइ पासइ ” । जीतकल्पभाष्येऽप्युक्तम्–“ कालओ उज्जुमई उ जहन्नउक्कोसए वि पलियस्स । भागमसंखिज्जइमं अतीयएस्सेव कालदुगे ॥ १ ॥ जाणइ पासइ ते ऊ मणिज्जमाणे उ संन्निजीवाणं । ते चेव य विउलमई वितिमिरसुद्धे उ जाणेइ ॥ २ ॥ ” भावतस्तु तत्पर्यायाश्चिन्तनानुगतगुणपरिणतिरूपा ऋजुमतेर्विषय इति । चिन्तनीयं तु मूर्तममूर्तं वा त्रिकालगोचरमपि बाह्यमर्थमनुमानादवैति, “ जाणई बज्झे णुमाणाउ ” इति वचनात् । यत एतत्परिणता-

लष्टदन्तौ निगूढदन्तश्च शुद्धदन्तश्च । इत्येवं शिखरिण्यपि शैलेऽष्टाविंशतिरान्तरद्वीपाः ॥ ६ ॥. १ एतेषु युगलधर्माणो धनुःशताष्टोच्छ्रिताः परमरूपाः । पल्यासंख्येयायुष एकोनाशीतिदिनापत्यपालनकाः ॥ ७ ॥ चतुःषष्टिपृष्ठकरंडकमंडितांगाश्चतुर्थभोजिनश्च । कल्पतरुपूरिताशाः सुरगतिगामिनस्तनुकषायाः ॥ ८ ॥. २ कालत ऋजुमतिर्जघन्येन पल्योपमस्यासंख्येयभागं, उत्कृष्टेनापि पल्योपमस्यासंख्येयभागमतीतमनागतं च कालं जानाति पश्यति । तदेव विपुलमतिरभ्यधिकतरकं जानाति पश्यति । ३ कालत ऋजुमतिस्तु जघन्यत उत्कृष्टतोपि पल्यस्य । भागमसंख्येयमतीते एष्यति वा कालद्विके ॥ १ ॥ जानाति पश्यति तांस्तु मन्यमानांस्तु संज्ञिजीवानाम् । तांश्चैव विपुलमतिर्वितिमिरशुद्धांस्तु जानाति ॥ २ ॥ ४ जानाति बाह्यानुमानात्.

न्येतानि मनोद्रव्याणि इत्येतदन्यथानुपपत्तेरमुकोऽर्थोऽनेन चिन्तित इति लेखाक्षरदर्शनात्तदुक्तार्थमिव प्रत्यक्ष मनोद्रव्य-दर्शनाच्चिन्त्यमर्थमनुमिमीते । स चैष बाह्याभ्यन्तररूपो द्विविधोऽपि विषय स्फुटतरबहुतरविशेषाध्यासितत्वेन विपुलम-तेर्विमलतरोऽवसेय इति । निरूपित मन पर्यायज्ञानं । अथ केवलज्ञान व्याचिख्यासुराह " केवलमिगविहाण ति ' केवल केवलज्ञानमेकविधानमेकविध, प्रथमत एव सर्वद्रव्यक्षेत्रकालभावग्राहकत्वादिति भाव । इत्यभिहित केवलज्ञानं तदभि-धाने च व्याख्यातानि पचापि ज्ञानानि ॥ ८ ॥

इदानीमेतेषामावरणमाह-

*नेत्रेण-वास्त्वलग्नता भत दर्शन*

एसिं ज आवरण पडु व्व चक्खुस्स तं तयावरणं । दसणचउ पण निद्दा वित्तिसमं दंसणावरण ॥९॥

टीका-एषा मतिज्ञानादीना पंचाना ज्ञानाना यदावरणमाच्छादक, पट इव सूत्रादिनिष्पन्नशाटक इव, चक्षुषो लोचनस्य, तत्तेषा मतिज्ञानादीनामावरण तदावरणमुच्यते । इदमत्र हृदयम्-यथा घनघनतरघनतमेन पटेनावृत सन्निर्मलमपि चक्षु-र्मन्दमन्दतरमन्दतमदर्शन भवति तथा ज्ञानावरणेन कर्मणा घनघनतरघनतमेनावृतो जीव शारदशशधरकरनिकरनिर्म-लतरोपि मन्दमन्दतरमन्दतमज्ञानो भवति, तेन पटोपमं ज्ञानावरण कर्मोच्यते । तत्रावरणस्य सामान्यत एकरूपत्वेऽपि यत्पूर्वोक्तानेकभेदभिन्नस्य मतिज्ञानस्यानेकभेदमेवावरणस्वभावं कर्म तन्मतिज्ञानावरणमेकग्रहणेन गृह्यते चक्षुष पटल-मिव ।१। तथा पूर्वाभिहितभेदसंदोहस्य श्रुतज्ञानस्य यदावरणस्वभाव कर्म तच्छ्रुतज्ञानावरणम् ।२। तथा प्राक्प्रपचित-

भेदकदंबकस्यावधिज्ञानस्य यदावरणस्वभावं कर्म तदवधिज्ञानावरणम् ।३। तथा प्राग्निर्णीतभेदद्वयस्य मनःपर्यायज्ञानस्य यदावरणस्वभावं कर्म तन्मनःपर्यायज्ञानावरणम् ।४। तथा पूर्वप्ररूपितस्वरूपस्य केवलज्ञानस्य यदावरणस्वभावं कर्म तत्केवलज्ञानावरणम् ।५। उक्तं च बृहत्कर्मविपाके–" सरउग्गयससिनिम्मलतरस्स जीवस्स छायणं जमिह । नाणावरणं कम्मं पमोवमं होइ एवं तु ॥ १ ॥ जह निम्मला वि चक्खू पमेण केणावि छाईया संती । मंदं मंदतरागं पिच्छइ सा निम्मला जइ वि ॥ २ ॥ तह मइसुयनाणावरण अवहिमणकेवलाण आवरणं । जीवं निम्मलरूवं आवरइ इमेहिं भेएहिं ॥ ३ ॥ " तदेवमेतानि पंचावरणान्युत्तरप्रकृतयः, तन्निष्पन्नं तु सामान्येन ज्ञानावरणं मूलप्रकृतिः । यथाऽङ्गुलीपंचकनिष्पन्नो मुष्टिः, मूलत्वक्पत्रशाखादिसमुदयनिष्पन्नो वा वृक्षः, घृतगुडकणिक्कादिनिष्पन्नो वा मोदक इति । एवमुत्तरत्रापि भावनीयम् । व्याख्यातं पंचविधं ज्ञानावरणं कर्म । इदानीं नवविधं दर्शनावरणं कर्म व्याख्यानयन्नाह–" दंसणचउ पण निद्दा वित्तिसमं दंसणावरणं ति " इह भीमो भीमसेन इति न्यायात्, पदैकदेशे पदसमुदायोपचाराद्वा " दंसणचउ " इति शब्देन दर्शनावरणचतुष्कं गृह्यते । तत्र दृष्टिर्दर्शनं, दृश्यते परिच्छिद्यते सामान्यरूपं वस्त्वनेनेति वा दर्शनं, तस्यावरणान्याच्छादनानि दर्शनावरणानि तेषां चतुष्कं दर्शनावरणचतुष्कम् । तथा " पण निद्द त्ति " " द्राकृ " कुत्सितगतौ ( धातुपाठः )

१ शरदुद्गतशशिनिर्मलतरस्य जीवस्य च्छादनं यदिह । ज्ञानावरणं कर्म पटोपमं भवति एवं तु ॥ १ ॥ यथा निर्मलमपि चक्षुः पटेन केनापि च्छादितं सत् । मन्दं मन्दतरकं प्रेक्षते तत् निर्मलं यद्यपि ॥ २ ॥ तथा मतिश्रुतज्ञानावरणमवधिमनःकेवलानामावरणम् । जीवं निर्मलरूपमावृणोत्येभिर्भेदैः ॥ ३ ॥

द्राति कुत्सितत्वमविस्पष्टत्व गच्छति चैतन्य यासु ता निद्रा, " जिदादय " ए-३-१०८ इति ( सूत्रेण ) अड् प्रत्यय , पचेति पंचसंख्या –निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानार्द्धिरूपा निद्रा पच, निद्रापचक ( इत्यर्थ )। ततो दर्शनावरण-चतुष्क निद्रापचकमिति नवधा दर्शनावरण जवति । किंविशिष्टमित्याह–" विक्तिसम ति " वेत्रिणा प्रतिहारेण सम तुल्य वेत्रिसमम् । यथा राजान द्रष्टुकामस्याप्यनभिप्रेतस्य लोकस्य वेत्रिणा स्खलितस्य राज्ञो दर्शन नोपजायते, तथा दर्शन-स्वजावस्याप्यात्मनो येनावृतस्य स्तजकुम्जाजोरुहादिपदार्थसार्थस्य न दर्शनमुपजायते । तद्वेत्रिसम दर्शनावरणम् । उक्त च–" दंसणसीले जीवे दंसणघाय करेइ ज कम्म । त पमिहारसमाण दंसणवरण जवे कम्म ॥ १ ॥ जह रन्नो पमिहारो अणभिप्पेयस्स सो उ लोगस्स । रन्नो तह दरिसाव न देइ दहु पि कामस्स ॥ २ ॥ जह राया तह जीवो पमि-हारसम तु दंसणावरण । तेण हि विवधगेणं न पेच्छइ सो घडाईय ॥ ३ ॥ इति ॥ ए ॥

अथ दर्शनावरणचतुष्क व्याचिख्यासुराह–

चक्खुदिठिअचक्खूसेसिंदियओहिकेवलेहिं च । दंसणमिह सामन्न तस्सावरणं तय चउहा ॥ १० ॥

टीका–इह चक्षु शब्देन दृष्टिर्गृह्यते । अचक्षु शब्देन " सेसिंदियत्ति ' चक्षुर्वर्जशेषेन्द्रियाणि गृह्यन्ते । ततश्च चक्षु

---

१ दर्शनशीले जीवे दर्शनघात करोति यत्कर्म । तत्प्रतिहारसमान दर्शनावरण भवेत्कर्म ॥ १ ॥ यथा राज्ञ प्रतिहारोऽनभिप्रेतस्य स तु लोकस्य । राजस्तत्र दर्शन न ददाति द्रष्टुमपि कामस्य ॥ २ ॥ यथा राजा तथा जीव प्रतिहारसम तु दर्शनावरणम् । तेन हि विनिबन्धकेन न प्रेक्षते स घटादिकम् ॥ ३ ॥

श्चाचक्षुश्चावधिश्च केवलं च चक्षुरचक्षुरवधिकेवलानि तैः चक्षुरचक्षुरवधिकेवलैः । चशब्दोऽचक्षुः सेसेंदिय इत्यत्र मनसः संसूचकः । दर्शनमिह प्रवचने सामान्यं सामान्योपयोग उच्यते । यदुक्तम्--" जं[1] सामन्नग्गहणं जावाणं नेव कट्टु आगारं । अविसेसिऊण अत्ते दंसणमिय वुच्चए समए ॥ १ ॥ " तस्यावरणं दर्शनावरणं, तच्चतुर्धा नवति चक्षुर्दर्शनावरणमचक्षुर्दर्शनावरणमवधिदर्शनावरणं केवलदर्शनावरणमिति गाथाक्षरार्थः । नावार्थस्त्वयम्--इह चक्षुर्दर्शनं नाम यच्चक्षुषा रूपसामान्यग्रहणं तस्यावरणं चक्षुर्दर्शनावरणं चक्षुःसामान्योपयोगावरणमिति यावत् । अचक्षुषा चक्षुर्वर्जशेषेन्द्रियचतुष्टयेन मनसा च यद्दर्शनं स्वस्वविषयसामान्यपरिच्छेदोऽचक्षुर्दर्शनं तस्यावरणमचक्षुर्दर्शनावरणम् । अवधिना रूपिद्रव्यमर्यादया दर्शनं सामान्यार्थग्रहणमवधिदर्शनं तस्यावरणमवधिदर्शनावरणम् । केवलेन संपूर्णवस्तुतत्त्वग्राहकबोधविशेषरूपेण यद्दर्शनं वस्तुसामान्यांशग्रहणं तत् केवलदर्शनं तस्यावरणं केवलदर्शनावरणम् । अत्राह ननु यथावधिदर्शनावरणं कर्मोच्यते, तथा मनःपर्यायज्ञानस्यापि दर्शनावरणं कर्म किमिति नोच्यते? । उच्यते, मनःपर्यायज्ञानं तथाविधक्षयोपशमपाटवात् सर्वदा विशेषानेव गृह्णदुत्पद्यते, न सामान्यम्, अतस्तद्दर्शनाजावात्तदावरणं कर्मापि न नवति । अत्र च चक्षुर्दर्शनावरणोदय एकद्वित्रीन्द्रियाणां मूलत एव चक्षुर्न नवति, चतुःपंचेन्द्रियाणां तु नूतमपि चक्षुस्तथाविधे तदुदये विनश्यति तिमिरादिना वाऽस्पष्टं नवति । चक्षुर्वर्जशेषेन्द्रियमनसां पुनर्यथासंनवमनवनमस्पष्टनवनं वाऽचक्षुर्दर्शनावरणोदयादित्यनिहितं दर्शनावरणचतुष्कम् ॥ १० ॥

---

१ यत् सामान्यग्रहणं भावानां नैव कृत्वाकारम् । अविशेषयित्वाऽर्थान् दर्शनमित्युच्यते समये ॥ १ ॥

सम्प्रति निद्रापंचकमभिधित्सुराह- उपन्वार प्रयोग;

सुहपडिबोहा निद्दा, निद्दानिद्दा य दुक्खपडिबोहा । पयला ठिओवविठस्स पयलपयला उ चंकमओ ॥११॥

टीका-सुखेनाकृच्छ्रेण नखच्छोटिकामात्रेणापि प्रतिबोधो जागरणं स्वप्तुर्यस्यां स्वापावस्थायां सा सुखप्रतिबोधा निद्रा-तद्विपाकवेद्या कर्मप्रकृतिरपि कारणे कार्योपचारान्निद्रेत्युच्यते । निद्रातोऽतिशायिनी निद्रा-निद्रानिद्रा, " मयूरव्यंसका, दित्वान्मध्यपदलोपी समास " ( ३-१-११६ मयूरव्यसकेत्यादय ) च समुच्चये । दुःखेन कष्टेन बहुभिर्घोलनाप्रकारैरत्य-र्थमस्फुटतरीभूतचैतन्यत्वेन स्वप्तुः प्रतिबोधो यस्यां सा दुःखप्रतिबोधा । अत एव सुखप्रतिबोधनिद्रापेक्षयास्या अतिशा-यिनीत्वं, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रानिद्रा । प्रचलति विघूर्णते यस्यां स्वापावस्थायां प्राणी सा प्रचला । सा च स्थितस्योर्ध्वस्थानेन उपविष्टस्यासीनस्य वा भवति, तद्विपाकवेद्या कर्मप्रकृतिरपि प्रचला । प्रचलातोऽतिशायिनी प्रचला-प्रचला, इयं 'तु' पुनरर्थे चङ्कमतश्चंक्रमणमपि कुर्वतो जन्तोरुपतिष्ठते, अतः स्थानस्थितस्वप्तृप्रभवप्रचलामपेक्ष्यातिशायि-नीत्वमस्याः, तद्विपाकवेद्या कर्मप्रकृतिरपि प्रचलाप्रचला । सूत्रे च 'पयलेति' ह्रस्वत्वं " दीर्घह्रस्वौ मिथो वृत्तौ " ८-१-४ इति सूत्रेण । इति ॥ ११ ॥

दिणचिंतियत्थकरणी थीणद्धी अद्धचक्किअद्धबला । महुलित्तखग्गधारालिहणं व दुहा उ वेयणियं ॥१२॥

टीका-स्त्याना बहुत्वेन संघातमापन्ना गृद्धिरभिकाङ्क्षा जाग्रदवस्थाध्यवसितार्थसाधनविषया यस्यां स्वापावस्थायां सा

स्त्यानगृद्धिः। " गौणादयः " ८-२-१७४ इति प्राकृतसूत्रेण ' थीणद्धीति ' निपात्यते। अस्यां हि जाग्रदवस्थाध्यवसित-मर्थमुत्थाय साधयति। श्रूयते ह्येतदागमे कथानकम्-" क्वचित्प्रदेशे कोऽपि क्षुल्लको द्विरदेन दिवा खलीकृतः स्त्यानर्ध्युदये वर्तमानस्तस्मिन्नेव द्विरदे बद्धाभिनिवेशो रजन्यामुत्थाय तद्दन्तयुगलमुत्पाट्य स्वोपाश्रयद्वारे क्षिप्त्वा पुनः सुप्तवानित्यादि "। इमां च व्युत्पत्तिमाश्रित्याह-" दिणचिंतियत्थकरणी थीणद्धीति " दिने दिवसे चिन्तितमुपलक्षणत्वान्निशायामपि चिन्तितमध्यवसितमर्थं करोति साधयति निद्रानिद्रावतोरभेदोपचाराद्दिनचिन्तितार्थकरणी। " रम्यादिभ्यः ५-३-१२६ कर्तर्यनट्प्रत्ययः "। यद्वा स्त्याना पिण्डीभूता ऋद्धिरात्मशक्तिरस्यामिति स्त्यानर्द्धिः एतत्सद्भावे हि प्रथमसंहननस्य केशवार्धबलसदृशी शक्तिः, एनां च व्युत्पत्तिमाश्रित्याह-" अद्धचक्किअद्धबलत्ति " अर्धचक्रिणो वासुदेवस्य बलापेक्षयार्धं बलं स्थाम यस्या उदये जन्तोर्भवति सार्धचक्र्यर्धबला, तद्विपाकवेद्या कर्मप्रकृतिरपि थीणद्धीति। अत्र चक्षुर्दर्शनावरणादिचतुष्कं मूलत एव दर्शनलब्धिमुपहन्ति, निद्रापंचकं तु प्राप्ताया दर्शनलब्धेरुपघातकृत्। आह च गन्धहस्ती-" निद्रादयः समधिगताया एव दर्शनलब्धेरुपघाते वर्तन्ते, दर्शनावरणचतुष्टयं तूद्गमोच्छेदित्वात् समूलघातं हन्ति दर्शनलब्धिम्। इत्यभिहितं द्वितीयं नवविधं दर्शनावरणं। सांप्रतं तृतीयं कर्म वेद्यं वेदनीयापरपर्यायं व्याचिख्यासुराह-" महुलित्तेत्यादि " मधुना मधुररसेन लिप्ता खरंटिता खड्गस्य करवालस्य धारा तीक्ष्णाग्ररूपा, तस्या जिह्वया लेहनमिवास्वादनसदृशं, द्विधैव द्विप्रकारमेव सातासातभेदात्। ' तुशब्द ' एवकारार्थः। वेदनीयं वेद्यं कर्म भवति। इह च मधुलेहनरा-

श्रित्र सातवेदनीयं, खड्गधाराछेदनसममसातवेदनीयम् । उक्त च–" मडुआसायणसरिसो सायावेयस्स होइ हु विवागो । जं असिणा तहि छिज्जइ सो उ विवागो असायस्स ॥ १ ॥ इति ॥ १२ ॥ *विपाकोऽनुभव*

अथ गतिचतुष्टये सातासातस्वरूपमाह–

*॥ अथ मोहनीय प्रारम्भम् १३-२३*

**उंसन्न सुरमणुए सायमसाय तु तिरियनरएसु । मज्जं व मोहणीय दुविह दसणचरणमोहा ॥ १३ ॥**

टीका–उंसन्नशब्दो देशीवचनो बाहुल्यवाचक । यथा–" उंसन्न देवा साय वेयणं वेयंति " तत्र ' उंसन्न ' बाहुल्येन प्रायेणेत्यर्थ । सुराश्च देवा मनुजाश्च मनुष्या सुरमनुज ' समाहारद्वन्द्व ' तस्मिन् सुरमनुजे सुरेषु मनुजेष्वित्यर्थ । सात सातवेदनीय भवति । उंसन्नग्रहणाच्च्यवनकालेऽन्यदापि सुराणामसातोदयोऽप्यस्ति, चारकनिरोधवधबन्धनशीतातपादि भिर्मनुजानामप्यसातमिति । नरकभवा प्राणिनोऽप्युपचारान्नरका , ततस्तिर्यञ्चश्च नरकाश्च तिर्यग्नरकास्तेषु तिर्यक्षु नरकेष्वित्यर्थ । उंसन्नशब्दस्येहापि सबन्धादसात, ' तु ' पुनरर्थे व्यवहितसबन्धश्च, स चैव योज्यते, तिर्यग्नरकेषु पुनरसात प्रायो भवति । उंसन्नग्रहणात् केषाचित्पट्टहस्तितुरगादीना तिरश्चा नारकाणामपि जिनजन्मकल्याणकादिषु सातमप्यस्ति । इत्युक्त द्विविध वेदनीय तृतीय कर्म । इदानीमष्टाविंशतिविध मोहनीय चतुर्थ कर्माभिधित्सुराह–" मज्ज व मोहणीय-

---

१ मध्वासादनसदृश सातवेद्यस्य भवति तु विपाक । यदसिना तत्र छिद्यते स तु विपाकोऽसातस्य ॥ १ ॥ २ बाहुल्येन देवा सात वेदा वेदयति

मित्यादि " मद्यमिव मदिरासदृशं, मोहयतीति मोहनीयं कर्म। " प्रवचनीयादयः " ५-१-८ ( इति सूत्रेण ) कर्तर्यनीयप्रत्ययः। यथा हि मद्यपानमूढः प्राणी सदसद्विवेकविकलो भवति, तथा मोहनीयेनापि कर्मणा मूढो जन्तुः सदसद्विवेकविकलो भवतीति। तच्च द्विविधं द्विभेदं, कथमित्याह–" दंसणचरणमोहत्ति " दर्शनमोहाच्चरणमोहादित्यर्थः। तत्र दृष्टिर्दर्शनं यथावस्थितवस्तुपरिच्छेदस्तन्मोहयतीति " कर्मणोऽण् " ५-१-७२ इत्यण्प्रत्यये दर्शनमोहम्। चरन्ति परमपदं गच्छन्ति जीवा अनेनेति चरणं चारित्रं तन्मोहयतीति चरणमोहमिति ॥ १३ ॥

अथ दर्शनमोहं व्याख्यानयन्नाह–

**दंसणमोहं तिविहं सम्मं मीसं तहेव मिच्छत्तं। सुद्धं अद्धविसुद्धं अविसुद्धं तं हवइ कमसो ॥ १४ ॥**

टीका–दर्शनमोहं पूर्वोक्तशब्दार्थं त्रिविधं त्रिप्रकारं भवति। 'सम्मं ति' सम्यक्त्वं, मिश्रं सम्यग्मिथ्यात्वं, तथैव मिथ्यात्वम्। एतदेव स्वरूपत आह, शुद्धमर्धविशुद्धमविशुद्धं तद्भवति क्रमशः क्रमेणेति। अयमत्रार्थः–मिथ्यात्वपुद्गलकदंबकं मदनकोद्रवन्यायेन शोधितं सद्विकाराजनकत्वेन शुद्धं सम्यक्त्वं भवति। तदेव किंचिद्विकारजनकत्वेनार्धविशुद्धं मिश्रम्। तदेव सर्वथाप्यविशुद्धं मिथ्यात्वमिति। उक्तं हि–" तद्यथेह प्रदीपस्य स्वच्छाभ्रपटलैर्गृहं। न करोत्यावृतिं कांचिदेवमेतद्रुचेरपि ॥ १ ॥ एकपुंजी द्विपुंजी च त्रिपुंजी वा ननु क्रमात्। दर्शन्युभयवांश्चैव मिथ्यादृष्टिः प्रकीर्तितः ॥ २ ॥ " अत्राह–सम्यक्त्वं कथं दर्शनमोहनीयं स्यात्, न हि तद्दर्शनं मोहयति, तस्यैव दर्शनत्वात्। उच्यते, मिथ्यात्वप्रकृतित्वेनातिचारसंभवादौपशमिकादिमोहत्वाच्च दर्शनमोहनीयमिति ॥ १४ ॥

इत्युक्तं संक्षेपतस्त्रिविधं दर्शनमोहम्, सम्प्रत्येतदेव व्याचिख्यासुः प्रथमं सम्यक्त्वस्वरूपमाह-

**जीयअजियपुन्नपावासवसंवरबंधमुक्खनिज्जरणा । जेणं सद्दहइ तयं सम्मं खइगाइबहुभेयं ॥ १५ ॥**

टीका-जीवश्चाजीवश्च पुण्यं च पापं चाश्रवश्च संवरश्च बन्धश्च मोक्षश्च निर्जरणं च निर्जरा, एतानि नव तत्त्वानि येन कर्मणा श्रद्दधाति प्रत्येति तत्सम्यक्त्वमुच्यते । तत्र नव तत्त्वान्यमूनि-" जीवाजीवा पुन्नं पावासवसंवरो य निज्जरणा । बंधो मुक्खो य तहा नव तत्ता हुंति नायव्वा ॥ १ ॥ एगविहदुविहतिविहा चउव्विहा पंचछव्विहा जीवा । चेयणतसइयरेहिं वेयगईकरणकायेहिं ॥ २ ॥ एगिंदिय सुहुमियरा बितिचउसन्नीअसन्निपंचिंदी । अपज्जत्ता पज्जत्ता चउदसभेया अहव जीवा ॥ ३ ॥ पणथावर सुहुमियरा परित्तवणसन्निअसन्निविगलतिगं । इय सोलस अपज्जत्ता पज्जत्ता जीवबत्तीसं ॥ ४ ॥ धम्माधम्मागासा य दव्वदेसप्पएसओ तिविहा । गइठाणवगाहगुणा कालो य अरूविणो दसहा ॥ ५ ॥

---

१ जीवाजीवौ पुण्यं पापाश्रवसंवराश्च निर्जरणम् । बन्धो मोक्षश्च तथा नव तत्त्वानि सन्ति ज्ञातव्यानि ॥ १ ॥ एकविधद्विविधत्रिविधाश्चतुर्विधाः पञ्चषड्विधा जीवाः । चेतनत्रसेतरैर्वेदगतिकरणकायैः ॥ २ ॥ एकेन्द्रियाः सूक्ष्मेतरा द्वित्रिचतुःसंज्ञ्यसंज्ञिपंचेन्द्रियाः । अपर्याप्ताः पर्याप्ताश्चतुर्दशभेदा अथवा जीवाः ॥ ३ ॥ पञ्चस्थावराः सूक्ष्मेतराः प्रत्येकवनसंज्ञ्यसंज्ञिविकलत्रिकम् । एते षोडशापर्याप्ताः पर्याप्ता जीवा द्वात्रिंशत् ॥ ४ ॥ धर्माधर्माकाशाश्च द्रव्यदेशप्रदेशतस्त्रिविधाः । गतिस्थानावकाशगुणाः कालश्चारूपिणो दशधा ॥ ५ ॥

खंधा देसपएसा परमाणू पुग्गला चउह रूवी । जीवं विणा अचेयण अकिरिया सवगय वोमं ॥ ६ ॥ कालो माणुसलोए जियधम्माधम्म लोयपरिमाणा । सवे दवं इत्ता कालविणा अत्थिकाया य ॥ ७ ॥ धम्माधम्मागासा कालो परिणामिए इहं भावे । उदयपरिणामिए पुग्गला उ सवेसु पुण जीवा ॥८॥ जीवाजीवतत्त्वे ॥ तिरिनरसुराउ उच्चं सायं परघायआय-वुज्जोयं । जिणऊसासनिमाणं पणिंदिवइरुसभचउरंसं ॥ ९ ॥ तसदस चउवन्नाई सुरमणुदुग पंचतणु उवंगतिगं । अगुरु-लहु पढमखगई बायालं पुन्नपगईउ ॥ १० ॥ पुण्यतत्त्वम् ॥ नाणंतराय पण पण नव बीए नियअसायमिच्छत्तं । थावर-दस नरयतिगं कसायपणवीस तिरियदुगं ॥ ११ ॥ चउजाई उवघायं अपढमसंघयणखगइसंठाणा । वन्नाइअसुभचउरो वासीई पावपगईउ ॥ १२ ॥ पापतत्त्वम् ॥ इंदिय कसाय अवय किरिया पण चउर पंच पणवीसा । जोगतिगं

---

१ स्कन्धा देशप्रदेशाः परमाणवः पुद्गलाश्चतुर्धा रूपिणः । जीवं विनाऽचेतना अक्रियाः सर्वगतं व्योम ॥६॥ कालो मनुष्यलोके जीव-धर्माधर्मा लोकपरिमाणाः । सर्वाणि द्रव्याणीमानि कालं विनास्तिकायाश्च ॥ ७ ॥ धर्माधर्माकाशाः कालः पारिणामिके इह भावे । उदयपारिणामिके पुद्गलास्तु सर्वेषु पुनर्जीवाः ॥ ८ ॥ तिर्यग्नरसुरायुरुच्चैः ( गोत्रं ) सातं पराघातातपोद्योतम् । जिनोच्छ्वासनिर्माणं, पंचे-न्द्रियवज्रर्षभचतुरस्रम् ॥ ९ ॥ त्रसदशकं चत्वारो वर्णादयः सुरमनुष्यद्विकं पंचतनव उपांगत्रिकम् । अगुरुलघु प्रथमखगतिर्द्विचत्वारिंशत्पु-ण्यप्रकृतयः ॥ १० ॥ ज्ञानान्तरायाः पंच पंच नव द्वितीये नीचासातमिथ्यात्वम् । स्थावरदशकं नरकत्रिकं कषायपंचविंशतिस्तिर्यग्द्विकम् ॥ ११ ॥ चतस्रो जातय उपघातमप्रथमसंहननखगतिसंस्थानानि । वर्णाद्यशुभचतुष्कं द्व्यशीतिः पापप्रकृतयः ॥ १२ ॥ इन्द्रियकषा-याव्रतक्रियाः पंच चत्वारः पंच पंचविंशतिः । योगत्रिकं द्वाचत्वारिंशदाश्रवभेदा इमाः क्रियाः ॥ १३ ॥

वायाला आसवभेया इमा किरिया ॥ १३ ॥ काइय अहियरणीया पाउसिया पारितावणी किरिया । पाणाइवाय रंभिय परिग्गहिया मायवत्ती य ॥ १४ ॥ मिच्छादंसणवित्ती अप्पच्चक्खाण दिट्ठि पुट्ठी य । पाडुच्चिय सामंतोवणीय नेसत्थि साहत्थी ॥ १५ ॥ आणवणि वियारणिया अणभोगा अणवकखपच्चइया । अन्ना पओग समुदाण पिज्जदोसेरियावहिया ॥ १६ ॥ आश्रवतत्त्वं ॥ भावणा चरित्त परीसह समिई जइधम्म गुत्ति, बारस उ । पंच दुवीसा पण दस तिय संवरभेय-सगवन्ना ॥ १७ ॥ संवरतत्त्वम् ॥ बारसविह तवो निज्जरा उ अहवा अकामसकामा । पयइ ठिई अणुभाग प्पएसभेया चउहबंधो ॥ १८ ॥ निर्जराबन्धतत्त्वे ॥ संतपयपरूवणया दव्वपमाण च खित्त फुसणा य । कालो अंतरभागा भावप्पबहु नवह मुक्खो ॥१९॥ जिण अजिण तित्थ तित्था गिहिअन्नसलिगथीनरनपुंसा । पत्तेयसयंबुद्धा बिवुद्धबोहिक्कणिक्का य ॥२०॥

---

१ कायिक्यधिकरणिकी प्राद्वेषिकी पारितापनिकी क्रिया । प्राणातिपातिक्यारंभिकी पारिग्रहिकी मायाप्रत्ययिकी च॥१४॥मिथ्यादर्शनप्रत्ययिकी अप्रत्याख्यानिकी च दृष्टिका स्पर्शिका च । प्रातित्यकी सामंतोपनिपातिकी नैशस्त्रिकी स्वाहस्तिकी ॥ १५ ॥ आनयनिकी विदारणिकाऽनाभोगिकी अनवकाक्षाप्रत्ययिका । अन्यप्रायोगिकी समुदानिकी प्रेमिकी द्वैषिकी ऐर्यापथिकी ॥ १६ ॥ भावना चारित्रपरीषहसमितियतिधर्मगुप्तय, द्वादश तु । पंचद्वाविंशति पंचदशत्रिक संवरभेदा सप्तपंचाशत् ॥ १७ ॥ द्वादशविध तपो निर्जरा अथवा अकामसकामा । प्रकृतिस्थितिअनुभागप्रदेशभेदाच्चतुर्धा बन्ध ॥ १८ ॥ सत्पदप्ररूपणता द्रव्यप्रमाण च क्षेत्रस्पर्शना च । कालोऽन्तरभागौ भावाल्पबहुत्वे नवधा मोक्ष ॥ १९ ॥ जिनाजिनतीर्थातीर्थागृहस्थान्यस्वलिंगस्त्रीनरनपुंसका । प्रत्येकस्वयंबुद्धा विबुद्ध-बोधितैकानेके(सिद्धा) च ॥ २० ॥

इति मोक्षतत्त्वं ॥ इत्युक्तं संक्षेपतो नवतत्त्वस्वरूपं विस्तरतस्तु श्रीधर्मरत्नटीकातोऽवसेयम् । तदेवं येन कर्मणामूनि नव तत्त्वानि श्रद्दधाति तत् सम्यक्त्वं, किंविशिष्टं? "खइयाइबहुभेयंति" क्षायिकमादौ येषां ते क्षायिकादयो बहवो भेदाः प्रकारा यस्य तत्क्षायिकादिबहुभेदम् । इहादिशब्दाद्वेदकौपशमिकसास्वादनक्षायोपशमिकग्रहणम् । एतद्व्याख्यानगाथा- "खीणे दंसणमोहे तिविहंमि वि खाइयं भवे सम्मं । वेयगमिह सबोइयचरमिल्लयपुग्गलग्गासं ॥ १ ॥ उवसमसेढीगयस्स उ होइ हु उवसामियं तु सम्मत्तं । जो वा अकयतिपुंजो अखवियमिच्छो लहइ संमं ॥ २ ॥ उवसमसम्मत्ताउ चइउं मिच्छं अपावमाणस्स । सासायणसम्मत्तं तयंतरालंमि छावलियं ॥ ३ ॥ मिच्छत्तं जमुइन्नं तं खीणं अणुइयं च उवसंतं । मीसीभावपरिणयं वेइज्जं तं खउवसमं ॥ ४ ॥" इत्युक्तं सम्यक्त्वम् ॥ १५ ॥

अथ मिश्रमाह-

**मीसा न रागदोसो जिणधम्मे अंतमुहु जहा अन्ने । नालियरदीवमणुणो मिच्छं जिणधम्मविवरीयं ॥१६॥**

टीका-मिश्रान्मिश्रोदयाज्जीवस्य जिनधर्मे जिनधर्मस्योपरि न रागो मतिदौर्बल्यादिना एकान्तनिश्चयात्मकश्रद्धानरूपः

---

१ क्षीणे दर्शनमोहे त्रिविधेऽपि क्षायिकं भवेत्सम्यक्त्वम् । वेदकमिहसर्वोदित चरमपुद्गलग्रासम् ॥ १ ॥ उपशमश्रेणिगतस्य तु भवति ह्यौपशमिकं तु सम्यक्त्वम् । यो वाकृतत्रिपुंजोऽक्षपितमिथ्यात्वो लभते सम्यक्त्वं ॥ २ ॥ उपशमसम्यक्त्वाच्च्युत्वा मिथ्यात्वमप्राप्यमाणस्य । सास्वादनसम्यक्त्वं तदन्तराले षडावलिकम् ॥ ३ ॥ मिथ्यात्वं यदुदीर्णं तत्क्षीणमनुदितं चोपशान्तम् । मिश्रीभावपरिणतं वेद्यमानं तत्क्षायोपशमिकम् ॥ ४ ॥

प्रीतिविशेष । न च द्वेष एकान्तविप्रतिपत्तिपरिणामोपजातनिन्दात्मकोऽप्रीतिरूप, मिश्रोदयश्च "अतमुहुत्ति" अन्तर्मुहूर्तं भिन्नमुहूर्तकाल यावत् भवतीत्यर्थः । अथ कथं मिश्रोदयाज्जिनधर्मे न रागो न द्वेष इत्याशक्य दृष्टान्तमाह–'जहा अन्ने' इत्यादि, यथेत्युदाहरणोपन्यासे । अन्ने कूराद्योदने नालिकेरद्वीपमनुजस्य नालिकेरद्वीपवासिपुरुषस्य न रागो न च द्वेषोऽदृष्टाश्रुतत्वेन उक्तं च बृहत्कल्पबृहच्चूर्णौ–"जहा नालिकेरदीववासिस्स अऽच्छुहाइयस्स वि पुरुसस्स ऽच्छेयणाऽए अणेगविहे वि ढोइए तस्स आहारस्स उवरिं न रुई न य निंदा, जेण कारणेण सो उयणाऽउ आहारो न कयाऽ दिट्ठो नावि सुओ । एव सम्मामिच्छद्दिट्ठिस्स वि जीवाऽपयत्थाण उवरि न रुई न य निदा" इत्यादि । उक्त मिश्र । सम्प्रति मिथ्यात्वमाह–"मिच्छ जिणधम्मविवरीय ति" 'मिच्छ ति' मिथ्यात्व जिनधर्माद्विपरीत विपर्यस्त ज्ञेयमिति शेष । अत्रायमाशय, रागद्वेषमोहादिकलङ्काङ्कितेऽदेवेऽपि देवबुद्धि । "धर्मज्ञो धर्मकर्ता च सदा धर्मपरायण । सत्त्वाना धर्मशास्त्रार्थदेशको गुरुरुच्यते ॥ १ ॥" इत्यादिप्रतिपादितगुरुलक्षणविलक्षणेऽगुरावपि गुरुबुद्धि । सयमसूनृतशौचब्रह्मसत्यादिस्वरूपधर्मप्रतिपक्षेऽधर्मेऽपि धर्मबुद्धिरिति मिथ्यात्वम् । उक्त मिथ्यात्व, तद्भणने चाभिहित त्रिविधमपि दर्शनमोहनीयम् ॥ १६ ॥

---

१ यथा नालिकेरद्वीपवासिनोऽतिक्षुधार्दितस्यापि पुरुषस्येहौदनादिकेऽनेकविधेऽपि ढौकिते तस्याहारस्योपरि न रुचिर्न च निन्दा, येन कारणेन स ओदनादिक आहारो न कदाचिद्दृष्टो नापि श्रुत । एव सम्यग्मिथ्यादृष्टेरपि जीवादिपदार्थानामुपरि न रुचिर्न च निन्दा ।

इदानीं चारित्रमोहनीयमभिधित्सुराह–

**सोलसकसाय नव नोकसाय दुविहं चरित्तमोहणियं । अणअप्पच्चक्खाणा पच्चक्खाणा य संजलणा १७**

टीका–द्विविधं द्विभेदं चारित्रमोहनीयं भवति। तद्यथा, " सोलसकसाय त्ति " कष्यन्ते हिंस्यन्ते परस्परमस्मिन् प्राणिन इति कषः संसारः । कषमयन्ते गच्छन्त्येभिर्जन्तव इति कषायाः । यद्वा कषस्यायो लाभो येभ्यस्ते कषायाः क्रोधमानमायालोभाः । तत्र क्रोधोऽक्षान्तिपरिणतिरूपः, मानो जात्यादिसमुत्थोऽहंकारः, माया परवंचनाद्यात्मिका, लोभोऽसन्तोषात्मको गृद्धिपरिणामः । ततः षोडशसंख्याः कषायाः कषायमोहनीयमुच्यते । विभक्तिलोपश्च प्राकृतत्वात्, एवमुत्तरत्रापि । " नव नोकसाय त्ति " कषायैः सहचरा नोकषायास्ते च नव, हास्यादयः षट् त्रयो वेदाः । अत्र नोशब्दः साहचर्यवाची । एषां हि केवलानां न प्राधान्यमस्ति, किं तु कषायैरनन्तानुबन्ध्यादिभिः सहोदयं यांति, तद्विपाकसदृशमेव विपाकं दर्शयन्ति, बुधग्रहवदन्यसंसर्गमनुवर्तत इति भावः । कषायोद्दीपनाद्वा नोकषायाः । उक्तं च–" कषायसहवर्तित्वात् कषायप्रेरणादपि । हास्यादिनवकस्योक्ता नोकषायकषायता ॥ १ ॥ " ततो नवसंख्या नोकशाया नोकषायमोहनीयमुच्यते । अथ यथोद्देशं निर्देश इति न्यायात् प्रथमं कषायमोहनीयं व्याख्यानयन्नाह " अणअप्पच्चक्खाणेत्यादि " ' अण त्ति ' अनन्तानुबन्धिनः । तत्रानन्तं संसारमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनः । यदवाचि–" यस्मादनन्तसंसारमनुबध्नन्ति देहिनाम् । ततोऽनन्तानुबन्धीति संज्ञाद्येषु निवेशिता ॥ १ ॥ " ते चत्वारः क्रोधमानमायालोभाः ।

---

१ आद्याः कषायाः ।

यद्यपि चैतेषां शेषकषायोदयरहितानामुदयो नास्ति, तथाप्यवश्यमनन्तसंसारमूलकारणमिथ्यात्वोदयाक्षेपकत्वादेषामेवानन्तानुबन्धित्वव्यपदेशः । शेषकषाया हि नावश्यं मिथ्यात्वोदयमाक्षिपन्त्यतस्तेषामुदययौगपद्ये सत्यपि नायं व्यपदेश इत्यसाधारणमेतेषामेवैतन्नामेति । तथा न विद्यते स्वल्पमपि प्रत्याख्यानं येषामुदयादतोऽप्रत्याख्यानाः । यदवाचि—"नाल्पमप्युत्सहेद्येषां प्रत्याख्यानमिहोदयात् । अप्रत्याख्यानसञ्ज्ञातो द्वितीयेषु निवेशिता ॥ १ ॥" ते चत्वारः क्रोधमानमायालोभाः । तथा प्रत्याख्यानं सर्वविरतिरूपमावृण्वन्तीति प्रत्याख्यानावरणाः । यदभ्यगादि—"सर्वसावद्यविरतिः प्रत्याख्यानमिहोच्यते । तदावरणसञ्ज्ञातस्तृतीयेषु निवेशिता ॥ १ ॥" ते चत्वारः क्रोधमानमायालोभाः । तथा परीषहोपसर्गोपनिपाते सति चारित्रिणमपि 'सशब्द ईषदर्थे' सम् ईषज्ज्वलयन्ति दीपयन्तीति सञ्ज्वलनाः । यदभ्यधायि—"परीषहोपसर्गोपनिपाते यतिमप्यमी । समीषज्ज्वलयन्त्येव तेन सञ्ज्वलनाः स्मृताः ॥ १ ॥" ते चत्वारः क्रोधमानमायालोभाः । तदेवं चत्वारश्चतुष्कका षोडश भवन्तीत्युक्ताः षोडश कषायाः ॥ १७ ॥

साम्प्रतमेतेषामेव विशेषतः किञ्चित् स्वरूपं प्रतिपिपादयिषुराह—

**जाजीववरिसचउमासपक्खगा नरयतिरियनरअमरा । सम्माणुसव्वविरईअहखायचरित्तघायकरा ॥१८॥**

टीका—'जाजीव त्ति' "यावत्तावज्जीवितावर्तमानावटप्रावारकदेवकुलैवमेवे वः" ८-१-२७१ इति प्राकृतसूत्रेण वकारलोपे यावज्जीवं च वर्षं च चतुर्मासं च पक्षश्च यावज्जीववर्षचतुर्मासपक्षास्तान् गच्छन्तीति यावज्जीववर्षचतुर्मासपक्षगाः ।

"नाम्नो गमः खड्डौ च विहायसस्तु विह" ५-१-१३१ इति डप्रत्ययः । इदमुक्तं भवति, यावज्जीवानुगा अनन्तानुबन्धिनः, वर्षगा अप्रत्याख्यानावरणाः, चतुर्मासगाः प्रत्याख्यानावरणाः, पक्षगाः संज्वलनाः । इदं च "फरुसवयणेण दिणतवं अहिक्खिवंतोय हणइ मासतवं । वरिसतवं सवमाणो हणइ हणंतो य सामन्नं ॥ १" इत्यादिवद्व्यवहारनयमाश्रित्योच्यते, अन्यथा हि कथं बाहुबलिप्रभृतीनां पक्षादिपरतोऽपि संज्वलनाद्यवस्थितिः श्रूयते, अन्येषां च संयतादीनामाकर्षादिकाले प्रत्याख्यानावरणानामप्रत्याख्यानावरणानामनन्तानुबन्धिनां चान्तर्मुहूर्तादिकं कालमुदयः श्रूयत इति । तथा नरकगतिकारणत्वादनन्तानुबन्धिनः कषाया अपि नरकाः, भवति च कारणे कार्योपचारः, यथा—"आयुर्घृतं नड्वलोदकं पादरोग इति । एवं तिर्यग्गतिकारणत्वात्तिर्यंचोऽप्रत्याख्यानावरणाः । नरगतिकारणत्वान्नराः प्रत्याख्यानावरणाः । अमरगतिकारणत्वादमराः संज्वलनाः । एतदुक्तं भवति-अनन्तानुबन्ध्युदये मृतो नरकगतावेव गच्छति, अप्रत्याख्यानावरणोदये मृतस्तिर्यक्षु, प्रत्याख्यानावरणोदये मृतो मनुष्येषु, संज्वलनोदये पुनर्मृतोऽमरेष्वेव गच्छति । उक्तश्चायमर्थः पश्चानुपूर्व्यान्यत्रापि—"[२]पक्खचउमासवच्छरजावज्जीवाणुगामिणो भणिया । देवनरतिरियनारयगइसाहणहेयवो नेया ॥ १ ॥" इदमपि व्यवहारनयमधिकृत्योच्यते, अन्यथा हि अनन्तानुबन्ध्युदयवतामपि मिथ्यादृशां केषांचिदुपरितनग्रैवेयकेषूत्पत्तिः श्रूयते । प्रत्याख्यानावरणोदयवतां देशविरतानां देवगतिः, अप्रत्याख्यानावरणोदयवतां च सम्यग्दृ-

१ परुषवचनेन दिनतपोऽधिक्षिपंश्च हन्ति मासतपः । वर्षतपः शपमानः हन्ति घ्नंश्च श्रामण्यम् ॥ १ ॥ २ पक्षचतुर्मासवत्सरयावज्जीवानुगामिनो भणिताः । देवनरतिर्यङ्नारकगतिसाधनहेतवो ज्ञेयाः ॥ १ ॥

ष्टिदेवाना मनुष्यगति । तथा 'सम्मत्ति' सम्यक्त्व च 'अणुमव्वविरइ त्ति' निरतिशब्दस्य प्रत्येक सवन्धादणु- निरतिश्च देशविरति सर्वविरतिश्च यथाख्यातचारित्र च सम्यक्त्वाणुसर्वविरतियथाख्यातचारित्राणि तेषा घातो विनाश सम्यक्त्वाणुसर्वविरतियथाख्यातचारित्रघातस्त कुर्वन्तीत्येवशीला सम्यक्त्वाणुसर्वविरतियथाख्यातचारित्रघातकरा । एतदुक्तं भवति–अनन्तानुबन्धिन• कषाया सम्यक्त्वघातका, यदाहु श्रीभद्रबाहुस्वामिपादा –"पढमिल्लुयाण उदए नियमा सजोयणा कसायाण । सम्मदसणलभ भवसिद्धीया वि न लहति ॥ १ ॥" अप्रत्याख्यानावरणा देशविरतेर्घातका न सम्यक्त्वस्येत्यर्थाद्गम्यम् । यदाहु पूज्यपादाः–"बीयकसायाणुदये अप्पच्चक्खाणनामधिज्जाण । सम्मदसणलभ विरया-विरय न उ लहति ॥ १॥" प्रत्याख्यानावरणास्तु सर्वविरतेर्घातका, सामर्थ्याच्च देशविरते । उक्त च -"तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाण । देसिक्कदेसविरइ चरित्तलभ न उ लहति ॥ १ ॥" संज्वलना पुनर्यथाख्यातचारित्रस्य घातका, न सामान्यत सर्वविरते । उक्त च श्रीमदाराध्यपादै –"मूलगुणाणं लभ न लहइ मूलगुणघाइण उदए । सजलणाण उदए न लहइ चरण अहक्खाय ॥ १ ॥" इति ॥ १७ ॥

---

१ प्राथमिकानामुदये नियमात्सयोजना कषायाणाम् । सम्यग्दर्शनलाभ भवसिद्धिका अपि न लभन्ते ॥ १ ॥ २ द्वितीयकषायाणामुदयेऽप्रत्याख्याननामधेयानाम् । सम्यग्दर्शनलाभ विरताविरत न तु लभन्ते ॥ १ ॥ ३ तृतीयकषायाणामुदये प्रत्याख्यानावरणनामधेयानाम्। देशैकदेशविरति चरित्रलाभ न तु लभन्ते ॥ १ ॥ ४ मूलगुणाना लाभ न लभते मूलगुणघातिनामुदये । सज्वलनानामुदये न-लभते चरित्र यथाख्यातम् ॥ १ ॥

अथ जलरेखादिदृष्टान्तेन किंचित्सविशेषं क्रोधादिकषायाणां स्वरूपं व्याचिख्यासुराह—

**जलरेणुपुढविपव्वयराईसरिसो चउव्विहो कोहो । तिणिसलयाकट्ठियसेलत्थंभोवमो माणो ॥ १९ ॥**

टीका—इह राजिशब्दः सदृशशब्दश्च प्रत्येकं संबध्यते । ततो जलराजिसदृशस्तावत् संज्वलनः क्रोधः, यथा यष्ट्यादिभिर्जलमध्ये राजी रेखा क्रियमाणा शीघ्रमेव निवर्तते, तथा यः कथमप्युदयं प्राप्तोऽपि सत्वरमेव व्यावर्तते स संज्वलनः क्रोधोऽभिधीयते । रेणुराजिसदृशः प्रत्याख्यानावरणः क्रोधः, अयं हि संज्वलनक्रोधापेक्षया तीव्रत्वाद्रेणुमध्यविहितरेखावच्चिरेण निवर्तत इति भावः । पृथिवीराजिसदृशस्त्वप्रत्याख्यानावरणो, यथा स्फुटितपृथिवीसंबन्धिनी राजिः कचवरादिभिः पूरिता कष्टेनापनीयते, एवमेषोऽपि प्रत्याख्यानावरणापेक्षया कष्टेन निवर्तत इति भावः । विदलितपर्वतराजिसदृशः पुनरनन्तानुबन्धी क्रोधः कथमपि निवर्तयितुमशक्य इत्यर्थः । उक्तश्चतुर्विधः क्रोधः । इदानीं मानोऽभिधीयते—तत्र तिनिसलतोपमः संज्वलनो मानः, यथा तिनिसो वनस्पतिविशेषस्तत्संबन्धिनी लता सुखेनैव नमति, एवं यस्य मानस्योदये जीवः स्वाग्रहं मुक्त्वा सुखेनैव नमति स संज्वलनमानः । यथा स्तब्धं किमपि काष्ठमग्निस्वेदादिबहूपायैः कष्टेन नमत्येवं यस्य मानस्योदये जीवोऽपि कष्टेन नमति स काष्ठोपमः प्रत्याख्यानावरणो मानः । यथास्थि दृढं बहुतरैरुपायैरतितरां महता कष्टेन नमति, एवं यस्य मानस्योदये जीवोऽप्यतितरां महता कष्टेन नमति सोऽस्थ्युपमोऽप्रत्याख्यानावरणो मानः । शिलायां घटितः शैलः शैलश्चासौ स्तंभश्च शैलस्तंभस्तदुपमस्त्वनन्तानुबन्धी मानः कथमप्यनमनीय इत्यर्थः ॥१९॥

छक्तश्चतुर्विधो मान । अथ मायालोभौ व्याख्यानयन्नाह–

मायावलेहिगोमुत्तिमिढसिगघणवंसिमूलसमा । लोहो हलिद्दखजणकद्दमकिमिरागसामाणो ॥ २० ॥

टीका–मायावलेखिकासमा सज्वलनी, धनुरादीनामुल्लिख्यमानाना यावलेखिका वक्रत्वरूपा पतति, यथासौ कोमलत्वात्सुखेनैव प्राञ्जलीक्रियते, एव यस्या उदये समुत्पन्नापि हृदये कुटिलता सुखेनैव निवर्तते सा सज्वलनी माया । गौर्वलीवर्दस्तस्य मार्गे गच्छतो वक्रतया पतिता मूत्रधारा गोमूत्रिकाभिधीयते, यथासौ शुष्का पवनादिभि किमपि कष्टेन नीयते, एव यज्जनिता कुटिलता कष्टेनापगच्छति, सा गोमूत्रिकासमा प्रत्याख्यानावरणी माया । एव मेषशृगसमायामप्यप्रत्याख्यानावरणमायाया भावना कार्या, नवरमेषा कष्टतरनिवर्तनीया । घनवंशीमूलसमा त्वनन्तानुबन्धिनी माया, यथा निबिडवशीमूलस्य कुटिलता किल वह्निनापि न दह्यते, एव यज्जनिता मन कुटिलता कथमपि न निवर्तते, सानन्तानुबन्धिनी मायेत्यर्थ । तथा लोभो हरिद्रारागसमान सज्वलन, यथा वाससि हरिद्राराग सूर्यातपस्पर्शादिमात्रादेव निवर्तते तथायमपीत्यर्थ । कष्टनिवर्तनीयो वस्त्रविलग्नप्रदीपादिखजनसमान प्रत्याख्यानावरणलोभ । कष्टतरापनेयो वस्त्रविलग्ननिबिडकर्दमसमानोऽप्रत्याख्यानावरणलोभ । कृमिरागरक्तपट्टसूत्ररागसमान कथमप्यपनेतुमशक्योऽनन्तानुबन्धी लोभ ।इति ॥ २० ॥

उक्तं कषायमोहनीयं, अथ नोकषायमोहनीयं व्याख्यायते, तच्च द्विविधं हास्यादिषट्कं वेदत्रिकं च, तत्र हास्यादिषट्कं व्याख्यानयन्नाह—

**जस्सुदया होइ जिए हास रई अरइ सोग भय कुच्छा। सनिमित्तमन्नहा वा तं इह हासाइमोहणियं ॥२१॥**

टीका—यस्योदयाद्विपाकाद्भवति जायते जीवे जीवस्य हासो रतिररतिः शोको भयं 'कुच्छ त्ति' जुगुप्सा। हासादिशब्देषु सिलोपः प्राकृतत्वात्। सनिमित्तं सकारणमन्यथाऽनिमित्तं निष्कारणं। वाशब्दः पक्षान्तरद्योतकः। तदिह प्रवचने हास्यादिमोहनीयम्। आदिशब्दाद्रतिमोहनीयमरतिमोहनीयं शोकमोहनीयं भयमोहनीयं जुगुप्सामोहनीयं भण्यत इति शेषः। इति गाथाक्षरार्थः। भावार्थः पुनरयम्—यदुदयात् सनिमित्तमनिमित्तं वा जीवस्य हासो हास्यं भवति तद्धासमोहनीयम्। यदुदयात् सनिमित्तमनिमित्तं वा बाह्याभ्यन्तरेषु वस्तुषु जीवस्य रतिः प्रमोदो भवति तद्रतिमोहनीयम्। यदुदयात् सनिमित्तमनिमित्तं वा जीवस्य बाह्याभ्यन्तरेषु वस्तुष्वरतिरप्रीतिर्भवति तदरतिमोहनीयम्। यदुदयात् सनिमित्तमन्यथा वा जीवस्योरस्ताडनक्रन्दनपरिदेवनदीर्घनिःश्वसनभूलुठनरूपः शोको भवति तच्छोकमोहनीयम्। यदुदयात् सनिमित्तमनिमित्तं वा तथारूपस्वसंकल्पतो जीवस्य—"[1]इहपरलोयादाणमकम्हाआजीवमरणमसिलोए" इति गाथार्धोक्तं सप्तविधं भयं भवति तद्भयमोहनीयम्। यदुदयात् सनिमित्तमनिमित्तं वा जीवस्याशुभवस्तुविषया जुगुप्सा व्यलीकं भवति तज्जुगुप्सामोहनीयम् ॥ २१ ॥

---

१ इहपरलोकादानमकस्मादाजीविकामरणमश्लोकः.

उक्त हास्यादिषट्कम्, सम्प्रति वेदत्रिकमाह–

पुरिसित्थितदुभय पइ अहिलासो जेवसा हवइ सो उ। थीनरनपुवेउदओ फुंफुमतणनगरदाहसमो ॥२२॥

टीका–प्रतिशब्द प्रत्येक योज्यते, पुरुषं प्रति स्त्रिय प्रति तदुभयं प्रति स्त्रीपुरुष प्रतीत्यर्थ । यद्वशाद्यत्पारतन्त्र्यादभिलाषो वाञ्छा भवति जायते । तुशब्द परस्परापेक्षया पुनरर्थे । स्त्री योषिन्नर पुरुष 'नपुत्ति' नपुसक तैर्वेद्यतेऽनुभूयते स्त्रीनरनपुवेदस्तस्योदयः स्त्रीनरनपुवेदोदयो ज्ञेय इति शेष । फुफुमा करीष, तृणानि प्रतीतानि, नगर पुर, फुफुमातृणनगराणि तेषा दाहस्तेन समस्तुल्य इति गाथाक्षरार्थ । भावार्थस्त्वयम्–यद्वशात् स्त्रिया पुरुष प्रत्यभिलाषो भवति, यथा पित्तवशान्मधुरद्रव्य प्रति, स फुफुमादाहसमो यथा यथा चाल्यते तथा तथा ज्वलति बृहति च, एवमबलापि यथा यथा सस्पृश्यते पुरुषेण तथा तथास्या अधिकतरोऽभिलाषो जायते, अभुज्यमानाया तु छन्नकरीषदाहतुल्योऽभिलाषो मन्द इत्यर्थ, इति स्त्रीवेदोदय । यद्वशात् पुरुषस्य स्त्रियं प्रत्यभिलाषो भवति, यथा श्लेष्मवशादम्ल प्रति, स पुनस्तृणदाहसमो, यथा तृणाना दाहे ज्वलन झटिति विध्यापन च भवति, एव पुंवेदोदये स्त्रिया सेवन प्रत्युत्सुकोऽभिलाषो भवति, निवर्तते च तत्सेवने शीघ्रमिति नरवेदोदय । यद्वशान्नपुसकस्य तदुभय प्रत्यभिलाषो भवति, यथा पित्तश्लेष्मवशान्मज्जिका प्रति, स पुनर्नगरदाहसमो, यथा नगर दह्यमान महता कालेन दह्यते विध्याति च महतैव, एव नपुसकवेदोदयेऽपि स्त्रीपुरुषयो सेवन प्रत्यभिलाषातिरेको महतापि कालेन न निवर्तते, नापि सेवने तृप्तिरिति नपुंवेदोदय ।अभिहित वेदत्रिक, तदभिधाने चाभिहित नवधा नोकषायमोहनीय, तदभिधाने च समर्थित चारित्रमोहनीयम् । इति ॥२२॥

उक्तमष्टाविंशतिविधं चतुर्थं मोहनीयं कर्म, इदानीं पञ्चममायुष्कर्म व्याचिख्यासुराह—

**सुरनरतिरिनरयाऊ हडिसरिसं नामकम्म चित्तिसमं। बायालतिनवइविहं तिउत्तरसयं च सत्तट्ठी॥२३॥**

टीका—आयुःशब्दः प्रत्येकं योज्यते, ततश्च सुष्ठु राजन्त इति सुराः, यद्वा 'सुरत्' ऐश्वर्यदीप्त्योः, सुरन्ति विशिष्टमैश्वर्यमनुभवन्ति दिव्याभरणकान्त्या सहजशरीरकान्त्या च दीप्यन्त इति सुराः, यदि वा सुष्ठु रान्ति ददति प्रणतानामीप्सितमर्थं लवणाधिपसुस्थित इव लवणजलधौ मार्गं जनार्दनस्येति सुरा देवास्तेषामायुः सुरायुर्येन तेष्ववस्थितिर्भवति। नृणन्ति निश्चिन्वन्ति वस्तुतत्त्वमिति नरा मनुष्यास्तेषामायुर्नरायुस्तद्भवावस्थितिहेतुः। 'तिरित्ति' प्राकृतत्वात्तिरोऽञ्चन्ति गच्छन्तीति तिर्यञ्चः, व्युत्पत्तिनिमित्तं चैतत्, प्रवृत्तिनिमित्तं तु तिर्यग्गतिनाम, एते चैकेन्द्रियादयः, ततस्तिरश्चामायुस्तिर्यगायुर्येनैतेषु स्थीयते। नरानुपलक्षणत्वात्तिरश्चोऽपि प्रभूतपापकारिणः कायन्तीवाह्वयन्तीवेति नरका नरकावासास्तत्रोत्पन्ना जन्तवोऽपि नरकाः, नरको वा विद्यते येषां ते "अभ्रादिभ्यः" ७-२-४६ इत्यप्रत्यये नरकास्तेषामायुर्नरकायुर्येन ते तेषु ध्रियन्ते। एतच्चायुर्हडिसदृशं भवति। तत्र हडिः खोटकस्तेन सदृशं तत्तुल्यं, यथा हि राजादिना हडौ क्षिप्तः कश्चिच्चौरादिस्ततो निर्गमनमनोरथं कुर्वाणोऽपि विवक्षितं कालं यावत्तया ध्रियते, तथा नारकादिस्ततो निष्क्रमितुमना अपि तदायुषा ध्रियत इति हडिसदृशमायुः। व्याख्यातं चतुर्विधं पंचममायुष्कर्म। संप्रति षष्ठं नामकर्माभिधित्सुराह—"नामकम्म चित्तिसमं" इत्यादि, नामकर्म भवति चित्रिसमं चित्रं कर्म तत् कर्तव्यतया विद्यते यस्य स चित्री चित्र-

करस्तेन सम सदृश चित्रिसमम् । यथा हि चित्री चित्रं चित्रप्रकार विविधवर्णकै॰ करोति तथा नामकर्मापि जीवं नारकोऽय तिर्यग्जातिकोऽयमेकेन्द्रियोऽय द्वीन्द्रियोऽयमित्यादिव्यपदेशैरनेकधा करोतीति चित्रिसममिदमिति । एतच्चानेकभेदम् । कथमित्याह–" वायालतिनवइविह तिउत्तरसय च सत्तठीत्ति " अत्र विधाशब्दस्य प्रत्येकं योगाद्विचत्वारिंशद्विध, यद्वा त्रिनवतिविध, यदि वा त्र्युत्तरशतविध, अथवा सप्तषष्टिविधम् । चशब्द समुच्चये व्यवहितसबन्धश्च, स च तथैव योजित॰ ॥ २३ ॥

अथ नामकर्मणो द्विचत्वारिंशत भेदान् प्रचिकटयिषुराह–

गइजाइतणुउवंगा बधणसघायणाणि संघयणा । संठाणवन्नगधरसफासअणुपुविविहगगई ॥ २४ ॥

टीका–इह नाम्न प्रस्तावात्सर्वत्र गत्यादिषु नामेत्युपस्कार॰ कार्य । तथाहि–गतिनाम जातिनाम तनुनाम उपागनाम बन्धननाम सघातननाम सहनननाम सस्थाननाम वर्णनाम गधनाम रसनाम स्पर्शनाम आनुपूर्वीनाम विहायोगतिनामेति । तत्र गम्यते तथाविधकर्मसचिवैर्जीवै प्राप्यत इति गतिर्नारकादिपर्यायपरिणतिस्तद्विपाकवेद्या कर्मप्रकृतिरपि गति सैव नाम गतिनाम । जनन जातिरेकेन्द्रियादिशब्दव्यपदेशेन पर्यायेण जीवानामुत्पत्तिस्तन्नावनिबन्धनभूत नाम जातिनाम । तनोति जन्तुरात्मप्रदेशान् विस्तारयति यस्या सा तनुस्तज्जनक कर्मापि तनु सैव नाम तनुनाम शरीरनामेत्यर्थ । ' उवगत्ति ' उपलक्षणत्वादगोपागनाम, तत्र ' अजौप् ' व्यक्तिम्रक्षणगतिष्विति धातोरङ्ग्यन्ते गर्भोत्पत्तेरारभ्य व्यक्तीभवन्ति

जन्मप्रभृतेर्म्रदयन्ते चेत्यंगानि शिरउदरादीनि वक्ष्यमाणस्वरूपाणि, तदवयवभूतान्यंगुलादीन्युपांगानि, शेषाणि तु तत्प्रत्यवयवभूतान्यंगुलिषु पर्वरेखादीन्यंगोपांगानि, ततश्चांगानि चोपांगानि चांगोपांगानि चेति द्वन्द्वे " स्यादावसंख्येय " ३-१-११ए इत्येकशेषे च कृतेऽङ्गोपांगानीति, तत्र यदुदयाच्छरीरतयोपात्ता अपि पुद्गला अंगोपांगविभागेन परिणमन्ति तत्कर्मापि अंगोपांगनाम । बध्यन्ते गृह्यमाणपुद्गलाः पूर्वगृहीतपुद्गलैः सह श्लिष्टाः क्रियन्ते येन तद्बन्धनं तदेव नाम बन्धननाम । स्वत एव संघ्नन्ति संघातमापद्यन्ते, ततस्ते संघ्नन्तः सन्तः संघात्यन्ते प्रत्येकं शरीरपंचकप्रायोग्याः पुद्गलाः पिंड्यन्ते येन तत्संघातनं तदेव नाम संघातननाम । संहन्यन्ते धातूनामनेकार्थत्वाद्दृढीक्रियन्ते शरीरपुद्गलाः कपाटादयो लोहपट्टिकादिनेव येन तत्संहननं तदेव नाम संहनननाम । संतिष्ठन्ते विशिष्टावयवरचनात्मिकया शरीराकृत्या जन्तवो भवन्ति येन तत् संस्थानं तदेव नाम संस्थाननाम । वर्ण्यतेऽलंक्रियतेऽनेनेति वर्णः कृष्णादिर्जन्तुशरीरे कृष्णादिवर्णहेतुकं नामकर्मापि वर्णनाम । गन्ध्यत आघ्रायत इति गन्धस्तद्धेतुत्वान्नामकर्मापि गन्धनाम । रस्यत आस्वाद्यत इति रसस्तिक्तादिः, जन्तुशरीरे तिक्तादिरसहेतुकं कर्मापि रसनाम । स्पृश्यत इति स्पर्शः कर्कशादिस्तद्धेतुत्वात् कर्मापि स्पर्शनाम । द्विसमयादिना विग्रहेण भवान्तरं गच्छतो जन्तोरनुश्रेणिनियता गमनपरिपाट्यानुपूर्वी । तद्विपाकवेद्याकर्मप्रकृतिरप्यानुपूर्वी । गमनं गतिः, सा पुनरत्र पादादिविहरणात्मिका देशान्तरप्राप्तिहेतुर्द्वीन्द्रियादीनां प्रवृत्तिरभिधीयते, नैकेन्द्रियाणां, पादादेरभावात्, ततो विहायसा नभसा गतिर्विहायोगतिस्तद्धेतुत्वात्कर्मापि विहायोगतिनाम । ननु विहायसः सर्वगतत्वेन ततोऽन्यत्र गमनाभावाद्व्यवच्छेद्याभावेन विहायसेति विशेषणस्य वैयर्थ्यम् । सत्यम्, किं तु

यदि गतिरित्येवोच्येत तदा नाम्न प्रथमप्रकृतिरपिगतिरस्तीति पौनरुक्त्याशंका स्यात्, तद्व्यवच्छेदार्थं विहायोग्रहणमकारि, विहायसा गति· प्रवृत्तिर्न तु न्नवगतिर्नारकादिकेति ॥ २४ ॥

अथ प्रदर्शिताना गत्यादिप्रकृतीनामभिधानसंख्याकथनपूर्वकमष्टौ प्रत्येकप्रकृतीराह–

**पिंरूपयडित्ति चउदस परघाउस्सासआयवुज्जोय । अगुरुलहु तित्थनिमिणोवघायमिय अठ पत्तेया ॥२५॥**

टीका–एतैर्गतिनामादिभि पदैर्वक्ष्यमाणचतुरादिभेदाना पिंमिताना प्रतिपादनात् पिंरूप्रकृतय उच्यन्ते । का 'इतीति' एता गत्यादयोऽनन्तरगाथोद्दिष्टा प्रकृतय । कियन्त्य पुनस्ता इत्याह, चतुर्दशसंख्या । तथा प्रक्रमान्नामशब्दः पराघातादिष्वध्याहार्य । तद्यथा, पराघातनाम उच्छ्वासनाम आतपनाम उद्योतनाम अगुरुलघुनाम 'तित्थत्ति' तीर्थंकरनाम 'निमिणत्ति' निर्माणनाम उपघातनाम इत्येता पराघातादयोऽष्टावष्टसंख्या प्रत्येकप्रकृतयो ज्ञेया । आसा पिंरूप्रकृतिवदन्यभेदाभावादिति ॥ २५ ॥

**तसवायरपज्जत्त पत्तेयथिरं सुभं च सुभग च । सुसराइज्जजसं तसदसग, थावरदसं तु इमं ॥ २६ ॥**

टीका–नामशब्दस्येहापि सवन्धात्त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरनाम शुभनाम सुभगनाम 'चशब्दौ समुच्चये' सुस्वरनाम आदेयनाम 'जसंति' यश कीर्तिनाम इत्येव त्रसशब्देनोपलक्षित प्रकृतिदशक त्रसदशकमिदमुच्यते इति शेष । तथा स्थावरेण स्थावरशब्देनोपलक्षित त्रसदशकस्य विपक्षभूत 'दसत्ति' प्राकृतत्वाद्दशक स्थावरदशक तत्पुनरिद वक्ष्यमाणमिति ॥ २६ ॥

तदेवाह—

**थावरसुहुमअपज्जं साहारणअथिरअसुभदुभगाणि । दुस्सरणाइज्जाजसमियनामे सेयरा वीसं ॥२७॥**

टीका—इहापि नामशब्दस्य संबन्धात् स्थावरनाम सूक्ष्मनाम अपर्याप्तनाम साधारणनाम अस्थिरनाम अशुभनाम दुर्भगनाम दुःस्वरनाम अनादेयनाम 'अजसत्ति' अयशःकीर्तिनाम । प्ररूपितं दशकद्वयमपि । अधुना दशकद्वयमीलने यथाभूता सतीयं विंशतिर्यद्विषयोच्यते तदाह—'इयत्ति' इत्यमुना त्रसादिप्रदर्शितप्रकारेण 'नामेत्ति' नामकर्मणि सेतरा सप्रतिपक्षा प्रत्येकसंज्ञिता विंशतिर्विज्ञेया । तथाहि—त्रसनाम्नः स्थावरनाम प्रतिपक्षभूतं, एवं बादरसूक्ष्मप्रकृतीनामपि सेतरत्वं सुप्रतीतमेवेति ॥ २७ ॥

अथानन्तरोद्दिष्टत्रसादिविंशतिमध्ये यासां प्रकृतीनामाद्यपदनिर्देशेन याः संज्ञा भवन्ति ताः कथयन्नाह—

**तसचउथिरछक्कं अथिरछक्कसुहुमतिगथावरचउक्कं । सुभगतिगाइविभासा तदाइसंखाहिं पयडीहिं ॥२८॥**

टीका—त्रसप्रकृत्योपलक्षितं चतुष्कं त्रसचतुष्कं, एतदनुसारतः समासोऽन्यत्रापि कार्यः, ततो यथासंभवं पुनरपि समाहारद्वन्द्वश्च । तत्र त्रसचतुष्कं यथा, त्रसं बादरं पर्याप्तं प्रत्येकमिति । स्थिरषट्कं स्थिरं शुभं सुभगं सुस्वरमादेयं यशःकीर्तिश्चेति । अस्थिरषट्कमस्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिस्वरूपम् । सूक्ष्मत्रिकं सूक्ष्मापर्याप्तसाधारणलक्षणम् । स्थावरचतुष्कं स्थावरसूक्ष्मापर्याप्तसाधारणाख्यम् । सुभगत्रिकं सुभगसुस्वरादेयाभिधम् । आदिशब्दाद्दुर्भगत्रिकं दुर्भगदुःस्वरानादेयस्वरूपं गृह्यते । ततः सूत्रपदे समासो यथा, सुभगत्रिकमादिर्यस्य दुर्भगत्रिकस्य तत्सुभगत्रिकादि तस्य विभाषा

प्ररूपणा कर्तव्येति शेष । कान्भि कृत्वा पुनस्त्रसचतुष्कादिका विभाषा कर्तव्येत्याह–तदादिसंख्याभिः प्रकृतिभिः, सा निर्दिष्टा प्रकृतिरादिर्यस्या सख्याया सा तदादि, तदादि सख्या यासा प्रकृतीना तास्तदादिसख्यास्ताभिस्तदादिसख्याभि प्रकृतिभि । कोऽर्थः, याऽसौ प्रकृतिस्त्रसादिका निर्दिष्टा तामादौ कृत्वा निर्दिष्टसख्या पूरणीयेति । एताश्च संज्ञा प्रकृति-पिण्डसंग्राहिण्यो यथास्थानमुपयोगमायास्यन्तीति कृत्वा प्ररूपिता इति ॥ २८ ॥

उक्ता नामकर्मणो द्वाचत्वारिंशद्भेदा, अथ तस्यैव त्रिनवतिभेदान् प्ररूपयितुकामो गत्यादिपदाना पिण्डप्रकृतिसञ्ज्ञिकाना मध्ये येन पदेन यावन्तो भेदा पिण्डिता वर्तन्ते तान् भेदान् तेषामाह–

**गइयाईण उ कमसो चउपणपणतिपणपंचछछक्कं । पणदुगपणट्ठचउदुग इय उत्तरभेयपणसट्ठी ॥२९॥**

टीका–गत्यादीना पिण्डप्रकृतीना पूर्वप्रदर्शितस्वरूपाणा पुन क्रमश क्रमेण यथासख्यमिति यावत्, चतुरादयो भेदा भवन्तीति वाक्यार्थ । तथाहि, गतिनाम चतुर्धा, जातिनाम पंचधा, तनुनाम पचधा, उपागनाम त्रिधा, वन्धननाम पचधा, सघातननाम पचधा, सहनननाम षोढा, सस्थाननाम षोढा, वर्णनाम पचधा, गन्धनाम द्विधा, रसनाम पचधा, स्पर्शनामाष्टधा, आनुपूर्वीनाम चतुर्धा, विहायोगतिनाम द्वेधा । एतेषा सर्वमीलने भेदाग्रमाह–'इयत्ति' इत्यमुना चतुरादिभेदमीलनप्रकारेणोत्तरभेदाना पंचषष्टिरिति ॥ २९ ॥

अट्ठवीसजुया तिनवइ,संते वा पनरबंधणे तिसयं। बंधणसंघायगहो तणूसु सामन्नवन्नचऊ ॥ ३० ॥

टीका--एषा पूर्वोक्ता पंचषष्टिरष्टाविंशतियुता प्रत्येकप्रकृत्यष्टाविंशत्या सह मीलने त्रिभिरधिका नवतिस्त्रिनवतिर्भवति। सा च कोपयुज्यत इत्याह--' संते त्ति ' प्राकृतत्वात्सत्तायां सत्कर्म प्रतीत्य बोद्धव्येत्यर्थः। वाशब्दो विकल्पार्थो व्यवहितसंबन्धश्च, स चैवं योज्यते। पंचदशबन्धनैस्त्रिशतं वा पंचदशसंख्यैर्वक्ष्यमाणस्वरूपैर्बन्धनैः प्रदर्शितत्रिनवतिमध्ये प्रक्षिप्तैस्त्रिभिरधिकं शतं त्रिशतं वा सत्तायामधिक्रियते इति शेषः। अथ त्रिनवतिमध्ये पंचदशानां प्रकृतीनां प्रक्षेपेऽष्टोत्तरं शतं भवतीति चेदुच्यते, या वक्ष्यमाणाः पंचदश बन्धननामप्रकृतयस्तासु मध्यात् सामान्यत औदारिकादिबन्धनपंचकस्य त्रिनवतिमध्ये पूर्वप्रक्षिप्तत्वाच्छेषाणां दशानां प्रक्षेपे त्रिशतमेव भवतीति न कश्चिद्विरोधः। सूत्रे च ' पनरबंधणे ' इत्यत्र विभक्तिवचनव्यत्ययः प्राकृतत्वात्। इत्युक्ता नामकर्मणस्त्रिनवतिस्त्र्युत्तरशतं च भेदानाम्। अथ सप्तषष्टिभेदानाह--" बंधणसंघायगहोतणूसु त्ति " बन्धनानि च पंचदश संघाताश्च संघातनानि पंच बन्धनसंघातास्तेषां ग्रहणं ग्रहो बन्धनसंघातग्रहः। तनुषु शरीरेषु तनुग्रहणेनैव बन्धनसंघाता गृह्यन्ते न पृथग्विवक्ष्यन्त इत्यर्थः। तथा " सामन्नवन्नचऊ त्ति " सामान्यं कृष्णनीलाद्यविशेषितं वर्णेनोपलक्षितं चतुष्कं सामान्यवर्णचतुष्कं गृह्यत इति शेषः। अयमत्राशयः--इह सप्तषष्टिमध्ये औदारिकादितनुपंचकमेव गृह्यते, न तद्बन्धनानि तत्संघातनानि च, यत औदारिकतन्वा स्वजातीयत्वादौदारिकतनुसदृशानि तद्बन्धनानि तत्संघाताश्च गृहीताः। एवं वैक्रियादि तन्वापि निजनिजबन्धनसंघाता गृहीता

इति न पृथगेते पचदश बन्धनानि पंच सघाता गण्यन्ते । तथा वर्णगन्धरसस्पर्शाना यथासख्य पचद्विपंचाष्टभेदैर्निष्पन्ना विशतिमपनीय तेषामेव सामान्य वर्णगन्धरसस्पर्शलक्षण चतुष्क गृह्यते ततश्चानन्तरोदितत्र्युत्तरशताद्वर्णादिषोडशकबन्धनपचदशकसघातपचकलक्षणाना षट्त्रिंशत्प्रकृतीनामपसारणे सति सप्तषष्टिर्भवतीति ॥ ३० ॥

एतदेवाह–

## इय सत्तठी,वंधोदए,य,न य सम्ममीसया वंधे । वंधुदए सत्ताए वीसडुवीसठवन्नसयं ॥ ३१ ॥

टीका–इति पूर्वोक्तप्रकारेण सप्तषष्टिर्नामकर्मप्रकृतीना भवति । सा च कोपयुज्यत इत्याह–" वंधोदए य त्ति " बन्धश्चोदयश्च बन्धोदय तस्मिन् बन्धोदये बन्धे चोदये च सप्तषष्टिर्भवति । चशब्दादुदीरणायां च सप्तषष्टि. । अथ बन्धनसघातनवर्णादिविशेषाणा विवक्षावशादेव बन्धे नाधिकार इत्युक्त, सप्रति ययो प्रकृत्यो सर्वथैव बन्धो न भवति ते आह– " न य सममीसया वंधे त्ति " न च नैव सम्यक्त्वमिश्रके बन्धेऽधिक्रियेते । अयमभिप्राय –सम्यक्त्वमिश्रयोर्बन्ध एव न भवति, किं तु मिथ्यात्वपुद्गलानामेव । जीव. सम्यक्त्वगुणेन मिथ्यात्वरूपतामपनीय केषाचिदत्यन्तविशुद्धिमापादयति, अपरेषा त्वीषद्विशुद्धि, केचित् पुनर्मिथ्यात्वरूपा एवावतिष्ठन्ते । तत्र येऽत्यन्तविशुद्धास्ते सम्यक्त्वव्यपदेशभाज', ईषद्विशुद्धा मिश्रव्यपदेशभाज , शेषा मिथ्यात्वमिति । उक्त च-" सम्क्त्वगुणेन ततो विशोधयति कर्म तत् स मिथ्यात्वम् । यद्वत्गणप्रमुखै शोध्यन्ते कोद्रवा मदना. ॥ १ ॥ यत्सर्वथापि तत्र विशुद्धं तद्भवति कर्म सम्यक्त्वम् । मिश्र तु दरवि-

शुद्धं भवत्यशुद्धं तु मिथ्यात्वम् ॥ २ ॥" उदयोदीरणासत्तासु पुनः सम्यक्त्वमिश्रके अप्यधिक्रियेते । एवं च सति ज्ञानावरणे पंच, दर्शनावरणे नव, वेदनीये द्वे, मोहे सम्यक्त्वमिश्रवर्जाः षड्विंशतिः, आयुषि चतस्रः, नाम्नि भेदान्तरसंभवेऽपि प्रदर्शितयुक्त्या सप्तषष्टिः, गोत्रे द्वे, अन्तराये पंचेत्येतद्विंशत्युत्तरं प्रकृतिशतं बन्धेऽधिक्रियते । एतदेव सम्यक्त्वमिश्रसहितं द्वाविंशत्युत्तरप्रकृतिशतमुदये, उदीरणायां च । सत्तायां पुनः शेषकर्मणां पंचपंचाशन्नाम्नस्त्रिनवतिरित्यष्टाचत्वारिंशं शतम्, यद्वा शेषकर्मणां पंचपंचाशन्नाम्नस्त्र्युत्तरशतमित्यष्टापंचाशं शतमधिक्रियते, इत्येतदेव मनसिकृत्याह--
"बंधुदए सत्ताए" इत्यादि इह शतशब्दस्य प्रत्येकं योगाद्यथासंख्यं बन्धे विंशं शतम्, उदये उपलक्षणत्वादुदीरणायां च द्वाविंशं शतम्, सत्तायामष्टपंचाशं शतमुपलक्षणत्वादष्टाचत्वारिंशं शतमिति भावना सुकरैव ॥ ३१ ॥

अथ पूर्वनिर्दिष्टान् गतिजातिप्रभृतीनां पिंडप्रकृतीनां चतुरादिभेदान् व्याचिख्यासुराह--

**निरयतिरिनरसुरगई,इगबियतियचउपणिंदिजाईउ ।ओरालविउव्वाहारगतेयकम्मणपणसरीरा ॥ ३२ ॥**

टीका-निरयाश्च तिर्यञ्चश्च नराश्च सुराश्च तेषु गतिरिति विग्रहः । भावार्थोऽयम्-गतिशब्दः प्रत्येकं योज्यते । ततश्च "अयमिष्टफलं दैवम्" इति वचनात् निर्गतमयमिष्टफलं सातवेदनीयादिरूपं येभ्यस्ते निरयाः सीमन्तकादयो नरकावासाः । ततो निरयेषु विषये गतिरिति गतिनाम निरयगतिनाम, तद्विपाकवेद्या कर्मप्रकृतिरपि निरयगतिनाम, नारकशब्दव्यपदेश्यपर्यायनिबंधनं निरयगतिनामेति हृदयम् । एवं तिर्यग्नरसुरगतिनामापि वाच्यम् । अत्राह-ननु सर्वेऽपि

पर्याया जीवेन गम्यन्ते प्राप्यन्त इति सर्वेषामपि तेषा गतित्वप्रसग । तथा च प्राग्गतिशब्दस्येयमेव व्युत्पत्तिर्दर्शितेति । नैवम्, यतोऽविशेषेण व्युत्पादिता अपि शब्दा रूढितो गोशब्दवत् प्रतिनियतमेवार्थं विषयीकुर्वन्तीत्यदोष' । उक्त गतिनाम चतुर्विध । तथा सूचकत्वात्सूत्रस्यैकेन्द्रियाश्च द्वीन्द्रियाश्च त्रीन्द्रियाश्च चतुरिन्द्रियाश्च पचेन्द्रियाश्च तेषा जातय इति विग्रह । भावार्थोऽयम्–एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपंचेन्द्रियजातिनामभेदात् पचधा जातिनाम । तत्रैकस्य स्पर्शनेन्द्रियज्ञानस्यावरणक्षयोपशमादेकविज्ञानभाज एकेन्द्रिया , द्वयो स्पर्शनरसनज्ञानयोरावरणक्षयोपशमाद्द्विविज्ञानभाजो द्वीन्द्रिया , त्रयाणा स्पर्शनरसनघ्राणज्ञानानामावरणक्षयोपशमात्त्रिविज्ञानभाजस्त्रीन्द्रिया , चतुर्णा स्पर्शनरसनघ्राणचक्षुर्ज्ञानानामावरणक्षयोपशमाच्चतुर्विज्ञानभाजश्चतुरिन्द्रिया , पचाना स्पर्शनरसनघ्राणचक्षु श्रोत्रज्ञानानामावरणक्षयोपशमात्पचविज्ञानभाज पचेन्द्रिया । तत एकेन्द्रियाणा जातिनामैकेन्द्रियजातिनाम, एव यावत् पचेन्द्रियजातिनाम । अत्राह–ननु एतेन जातिनाम्ना कि भावेन्द्रियमेकादिकं जन्यते, उत द्रव्येन्द्रिय, आहोश्विदेकेन्द्रियोऽयमित्यादिव्यपदेश इति त्रयी गति । तत्र यद्याद्य' पक्ष स न युक्तो, भावेन्द्रियस्य श्रोत्रादीन्द्रियज्ञानावरणक्षयोपशमजन्यत्वात् " क्षायोपशमिकानीन्द्रियाणीति " वचनात् । अथ द्रव्येन्द्रिय जन्यते तदप्ययुक्त, द्रव्येन्द्रियस्येन्द्रियपर्याप्तिनामोदयजन्यत्वात् । एकेन्द्रियादिव्यपदेशस्त्वेकादीन्द्रियज्ञानावरणक्षयोपशमपर्याप्तिनामभ्यामेव सेत्स्यति किमन्तर्गडुना जातिनाम्ना । अत्रोच्यते, आद्यविकल्पयुगल तावदनभ्युपगमादेव निरस्तम् । यत्पुनरुक्त'मेकेन्द्रियादिव्यपदेशस्त्वित्यादि' तदयुक्तम्, यत इन्द्रियज्ञानावरणक्षयोपशम इन्द्रियपर्याप्तिश्च यथाक्रम भावेन्द्रियजनने द्रव्येन्द्रियजनने च कृतार्थौ कथमेकेन्द्रिया-

दिव्यपदेशनिबन्धनपरिणतिलक्षणं कार्यान्तरं जनयितुमलम् । न ह्यन्यसाध्यं कार्यमन्यः साधयति, अतिप्रसंगात्, तस्मा देकेन्द्रियादीनां समानजातीयजीवान्तरेण सह समाना बाह्या काचित् परिणतिरेकेन्द्रियादिशब्दवाच्यावश्यं जातिनाम कर्मोदयत एवाभ्युपगन्तव्या । उक्तं च–" अव्यभिचारिणा सादृश्येनैकीकृतोऽर्थात्मा जातिरिति " । तथाहि–बकुलादीनामनुमानादिसिद्धे इन्द्रियपंचकक्षयोपशमे सत्यपि पंचेन्द्रियशब्दव्यपदेश्यपंचेन्द्रियजातिनामकर्मोदयजन्यविशिष्टबाह्यपरिणत्यभावान्न पंचेन्द्रियव्यपदेशो भवति । यद्येवं गोतुरगभुजगमातंगादिक्रमे सत्यपि पंचेन्द्रियव्यपदेश्यस्यापि पर्यायस्य कारणं किंचित् कर्माभ्युपगन्तव्यमिति चेन्नैवं, जातिनामकर्मवैचित्र्यादेव तत्सिद्धेः । न चात्रैकान्तेन युक्त्युपन्यास एवाग्रहः कार्यः, आगमोपपत्तिगम्यत्वात्तत्त्वस्य । यदवादि–" आगमश्चोपपत्तिश्च संपूर्णं दृष्टिलक्षणम् । अतीन्द्रियाणामर्थानां सद्भावप्रतिपत्तये ॥ १ ॥ " इत्युक्तं जातिनाम पंचधा । तथौदारिकं च वैक्रियं चाहारकं च तैजसं च कार्मिकं चेति द्वन्द्वः । भावार्थोऽयम्–औदारिकवैक्रियाहारकतैजसकार्मणनामभेदात् पंचधा शरीरनाम । तत्रोदारं प्रधानम्, प्राधान्यं चास्य तीर्थकरगणधरशरीरापेक्षया, ततोऽन्यस्यानुत्तरसुरशरीरस्यापि अनन्तगुणहीनत्वात् । यद्वोदारं सातिरेकयोजनसहस्रमानत्वाच्छेषशरीरापेक्षया बृहत्प्रमाणं, बृहत्ता चास्य वैक्रियं प्रति भवधारणीयसहजशरीरापेक्षया द्रष्टव्या, अन्यथोत्तरवैक्रियं योजनलक्षमानमपि लभ्यते, उदारमेवौदारिकं " विनयादिभ्यः " ७-२-१६९ इतीकण्प्रत्ययः, तन्निबन्धनं नामौदारिकनाम, यदुदयवशादौदारिकशरीरप्रायोग्यान् पुद्गलानादायौदारिकशरीररूपतया परिणमयति, परिणमय्य च जीवप्रदेशैः सहान्योऽन्यानुगमरूपतया संबन्धयति, तदौदारिकशरीरनामेत्यर्थः । तथा विविधा क्रिया विक्रिया तस्यां

जत वैक्रियम्। तथाहि–तदेक जूत्वानेक जवति, अनेक जूत्वैकम्, अणु जत्वा महज्जवति, महच्च जूत्वाणु, खेचर जूत्वा जूमिचर जवति, जूमिचर जूत्वा खेचर जवति, दृश्य जूत्वाऽदृश्य जवति, अदृश्यं जूत्वा दृश्यमित्यादि। तच्च द्विधा, औपपातिक लब्धिप्रत्यय च। तत्रौपपातिकमुपपातजन्मनिमित्त, तच्च देवनारकाणाम्। लब्धिप्रत्यय तिर्यङ्मनुष्याणा। वैक्रियनिबन्धन नाम वैक्रियनाम, यदुदयाद्वैक्रियशरीरप्रायोग्यान् पुद्गलानादाय वैक्रियशरीररूपतया परिणमयति, परिणमय्य च जीवप्रदेशै सहान्योऽन्यानुगमरूपतया सबन्धयतीति। तथा चतुर्दशपूर्वविदा तीर्थकरस्फातिदर्शनादिकतथाविधप्रयोजनोत्पत्तौ सत्या विशिष्टलब्धिवशादाह्रियते निर्वर्त्यत इत्याहारक, "बहुल" ५-१ २ इति वचनात् कर्मणि एकुप्रत्ययो यथा पादहारक इत्यादौ, तच्च वैक्रियापेक्षयाऽत्यन्तशुज्ञ स्वच्छस्फटिकशिलेव शुभ्रपुद्गलसमूहघटनात्मकम्, आहारकनिबन्धन नामाहारकनाम, यदुदयवशादाहारकशरीरप्रायोग्यान् पुद्गलानादायाहारकशरीररूपतया परिणमयति, परिणमय्य च जीवप्रदेशै सहान्योऽन्यानुगमरूपतया सबन्धयतीति। तथा तेजसा तेज पुद्गलैर्निर्वृत्त तैजस, यद्भुक्ताहारपरिणमनहेतुर्यद्वशाच्च विशिष्टतप समुत्थलब्धिविशेषस्य पुसस्तेजोलेश्याविनिर्गम, तेजोनिबन्धन नाम तैजसनाम, यदुदयवशात्तैजसशरीरप्रायोग्यान् पुद्गलानादाय तैजसशरीररूपतया परिणमयति, परिणमय्य च जीवप्रदेशै सहान्योऽन्यानुगमरूपतया सबन्धयतीति। तथा कर्मपरमाणुषु जव कार्मिक कार्मणशरीरमित्यर्थ। कर्मपरमाणव एवात्मप्रदेशै सह क्षीरनीरवदन्योऽन्यानुगता सन्त कार्मणशरीर कर्मणो विकारः कार्मणमिति व्युत्पत्ते। तदुक्तम्–"कम्मविगारो कम्म-

१ कर्मविकारो कार्मणमष्टविधविचित्रकर्मनिष्पन्नम्। सर्वेषा शरीराणा कारणभूत ज्ञातव्यम्॥ १॥

णमठविहविचित्तकम्मनिप्पन्नं । सव्वेसिं सरीराणं कारणभूयं मुणेयव्वं ॥ १ ॥ ” अत्र ‘ सव्वेसिं ति ’ सर्वेषामौदारिकादिशरीराणां कारणभूतं बीजभूतं कार्मणशरीरम् । न खल्वामूलमुच्छिन्ने भवप्रपंचप्ररोहबीजभूते कार्मणे वपुषि शेषशरीरप्रादुर्भावसंभवः । इदं च कार्मणशरीरं जन्तोर्गत्यन्तरसंक्रान्तौ साधकतमं कारणम् । तथाहि–कार्मणेनैव वपुषा परिकरितो जन्तुर्मरणदेशमपहायोत्पत्तिदेशमभिसर्पति । ननु यदि कार्मणवपुःपरिकरितो गत्यन्तरं संक्रामति, तर्हि स गच्छन्नागच्छन् वा कस्मान्नोपलक्ष्यते? उच्यते, कर्मपुद्गलानामतिसूक्ष्मतया चक्षुरादीन्द्रियागोचरत्वात् । आह च प्रज्ञाकरगुप्तोऽपि– “ अन्तरा भवदेहोऽपि सूक्ष्मत्वान्नोपलक्ष्यते । निष्क्रामन् प्रविशन् वापि नाभावोऽनीक्षणादपि ॥ १ ॥ ” कार्मणनिबन्धनं नाम कार्मणनाम । यदुदयात् कार्मणप्रायोग्यान् पुद्गलानादाय कार्मणशरीररूपतया परिणमयति, परिणमय्य च जीवप्रदेशैः सहान्योऽन्यानुगमरूपतया संबन्धयतीति ॥ ३२ ॥

उक्तं तनुनाम पंचधा, इदानीमंगोपांगनाम त्रिधा प्राह–

**बाहूरु पिट्ठि सिर उर उयरंग उवंग अंगुलीपमुहा । सेसा अंगोवंगा पढमतणुतिगस्सुवंगाणि ॥३३॥**

टीका–बाहू भुजद्वयम्, ऊरू ऊरुद्वयम्, पृष्ठिः प्रतीता, शिरो मस्तकं, उरो वक्षः, उदरं पेट्टमित्यष्टावंगान्युच्यन्ते । इह विभक्तिलोपः प्राकृतत्वात्, एवमन्यत्रापि । उपांगान्यंगुलीप्रमुखाणि, इह पुंस्त्वं प्राकृतत्वात् । शेषाणि तत्प्रत्यवयवभूतान्यंगुलपर्वरेखादीन्यंगोपांगानि, इहापि पुंस्त्वं प्राकृतत्वात् । प्राकृते हि लिंगमतंत्रम् । यदाहुः श्रीहेमचन्द्रसूरिपादाः

स्वप्राकृतलक्षणे " लिंगमतत्र " ८ ४ ४४५ इति । इमानि चोपागानि " पढमतणुतिगस्स त्ति " प्रथमा आद्या यास्तनव शरीराणि तामा त्रिक त्रितयमौदारिकवैक्रियाहारकस्वरूप, तस्य प्रथमतनुत्रिकस्य ज्ञवन्ति । तत प्रथमतनुत्रिकद्वारेणागोपागनामापि त्रिविध मन्तव्यम् । तद्यथा–औदारिकागोपागनाम वैक्रियागोपागनामाहारकागोपागनाम । तत्र यदुदयादौदारिकशरीरत्वेन परिणताना पुद्गलानामगोपागविज्ञागपरिणतिरुपजायते तदौदारिकागोपागनाम । यदुदयाद्वैक्रियशरीरत्वेन परिणताना पुद्गलानामगोपागविज्ञागपरिणतिरुपजायते तद्वैक्रियागोपागनाम । यदुदयादाहारकशरीरत्वेन परिणताना पुद्गलानामगोपागविज्ञागपरिणतिरुपजायते तदाहारकागोपागनाम । तैजसकार्मणयोस्तु जीवप्रदेशसंस्थानानुरोधित्वान्नास्त्यगोपागसज्जाव इति ॥ ३३ ॥

उक्त त्रिविधमगोपागनाम, साप्रत बन्धननामस्वरूपमाह–

उरलाइपुग्गलाण निबद्धबज्झंतयाण संबंध । ज कुणइ जउसमं तं उरलाईबंधणं नेय ॥ ३४ ॥

टीका–औदारिकादिपुद्गलानामादिशब्दाद्वैक्रियपुद्गलानामाहारकपुद्गलाना तैजसपुद्गलाना कार्मणपुद्गलाना किंविशिष्टानामित्याह–" निबद्धबज्झतयाण त्ति " निबद्धाश्च बध्यमानाश्च निबद्धबध्यमानास्तेषा निबद्धबध्यमानाना पूर्वबद्धाना बध्यमानाना च यत् कर्म सबन्ध परस्पर मीलन करोति दारूणामिव जतु, अत एव जतुसम तदौदारिकादिबन्धनमादिशब्दाद्वैक्रियबन्धनमाहारकबन्धन तैजसबन्धन कार्मणबन्धन ज्ञेय ज्ञातव्यमिति गाथाक्षरार्थ । ज्ञावार्थस्त्वयम्- इह पूर्वगृहीतरौदारिकपुद्गलै सह परस्पर गृह्यमाणानौदारिकपुद्गलानुदितेन येन कर्मणा बद्धात्यात्माऽन्योऽन्यमयुक्तान् करोति,

तदौदारिकशरीरबन्धननाम दारुपाषाणादीनां जतुराळाप्रभृतिश्लेषद्रव्यतुल्यम् । पूर्वगृहीतैर्वैक्रियपुद्गलैः सह परस्परं गृह्यमाणान् वैक्रियपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योऽन्यसंयुक्तान् करोति, तज्जतुसमं वैक्रियशरीरबन्धननाम। पूर्वगृहीतैराहारकशरीरपुद्गलैः सह परस्परं गृह्यमाणानाहारकपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योऽन्यसंयुक्तान् करोति, तज्जतुसममाहारकशरीरबन्धननाम। पूर्वगृहीतैस्तैजसपुद्गलैः सह परस्परं गृह्यमाणांस्तैजसपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योऽन्यसंयुक्तान् करोति तज्जतुसमं तैजसशरीरबन्धननाम। पूर्वगृहीतैः कार्मणपुद्गलैः सह परस्परं गृह्यमाणान् कार्मणपुद्गलानुदितेन येन कर्मणा बध्नात्यात्माऽन्योऽन्यसंयुक्तान् करोति तज्जतुसमं कार्मणशरीरबन्धननाम। यदि पुनरिदं शरीरपंचकपुद्गलानामौदारिकादिशरीरनाम्नः सामर्थ्याद्गृहीतानामन्योऽन्यसंबन्धकारि बन्धनपंचकं न स्यात्तत्तस्तेषां शरीरपरिणतौ सत्यामप्यसंबन्धत्वात् पवनाहतकुंडस्थितास्तीमितसक्तूनामिवैकत्र स्थैर्यं न स्यादिति ॥ ३४ ॥

उक्तं बन्धनस्वरूपम् । इदं च बन्धननामासंहतानां पुद्गलानां न संभवत्यतोऽन्योऽन्यसन्निधानलक्षणपुद्गलसंहतेः कारणं संघातनमाह–

**जं संघायइ उरलाइपुग्गले तणगणं व दंताली । तं संघायं बन्धणमिव तणुनामेण पंचविहं ॥ ३५ ॥**

टीका–यत् कर्म संघातयति पिंडीकरोत्यौदारिकादिपुद्गलानादिशब्दाद्वैक्रियपुद्गलानाहारकपुद्गलांस्तैजसपुद्गलान् कार्म-

---

१ उक्तं बंधननाम बंधनमप्यसंहतानामिति पाठान्तरम् ।

णपुद्गलान् । तत्र दृष्टान्तमाह–तणगणमिव तृणोत्करमिवेतश्चेतश्च विक्षिप्त, दन्ताली काष्ठमयी मरुमण्डलप्रसिद्धा, तत्स-घातं सघातननाम, तच्च, पूर्वोक्तम् बन्धननामापि तनुनाम्ना शरीराभिधानेन पञ्चविध भवतीति । तत्र बन्धननाम पूर्वमेव भावितम्, अथ सघातननाम व्याख्यायते–औदारिकसघातनाम वैक्रियसघातनामाहारकसघातनाम तैजससघातनाम कार्मणसघातनाम । तत्र यदुदयादौदारिकशरीरत्वपरिणतान् पुद्गलानात्मा सघातयत्यन्योऽन्यसन्निधानेन व्यवस्थापयति, तदौदारिकसघातननाम । यदुदयाद्वैक्रियशरीरत्वपरिणतान् पुद्गलानात्मा सघातयत्यन्योऽन्यसन्निधानेन व्यवस्थापयति, तद्वैक्रियसघातननाम । यदुदयादाहारकशरीरत्वपरिणतान् पुद्गलानात्मा सघातयत्यन्योऽन्यसन्निधानेन व्यवस्थापयति, तदाहारकसघातननाम । यदुदयात्तैजसशरीरत्वपरिणतान् पुद्गलानात्मा सघातयत्यन्योऽन्यसन्निधानेन व्यवस्थापयति, तत्तैजससघातननाम । यदुदयात्कार्मणशरीरत्वपरिणतान् पुद्गलानात्मा सघातयत्यन्योऽन्यसन्निधानेन व्यवस्थापयति, तत्कार्मणसघातननाम । इति ॥ ३५ ॥

उक्त पञ्चधा बन्धननाम पञ्चधा सघातननाम, सम्प्रति "[1]सते वा पनरबधणे तिसय" इति गाथासूचित बन्धनपंचदशक व्याचिख्यासुराह–

**उरालविउव्वाहारयाण सगतेयकम्मजुत्ताण । नवबधणाणि इयरदुसहियाण तिन्नि तेसिं च ॥ ३६ ॥**

टीका–औदारिकवैक्रियाहारकशरीराणा नव बन्धनानीति योग ।कीदृशानामित्याह–स्वकतैजसकार्मणयुक्ताना प्रत्येक

---

१ अस्यार्थ त्रिंशत्तमाया गाथाया द्रष्टव्य ।

स्वकतैजसकार्मणानां मध्यादन्यतरेण युक्तानामित्यर्थः । 'नवत्ति' नवसंख्यानि वन्धनानि बन्धनप्रकृतयो भवन्तीति । औदारिकवैक्रियाहारकाणां त्रयाणामपि प्रत्येकं स्वनाम्ना तैजसेन कार्मणेन च योगाद्विकसंयोगनिष्पन्नान्येकैकस्यौदारिकादेस्त्रीणि त्रीणि वन्धनानि भवन्ति, तेषां च त्रयाणां त्रिकाणां मीलने नव बन्धनानीति । तथाहि–औदारिकौदारिकवन्धननाम, औदारिकतैजसवन्धननाम, औदारिककार्मणबन्धननाम । वैक्रियवैक्रियवन्धननाम, वैक्रियतैजसवन्धननाम, वैक्रियकार्मणवन्धननाम । आहारकाहारकवन्धननाम, आहारकतैजसवन्धननाम, आहारककार्मणवन्धननाम । तत्र पूर्वगृहीतैरौदारिकशरीरपुद्गलैः सह गृह्यमाणौदारिकपुद्गलानां वन्धो येन क्रियते तदौदारिकौदारिकबन्धननाम । येनौदारिकपुद्गलानां तैजसशरीरपुद्गलैः सह संबन्धो विधीयते तदौदारिकतैजसवन्धननाम । येनौदारिकपुद्गलानां कार्मणशरीरपुद्गलैः सह संबन्धो विधीयते तदौदारिककार्मणवन्धननाम । एवमनेन न्यायेनान्यान्यपि वन्धनानि वाच्यानि । शेषवन्धननिरूपणायाह–" इयरदुसहियाणं तिन्नि त्ति " इतरे स्वकीयनामापेक्षयाऽन्ये तैजसकार्मणशरीरे, ततः प्राकृतत्वादन्यथोपन्यासेऽपि द्वे च ते इतरे च द्वीतरे ताभ्यां सहितानि युक्तानि द्वीतरसहितानि । यद्वा ' दुत्ति ' द्विकं इतरच्च तद्द्विकं चेतरद्विकं तेन सहितानि इतरद्विकसहितानि तेषां द्वीतरसहितानामितरद्विकसहितानां वा । औदारिकवैक्रियाहारकाणामत्रापि योज्यम् । त्रीणि वन्धनानि भवन्ति । अयमाशयः–प्रत्येकमौदारिकवैक्रियाहारकाणां तैजसकार्मणाभ्यां युगपत् संयोगे त्रिकसंयोगरूपाणि त्रीणि वन्धनानि भवन्ति । तथाहि–औदारिकतैजसकार्मणवन्धननाम, वैक्रियतैजसकार्मणवंधननाम, आहारकतैजसकार्मणवन्धननाम । अर्थः पूर्वोक्त एव । न केवलमेषामौदारिकादीनामितरद्विक-

सहितानामेव त्रीणि बन्धनानि भवन्ति किं तु "तेसिं च त्ति" त्रीणीति शब्दो डमरुकमणिन्यायादत्रापि योज्य.। ततोऽयमर्थः—तयोश्चेतरशब्दवाच्ययोस्तैजसकार्मणयोः स्वनाम्ना इतरेण च योगे त्रीणि बन्धनानि भवन्ति । यथा तैजसतैजसबन्धननाम, तैजसकार्मणबन्धननाम, कार्मणकार्मणबन्धननाम । तदेव नव त्रीणि त्रीणि च मिलितानि पञ्चदश बन्धनानीति । अत्राह—पञ्चानां शरीराणां द्विकादियोगप्रकारेण षड्विंशति संयोगा भवन्ति, तत्तुल्यबन्धनानि च कस्मान्न भवन्ति । उच्यते—औदारिकवैक्रियाहारकाणां परस्परविरुद्धानामन्योऽन्यसंबन्धाभावात् पञ्चदशैव भवन्ति, नाधिकानि । आह—यथा पञ्चदश बन्धनानि भवन्ति, एवमनेनैव क्रमेण पञ्चदश संघाता अपि कस्मान्नाभिधीयन्ते, संघातितानामेव बन्धनभावात्, तथाहि, पाषाणयुग्मस्य कृतसंघातस्यैवोत्तरकाल वज्रलेपराळादिना बन्धनं क्रियते । तदसत्, यतो लोके ये स्वजातौ संयोगा भवन्ति त एव शुभा, एवमिहापि स्वशरीरपुद्गलानां स्वशरीरपुद्गलैः सह ये संयोगरूपा. संघातास्ते शुभा इति प्राधान्यख्यापनाय पञ्चैव संघाता अभिहिता इति ॥ ३६ ॥

व्याख्यातानि पञ्चदशापि बन्धनानि संप्रति संहनननाम षड्विधमभिधित्सुर्गाथायुगलमाह -

संघयणमट्ठिनिचओ, तं छद्धा, वज्जरिसहनाराय । तह रिसह नारायं[1] नाराय अद्धनाराय ॥ ३७ ॥
कीलिय छेवठ्ठ,इह रिसहो पट्टो,य कीलिया वज्जं । उभओ मक्कडबंधो नाराय इममुरालंगे ॥ ३८ ॥

टीका—संहन्यन्ते दृढीक्रियन्ते शरीरपुद्गला येन तत् संहननं तच्चास्थिनिचयः कीलिकादिरूपाणामस्थ्नां निचयो रचना-

१ रिसहनाराय इति पाठ ।

विशेषोऽस्थिनिचयः। तत्संहननं षड्धा षट्प्रकारैर्भवति। तद्यथा—वज्रऋषभनाराचं, तथा ऋषभनाराचमिहानुस्वारोऽलाक्षणिकः, नाराचं, अर्धनाराचं, कीलिका, सेवार्तम्। इह प्रवचने ऋषभं ऋषभशब्देन परिवेष्टनपट्ट उच्यते, वज्रं वज्रशब्देन कीलिकाभिधीयते, नाराचं नाराचशब्देनोभयतो मर्कटबन्धो भण्यते। इदमस्थिनिचयात्मकं संहननमौदारिकांगे औदारिकशरीर एव, नान्येषु शरीरेषु, तेषामस्थिरहितत्वादिति गाथायुगलाक्षरार्थः। भावार्थः पुनरयम्—इह द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदिकीलिकाख्यं वज्रनामकमस्थि यत्र भवति तद्वज्रऋषभनाराचं, तन्निबन्धनं नाम वज्रऋषभनाराचनाम। यत्पुनः कीलिकारहितं संहननं तत् ऋषभनाराचं, तन्निबन्धनं नाम ऋषभनाराचनाम। यत्र पुनर्मर्कटबन्धः केवलो भवति न पुनः कीलिका ऋषभसंज्ञः पट्टश्च तन्नाराचं, तन्निबन्धनं नाम नाराचनाम। यत्र त्वेकपार्श्वेन मर्कटबन्धो द्वितीयपार्श्वेन च कीलिका भवति तदर्धनाराचं, तन्निबन्धनं नामार्धनाराचनाम। यत्र पुनरस्थीनि कीलिकामात्रबद्धान्येव भवन्ति तत्कीलिकासंहननं, तन्निबन्धनं नाम कीलिकानाम। यत्र तु परस्परं पर्यन्तस्पर्शलक्षणां सेवामागतान्यस्थीनि भवन्ति स्नेहाभ्यवहारतैलाभ्यंगविश्रामणादिरूपां च परिशीलनां नित्यमपेक्षते तत्सेवार्तं, तन्निबन्धनं नाम सेवार्तनाम। यद्वा 'छेवट्ठं ति' दकारस्य लुप्तस्येह दर्शनाच्छेदानामस्थिपर्यन्तानां वृत्तं परस्परं संबन्धघटनालक्षणं वर्तनं वृत्तिर्यत्र तच्छेदवृत्तं, कीलिकापट्टमर्कटबन्धरहितमस्थिपर्यन्तमात्रसंस्पर्शि षष्ठमित्यर्थः। ततो यदुदयात् शरीरे वज्रऋषभनाराचसंहननं भवति तद्वज्रऋषभनाराचसंहनननामकर्मेति। एवमृषभनाराचादिष्वपि वाच्यमिति ॥ ३८ ॥

व्याख्यात षड्विध सहननताम, सप्रति षोढा सस्थाननाम विवक्षुराह–

**समचउरसं निग्गोहसाइखुज्जाइ वामणं हुंड । संठाणा वन्ना किण्हनीललोहियहलिद्दसिया ॥ ३९॥**

टीका–समचतुरस्र, ' निग्गोह त्ति ' पदैकदेशेऽपि पदप्रयोगदर्शनात् न्यग्रोधपरिमण्डल, सादि, कुब्ज, वामन, हुण्ड, इति षट् सस्थानानि अवयवरचनात्मकशरीराकृतिस्वरूपाणि शरीरे भवन्तीति शेष । तत्र समा शास्त्रोक्तलक्षणाविसवादिन्य-श्चतस्रोऽस्रय पर्यंकासनोपविष्टस्य जानुनोरन्तर, आसनस्य ललाटोपरिभागस्य चान्तर, दक्षिणस्कन्धस्य वामजानुनश्चा-न्तर, वामस्कधस्या दक्षिणजानुनश्चान्तरमिति चतुर्दिग्विभागोपलक्षिता शरीरावयवा यत्र तत्समचतुरस्रम् । " सुप्रात-सुश्वसुदिनशारिकुक्षचतुरस्रैणीपदाजपदप्रोष्ठपदभद्रपदम् " ७ ३-१२९ इति सूत्रेण समासान्तोऽप्रत्यय । समचतुरस्र च तत्सस्थान च समचतुरस्रसस्थानम् । तुल्यारोहपरिणाह सपूर्णलक्षणोपेताङ्गोपाङ्गावयव स्वाङ्गुलाष्टाधिकशतोच्छ्रय' सर्व-सस्थानप्रधान' पचेन्द्रियजीवशरीराकारविशेष॰ समचतुरस्रसस्थाननिबन्धन नाम समचतुरस्रनाम । न्यग्रोधवत् परिमण्डला यस्य तन्न्यग्रोधपरिमण्डलं, यथा न्यग्रोधो वटवृक्ष उपरि सपूर्णावयवोऽधस्तु हीनस्तथा यत्सस्थान नाभेरुपरि संपूर्णावयव-मधस्तु न तथा, तन्न्यग्रोधपरिमण्डल, तन्निबन्धन नाम न्यग्रोधपरिमण्डलनाम । सह आदिना नाभेरधस्तनभागरूपेण यथोक्तप्रमाणयुक्तेन वर्तत इति सादि । सर्वमपि हि शरीर सादि, तत सादित्वविशेषणान्यथानुपपत्तेरादिरिह विशिष्टो ज्ञातव्य । ततो यत्र नाभेरधो यथोक्तप्रमाणयुक्तमुपरि च हीन तत्सादि सस्थान, तन्निबन्धन नाम सादिनाम । यत्र

पाणिपादशिरोग्रीवं यथोक्तप्रमाणोपपन्नमुरउदरादि च मडभं तत् कुब्जसंस्थानं, तन्निबन्धनं नाम कुब्जनाम । यत्र पुनरुरउदरादि यथोक्तप्रमाणोपेतं हस्तपादादिकं च हीनं तद्वामनसंस्थानं, तन्निबन्धनं नाम वामननाम । अन्ये कुब्जवामनयोर्विपरीतं लक्षणमाहुः । यत्र सर्वेऽप्यवयवाः शास्त्रोक्तप्रमाणहीनास्तत् सर्वत्रासंस्थितं हुंडसंस्थानं, तन्निबन्धनं नाम हुंडनाम । ततो यदुदयाज्जन्तुशरीरं समचतुरस्रसंस्थानं भवति तत्कर्मापि समचतुरस्रसंस्थाननामेति । एवं न्यग्रोधपरिमंडलादिष्वपि योज्यम् । उक्तं षोढा संस्थाननाम, इदानीं पंचधा वर्णनामाह–वर्णाः पंच भवन्ति कृष्णनीललोहितहरिद्रसिताः । तत्र यदुदयाज्जन्तुशरीरं कृष्णं भवति राजपट्टादिवत्, तत्कर्मापि कृष्णनाम। यदुदयाज्जन्तुशरीरं मरकतादिवन्नीलं भवति तन्नीलनाम । यदुदयाज्जन्तुशरीरं लोहितं रक्तं हिंगुलादिवद्भवति तल्लोहितनाम । यदुदयाज्जन्तुशरीरं हारिद्रं पीतं हरिद्रावद्भवति तत् हारिद्रनाम । यदुदयाज्जन्तुशरीरं सितं श्वेतं शंखादिवद्भवति तत् सितनाम । कपिशादयस्त्वेतत्संयोगेनैवोत्पद्यन्ते, न पुनः सर्वथैतद्विलक्षणा इति न दर्शिताः ॥ ३९ ॥

उक्तं वर्णनाम पंचधा, अथ गन्धनाम द्विधाह–

सुरहिदुरही रसा पण तित्तकडुकसायअंबिला महुरा ।
फासा गुरुलघुमिउखरसीउण्हसिणिद्धरुक्खट्ठा ॥ ४० ॥

टीका–इह गन्धशब्दः प्रक्रमाद्गम्यते, ततः सुरभिगन्धो दुरभिगन्धश्च द्वेधा गन्धः । तत्र सौमुख्यकृत्सुरभिगन्धः, यदु-

न्याज्जन्तुशरीरं कर्पूरादिवत्सुरभिगन्धं भवति तत्सुरभिगन्धनाम। वैमुख्यकृद्दुरभिगन्धः, यदुदयाज्जन्तुशरीरं लशुनादिवद्दुरभिगन्धं भवति तद्दुरभिगन्धनाम। अत्राप्युभयसंयोगजा पृथङ्नोक्ता, एतत्संसर्गजत्वादेव भेदाविवक्षणात्। उक्तं द्विधा गन्धनाम। अथ पञ्चधा रसनामाह–रसाः पूर्वोक्तशब्दार्थाः पञ्च भवन्ति। तथाहि–तिक्तकटुकषायाम्लाश्चत्वारो मधुरश्च पञ्चमः। तत्र श्लेष्मादिदोषहन्ता निम्बाद्याश्रितस्तिक्तो रसः। तथा च भिषक्शास्त्रम्–"श्लेष्माणमरुचिं पित्तं तृषं कुष्ठं विषं ज्वरम्। हन्यात्तिक्तो रसो बुद्धेः कर्ता मात्रोपसेवितः॥१॥" इति। यदुदयाज्जीवशरीरं निम्बादिवत्तिक्तं भवति तत्तिक्तनाम। गलामयादिप्रशमनो मरिचनागराद्याश्रितः कटुः। यदवादि–"कटुर्गलामयं शोफं हन्ति युक्त्योपसेवितः। दीपनः पाचको रुच्यो बृंहणोऽतिकफापहः॥१॥" यदुदयाज्जन्तुशरीरं मरिचादिवत् कटु भवति तत् कटुनाम। रक्तदोषापहर्ता बिभीतकामलककपित्थाद्याश्रितः कषायः। यदभाणि–"रक्तदोषं कफं पित्तं कषायो हन्ति सेवितः। रूक्षः शीतो गुरुर्ग्राही रोपणश्च स्वरूपतः॥१॥" यदुदयाज्जन्तुशरीरं बिभीतकादिवत् कषायं भवति तत् कषायनाम। अग्निदीपनादिकृदम्लीकाद्याश्रितोऽम्लः। यदभ्यधायि–"अम्लोऽग्निदीप्तिकृत् स्निग्धः शोफपित्तकफापहः। क्लेदनः पाचनो रुच्यो मूढवातानुलोमकः॥१॥" यदुदयाज्जीवशरीरमम्लीकादिवदम्लं भवति तदम्लनाम। पित्तादिप्रशमकः खण्डशर्कराद्याश्रितो मधुरः। यदवाचि–"पित्तं वातं कफं हन्ति धातुवृद्धिकरो गुरुः। जीवनः केशकृद्बालवृद्धक्षीणौजसां हितः॥१॥" यदुदयाज्जन्तुशरीरमिक्ष्वादिवन्मधुरं भवति तन्मधुरनाम। स्थानान्तरे स्तिमिताहारविध्वंसादिकर्ता सिन्धुलवणाद्याश्रितो लवणोऽपि रसः पठ्यते, स चेह नोपात्तो, मधुरादिसंसर्गजत्वात्तद्भेदेनाविवक्षणात्। संभाव्यते च

तत्र माधुर्यादिसंसर्गः, सर्वरसानां लवणप्रक्षेप एव स्वादुत्वोपपत्तेरिति । अभिहितं पंचधा रसनाम । अधुना स्पर्शनामाष्टधा प्राह-स्पृश्यन्त इति स्पर्शा अष्टावष्टसंख्याका भवन्ति । तथाहि-गुरुलघुमृदुखरशीतोष्णस्निग्धरूक्षा इति । तत्राधोगमनहेतुरयोगोलकादिगतो गुरुः । प्रायस्तिर्यगूर्ध्वगमनहेतुरर्कतूलादिनिश्रितो लघुः । सन्नतिकारणं तिनिसलतादिगतो मृदुः । स्तब्धतादिकारणं दृषदादिगतः खरः । देहस्तंभादिहेतुः प्रालेयाद्याश्रितः शीतः । आहारपाकादिकारणं ज्वलनाद्यनुगत उष्णः । पुद्गलद्रव्याणां मिथः संयुज्यमानानां बन्धनिबन्धनं तैलादिस्थितः स्निग्धः । पुद्गलद्रव्याणां मिथोऽसंयुज्यमानानामबन्धनिबन्धनं भस्माद्याधारो रूक्षः । एतत्संसर्गजास्तु नोक्ता, एष्वेवान्तर्भावादिति । ततो यदुदयाज्जन्तुशरीरं गुरु भवति वज्रादिवत्तद्गुरुस्पर्शनाम । यदुदयाज्जन्तुशरीरमर्कतूलादिवल्लघु भवति तल्लघुस्पर्शनाम । यदुदयाज्जन्तुशरीरं हंसरुतादिवन्मृदु भवति तन्मृदुस्पर्शनाम । यदुदयाज्जन्तुशरीरं खरं कर्कशं पाषाणादिवद्भवति तत् खरस्पर्शनाम-यदुदयाज्जन्तुशरीरं शीतं शीतलं मृणालादिवद्भवति तच्छीतस्पर्शनाम । यदुदयाज्जन्तुशरीरं हुतभुजादिवदुष्णं भवति तदुष्णस्पर्शनाम । यदुदयाज्जन्तुशरीरं घृतादिवत् स्निग्धं भवति तत् स्निग्धस्पर्शनाम । यदुदयाज्जन्तुशरीरं भूत्यादिवद्रूक्षं भवति तद्रूक्षस्पर्शनाम ॥ ४० ॥

उक्तमष्टधा स्पर्शनाम, इदानीं वर्णादिचतुष्कोत्तरविंशतिभेदानां शुभाशुभत्वयोरभिधित्सया प्राह-

**नीलकसिणं दुगंधं तित्तं कडुयं गुरुं खरं रुक्खं । सीयं च असुहनवगं इक्कारसगं सुभं सेसं ॥ ४१ ॥**

टीका--नीलकृष्णं नीलकृष्णाख्ये कर्मणी अशुभे, दुर्गन्धनाम 'तिक्तकटुकमिति' तिक्तकटुके रसनाम्नी, गुरु खरं

रूक्ष शीत चेति चत्वारि स्पर्शनामानि । एतानि च सर्वाण्यपि समुदितानि किमुच्यत इत्याह–' अशुभनवक ' नव प्रकृतय परिमाणमस्य प्रकृतिवृन्दस्य तन्नवक, अशुभ च तन्नवक चाशुभनवकम् । ' एकादशक ' एकादशप्रकृतिसमूहरूप, यथा रक्तपीतश्वेतवर्णा , सुरभिगन्धो, मधुराम्लकषायरसा , लघुमृदुस्निग्धोष्णस्पर्शा इति शुभ शुभविपाकवेद्यत्वात् शुभस्वरूप । कीदृक् तदित्याह–'शेप' कुवर्णनवकादवशिष्ट, कोऽर्थ –कुवर्णनवकाच्छेपा एकादशवर्णादिभेदा शुभवर्णैकादशकमुच्यत इति ॥ ४१ ॥

अधुना गतिनामातिदेशेनानुपूर्वीचतुष्टयं, आनुपूर्वीसबन्धेनोत्तरत्रोपयोगिप्रकृतिसमुदयसग्राहिनरकद्विकादिरूप संज्ञान्तर, विहायोगतिद्विक चाभिधातुमाह–

चउहगइव्वणुपुव्वी गइपुव्विदुग तिगं नियाउजुयं । पुव्वीउदओ वक्के सुहअसुहवसुट्टविहगगई॥ ४२ ॥

टीका–चतुर्धा गतिरिवानुपूर्वीप्राग्गुक्तरूपा २४ गाथाया भवति । कोऽर्थ –गत्यभिधानव्यपदेश्यमानुपूर्वीनाम, ततो निरयानुपूर्वीतिर्यगानुपूर्वीमनुष्यानुपूर्वीदेवानुपूर्वीभेदादानुपूर्वीनाम चतुर्धेति तात्पर्यम् । तत्र नरकगत्या नामकर्मप्रकृत्या सहचरितानुपूर्वी नरकगत्यानुपूर्वी, तत्समकाल चास्या वेद्यमानत्वात्तत्सहचरितत्वम् । एव तिर्यग्मनुष्यदेवानुपूर्व्योऽपि वाच्या । ' गइपुव्विदुग त्ति ' इह पूर्वीशब्देनानुपूर्वी भण्यते, आनुशब्दलोप ' ते लुग्वा ' ३-२-१०८ इति सूत्रेण, यथा देवदत्त ' देव ' ' दत्त ' इति ततो नरकादिगतिनरकाद्यानुपूर्वीस्वरूप नरकादिद्विकमुच्यते । तदेव त्रिकमभिधीयते । गतिपूर्वीद्विकमिह काकाक्षिगोलकन्यायेन सबध्यते । कीदृक्षं तदित्याह–निजायुर्युत नरकाद्यायुष्कसमन्वित नरका

दित्रिकमुच्यत इति हृदयम् । उपलक्षणत्वाद्वैक्रियषट्कं, विकलत्रिकं, औदारिकद्विकं, वैक्रियद्विकं, आहारकद्विकं, अगुरुलघुचतुष्कं, वैक्रियाष्टकमित्याद्यनुक्तं संज्ञान्तरं ग्राह्यम् । तत्र देवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियशरीरवैक्रियांगोपांगमिति वैक्रियषट्कम् । द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां जातयो विकलत्रिकम् । औदारिकशरीरं औदारिकांगोपांगमित्यौदारिकद्विकम् । वैक्रियशरीरं वैक्रियांगोपांगमिति वैक्रियद्विकम् । आहारकशरीरं आहारकांगोपांगमित्याहारकद्विकम् । देवगतिदेवानुपूर्वीदेवायुर्नरकगतिनरकानुपूर्वीनरकायुर्वैक्रियशरीरं वैक्रियांगोपांगमिति वैक्रियाष्टकम् । अगुरुलघूपघातपराघातोच्छ्वासलक्षणमगुरुलघुचतुष्कमिति । नन्वानुपूर्व्या उदयो नरकादिषु किमृजुगत्या गच्छत आहोश्विद्वक्रगत्येत्याशंक्याह–"पुव्वीउदओ वक्के त्ति" पूर्व्या आनुपूर्व्या वृषभस्य नासिकारज्जुकल्पाया उदयो विपाको वक्र एव भवति । अयमर्थः–नरके द्विसमयादिवक्रेण गच्छतो जीवस्य नरकानुपूर्व्या उदयः, तिर्यक्षु द्विसमयादिवक्रेण जीवस्य गच्छतस्तिर्यगानुपूर्व्या उदयः, मनुष्येषु द्विसमयादिवक्रेण गच्छतो जीवस्य मनुष्यानुपूर्व्या उदयः, देवेषु द्विसमयादिवक्रेण गच्छतो जीवस्य देवानुपूर्व्या उदयः । उक्तं च बृहत्कर्मविपाके–" नरयाउयस्स उदए नरए वक्केण गच्छमाणस्स । नरयाणुपुव्वियाए तहिं उदओ अंनहिं नत्थि ॥ १ ॥ एवं तिरिमणुदेवे तेसु वि वक्केण गच्छमाणस्स । तेसिमणुपुव्वियाणं तहिं उदओ अन्नहिं नत्थि ॥ २ ॥ " तथा विहायसाकाशेन गतिर्विहायोगतिः सा द्विधा, शुभा प्रशस्ता अशुभा अप्रशस्ता,

---

१ नरकायुष उदये नरके वक्रेण गच्छतः । नरकानुपूर्व्यास्तत्रोदयोऽन्यत्र नास्ति ॥ १ ॥ एवं तिर्यग्मनुष्यदेवेषु तेष्वपि वक्रेण गच्छतः । तेषामानुपूर्वीणां तत्रोदयोऽन्यत्र नास्ति ॥ २ ॥

क्रमेणोदाहरणमाह-'वसुट्ट त्ति' वृषो वृषभः सौरभेयो बलीवर्द इति यावत्, ततो वृषस्योपलक्षणत्वाद्गजकलभराजहंसादीनां प्रशस्ता विहायोगतिः। उष्ट्रः करभः क्रमेलक इति यावत्, तत उष्ट्रस्योपलक्षणत्वात् खरतिड्डादीनामप्रशस्ता विहायोगतिरिति ॥ ४२ ॥

व्याख्याताः पिण्डप्रकृतीनामुत्तरभेदाः, साम्प्रतमष्टौ प्रत्येकप्रकृतीरभिधित्सुराह- ४३-४७

परघाउदया पाणी परेसि बलिण पि होइ दुद्धरिसो। ऊससणलद्धिजुत्तो हवेइ ऊसासनामवसा ॥ ४३ ॥

टीका-परानाहन्ति पराभवति, परैर्वा न हन्यते नाभिभूयत इति पराघातः, तन्निबन्धनं नाम पराघातनाम। ततः पराघातोदयात् पराघातनामकर्मविपाकात् प्राणी जन्तुः परेषामन्येषां बलिनामपि बलवतामप्यास्तां दुर्बलानामित्यपिशब्दार्थः, भवति जायते दुर्धर्षोऽनभिभवनीयमूर्तिः। अयमर्थः-यदुदयात् परेषां दुष्प्रधर्षो महौजस्वी दर्शनमात्रेण वाक्सौष्ठवेन वा महानृपसभामपि गतः सभ्यानामपि क्षोभमुत्पादयति प्रतिपक्षप्रतिभाप्रतिघातं च करोति तत्पराघातनामेत्यर्थः। उच्छ्वासनामवशादुच्छ्वासनामकर्मोदयेनोच्छ्वसनलब्धियुक्तो भवति उच्छ्वासलब्धिसमन्वितो जायते, यदुदयादुच्छ्वसनलब्धिरात्मनो भवति तदुच्छ्वासनाम। सर्वलब्धीनां क्षायोपशमिकत्वादौदयिकी लब्धिर्न सम्भवतीति चेन्नैतदस्ति, वैक्रियाहारकलब्धीनामौदयिकीनामपि संभवात्, वीर्यान्तरायक्षयोपशमोऽपि चात्र निमित्तीभवतीति सत्यप्यौदयिकत्वे क्षायोपशमिकव्यपदेशोऽपि न विरुध्यते ॥ ४३ ॥

रविबिंबे उ जियंगं तावजुयं आयवाउ न उ जलणे ।
जमुसिणफासस्स तहिं लोहियवन्नस्स उदउ त्ति ॥ ४४ ॥

टीका--आतपादातपनामोदयाज्जीवानामंगं शरीरं तापयुतं स्वयमनुष्णमप्युष्णप्रकाशयुक्तं भवति । आतपस्य पुनरुदयो रविबिंब एव, तुशब्द एवकारार्थः । कोऽर्थः--भानुमंडलादिपार्थिवशरीरेष्वेव न पुनर्ज्वलने हुतभुजि । अत्र युक्तिमाह । यद्यस्मात् कारणात्तत्र ज्वलने ज्वलनजन्तुशरीरे तेजस्कायशरीर इत्यर्थः, उष्णस्पर्शस्योदयस्तथा लोहितवर्णस्योदय इति तेजस्कायशरीराण्येवोष्णस्पर्शोदयेनोष्णानि लोहितवर्णनामोदयात्तु प्रकाशयुक्तानि भवन्ति, न त्वातपोदयादिति भावः । यदुदयाज्जन्तुशरीराण्यात्मनानुष्णान्यप्युष्णप्रकाशरूपमातपं कुर्वन्ति तदातपनामेत्यर्थः ॥४४ ॥

अणुसिणपयासरूवं जियंगमुज्जोयए इहुज्जोया । जइदेवुत्तरविक्कियजोइसखज्जोयमाइ व्व ॥ ४५ ॥

टीका--इहोद्योतादुद्योतनामोदयेन जीवांगं जन्तुशरीरमुद्योतत उद्योतं करोति, कथमित्याह--अनुष्णप्रकाशरूपं । उष्णप्रकाशरूपं हि वह्निरप्युद्योतत इति तद्व्यवच्छेदार्थमनुष्णप्रकाशरूपमित्युक्तम् । आह--क इवोद्योतोदयाज्जन्तुशरीराण्यनुष्णप्रकाशरूपमुद्योतं कुर्वन्तीत्याह--यतिदेवोत्तरवैक्रियज्योतिष्कखद्योतादय इव । तत्र यतयश्च साधवो देवाश्च सुरा यतिदेवाः, यतिदेवैर्मूलशरीरापेक्षयोत्तरकालं क्रियमाणं वैक्रियं यतिदेवोत्तरवैक्रियम्, ज्योतिष्काश्चन्द्रग्रहनक्षत्रताराः, खद्योताः प्रतीताः, ततो यतिदेवोत्तरवैक्रियं च ज्योतिष्काश्च खद्योताश्च ते आदिर्येषां रत्नौषधीप्रभृतीनां ते यतिदेवोत्तरवैक्रिय-

ज्योतिष्कखद्योतादयस्त इव। अत्र मकारोऽलाक्षणिक'। अयमर्थ'–यथा यतिदेवोत्तरवैक्रिय चन्द्रग्रहादिज्योतिष्का. खद्योता रत्नौषधीप्रभृतयश्चानुष्णप्रकाशात्मकमुद्योत विदधति तथा यदुदयाज्जन्तुशरीराण्यनुष्णप्रकाशरूपमुद्योतमातन्वन्ति तदुद्योतनामेत्यर्थ ॥ ४५ ॥

अंग न गुरु न लहुयं जायइ जीवस्स अगुरुलहुउदया ।
तित्थेण तिहुयणस्स वि पुज्जो से उदओ केवलिणो ॥ ४६ ॥

टीका–अगुरुलघूदयादगुरुलघुनामोदयेन जीवस्याग शरीर न गुरु न लघु जायते भवति, किं तु अगुरुलघु। यत एकान्तगुरुत्वे हि वोढुमशक्य स्यादेकान्तलघुत्वे तु वायुनापह्रियमाण धारयितु न पार्येत। यदुदयाज्जन्तुशरीर न गुरु न लघु नापि गुरुलघु, किं त्वगुरुलघुपरिणामपरिणत भवति तदगुरुलघुनामेत्यर्थ। तीर्थेन तीर्थकरनामकर्मवशात्त्रिभुवनस्यापि देवमानवदानवलक्षणत्रिलोकस्यापि पूज्योऽभ्यर्चनीयो भवति। 'से' तस्य तीर्थकरनामकर्मण उदयो विपाक केवलिन उत्पन्नकेवलज्ञानस्यैव। यदुदयाज्जीव सदेवमनुजासुरलोकपूज्यमुत्तमोत्तम तीर्थ प्रवर्तयति। यदागम'–"तित्थं भंते तित्थं तित्थयरे तित्थं। गोयमा, अरिहा ताव नियमा तित्थकरे, तित्थे पुण चाउवन्ने समणसंघे पढमगणहरे वा" इति परममुनिप्रणीतधर्मतीर्थस्य प्रवर्तयितृपदमवाप्नोति तत्तीर्थकरनामेत्यर्थ ॥ ४६ ॥

---

१ तीर्थं भगवन् तीर्थं तीर्थकरस्तीर्थं। गौतम! अर्हंस्तावन्नियमात्तीर्थंकर, तीर्थं पुनश्चतुर्वर्ण श्रमणसंघ, प्रथमगणधरो वा

अंगोवंगनियमणं निम्माणं कुणइ सुत्तहारसमं । उवघाया उवहम्मइ सतणुवयवलंबिगाईहिं ॥ ४७ ॥

टीका--निर्माणं निर्माणनामांगोपांगनियमनं, अंगप्रत्यंगानां प्रतिनियतप्रदेशं व्यवस्थापनं करोति विदधाति । अतः सूत्रधारसमं सूत्रभृत्कल्पम् । यदुदयाज्जन्तुशरीरेष्वंगोपांगानां प्रतिनियतस्थानवृत्तिता भवति तत्सूत्रधारकल्पं निर्माणनामेत्यर्थः । तदभावे हि तद्भृतककल्पैरंगोपांगनामादिभिर्निर्वर्तितानामपि शिरउदरादीनां स्थानवृत्तेरनियमः स्यात् । उपघातादुपघातनामोदयादुपहन्यते विनाश्यते जन्तुः, कैरित्याह--स्वा स्वकीया तनुः शरीरं स्वतनुस्तस्या अवयवा अंशा ये लंबिकादयः, आदिशब्दात्प्रतिजिह्वाचौरदन्तादिपरिग्रहस्तैः । ' सतणुवयव इत्यत्राकारलोपः प्राकृतत्वात् । यदुदयात् स्वशरीरान्तःप्रवर्धमानैर्लंबिकाप्रतिजिह्वाचौरदन्तादिभिर्जन्तुरुपहन्यते तदुपघातनामेत्यर्थः ॥ ४७ ॥

व्याख्याता अष्टौ प्रत्येकप्रकृतयः, सांप्रतं त्रसदशकं व्याख्यानयन्नाह--

बितिचउपणिंदिय तसा बायरउ बायरा जिया थूला । नियनियपज्जत्तिजुया पज्जत्ता लद्धिकरणेहिं ॥ ४८ ॥

टीका--त्रस्यन्ति उष्णाद्यभितप्ताः सन्तो विवक्षितस्थानादुद्विजन्ते गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसाः, तत्पर्यायविपाकवेद्यं कर्मापि त्रसनाम । ततस्त्रसात्त्रसनामोदयाज्जीवाः " बितिचउपणिंदिय त्ति " इन्द्रियशब्दस्य प्रत्येकं योगात् द्वे इन्द्रिये स्पर्शनरसनलक्षणे येषां ते द्वीन्द्रियाः, शंखचान्दनककपर्दजलूकाकृमिगंडोलकपूतरकादयो भवन्ति । त्रीणि स्पर्शनरसनघ्राणलक्षणानीन्द्रियाणि येषां ते त्रीन्द्रियाः, यूकामत्कुणगर्दभेन्द्रगोपककुंथुमत्कोटकादयः । चत्वारि

स्पर्शनरसनघ्राणचक्षुर्लक्षणानीन्द्रियाणि येषा ते चतुरिन्द्रिया , मक्षिकाभ्रमरमशकवृश्चिकादयः । पच स्पर्शनरसनघ्राणचक्षु श्रोत्ररूपाणीन्द्रियाणि येषा ते पचेन्द्रिया , मत्स्यमकरहरिहरिणसारसराजहसनरसुरनारकादयो भवन्तीति । यदुदयाज्जीवास्त्रसा द्वित्रिचतु पचेन्द्रिया भवन्ति तत्त्रसनामेत्यर्थ. । वादराद्बादरनामोदयाज्जीवा जन्तवो वादरा स्थूला भवन्ति । वादरत्व चेह न चक्षुर्ग्राह्यत्वमिष्ट, वादरस्याप्येकैकस्य पृथिव्यादिशरीरस्य चक्षुर्ग्राह्यत्वाभावात् । तस्माज्जीवविपाकित्वेन जीवस्यैव कश्चिद्बादरपरिणाम जनयत्येतन्न पुद्गलेषु, किं तु जीवविपाक्यप्येतच्छरीरपुद्गलेष्वपि काचिदप्यभिव्यक्तिं दर्शयति। तेन वादराणा बहुतरसमुदितपृथिव्यादीना चक्षुषा ग्रहण भवति, न सूक्ष्माणाम् । जीवविपाकिकर्मण शरीरे स्वशक्तिप्रकटनमयुक्तमिति चेन्नैवम्, जीवविपाक्यपि क्रोधो भ्रूभंगत्रिवलीतरगितालिकफलकस्फुरत्स्वेदजलकणनेत्राघ्रातात्म्रत्वपरुषवचननेपथ्यप्रभृतिविकार कुपितनरशरीरेऽपि दर्शयति, विचित्रत्वात्कर्मशक्तेरिति । यदुदयाज्जीवा वादरा भवन्ति तद्बादरनामेत्यर्थ । पर्याप्तात् पर्याप्तनामोदयाज्जीवा निजनिजपर्याप्तियुता भवन्ति, तत्र पर्याप्तिर्नाम पुद्गलोपचयज पुद्गलग्रहणपरिणमनहेतु शक्तिविशेष , सा च विषयभेदात् षोढा–आहारपर्याप्ति शरीरपर्याप्ति , इन्द्रियपर्याप्ति , उच्छ्वासपर्याप्ति , भाषापर्याप्ति , मन पर्याप्तिश्चेति । तत्र यया वाह्यमाहारमादाय खलरसरूपतया परिणमयति साहारपर्याप्ति । यया रसीभूतमाहार रसासृग्मासमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्ति । यया धातुरूपतया परिणमितमाहारमिन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्ति ।यया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुचति सोच्छ्वासपर्याप्ति । यया तु भाषाप्रायोग्यवर्गणाद्रव्य गृहीत्वा भाषात्वेन परिणमय्यालम्ब्य च

मुंचति सा भाषापर्याप्तिः। यया पुनर्मनोयोग्यवर्गणादलिकं गृहीत्वा मनस्त्वेन परिणमय्यालंब्य च मुंचति सा मनःपर्याप्तिः। एताश्च यथाक्रममेकेन्द्रियाणां द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपंचेन्द्रियाणां संज्ञिपंचेन्द्रियाणां च चतुःपंचषट्संख्या भवंति। तथा वैक्रियशरीरिणां शरीरपर्याप्तिरेवैका आन्तर्मौहूर्तिकी, शेषाः पंचाप्येकसामयिक्यः। औदारिकशरीरिणां पुनराहारपर्याप्तिरेवैका एकसामयिकी, शेषाः पुनरान्तर्मौहूर्तिक्यः। आह च—"वेउव्वियपज्जत्ती सरीर अंतमुहु सेस इगसमया। आहारे इगसमया सेसा अंतमुहु उराले ॥ १ ॥" ततः पर्याप्तयो विद्यन्ते येषां "अभ्रादिभ्यः" ७-२-४६ इत्यप्रत्यये ते पर्याप्ताः, तद्विपाकवेद्यं कर्मापि पर्याप्तनाम। यदुदयात् स्वपर्याप्तियुक्ता भवन्ति जीवास्तत्पर्याप्तनामेत्यर्थः। ते च पर्याप्ता द्विधा, लब्ध्या करणैश्च। तत्र ये स्वयोग्यपर्याप्तीः सर्वा अपि समर्थ्य म्रियन्ते नार्वाक् ते लब्धिपर्याप्ताः, ये च पुनः करणानि शरीरेन्द्रियादीनि निर्वर्तितवन्तस्ते करणपर्याप्ता इति। ननु च शरीरपर्याप्त्यैव शरीरं भविष्यति, किं प्रागभिहितेन शरीरनाम्ना ?। नैतदस्ति साध्यभेदात्, तथाहि—शरीरनाम्नो जीवेन गृहीतानां पुद्गलानामौदारिकादिशरीरत्वेन परिणतिः साध्या, शरीरपर्याप्तेः पुनरारब्धशरीरस्य परिसमाप्तिरिति। अथ प्रागुक्तेनोच्छ्वासनाम्नैवोच्छ्वसनस्य सिद्धत्वादिहोच्छ्वासपर्याप्तिर्निर्विषयेति, नैवम्, सतीमप्युच्छ्वासनामोदयेन जनितामुच्छ्वसनलब्धिमात्मशक्तिविशेषरूपामुच्छ्वासपर्याप्तिमन्तरेण व्यापारयितुं न शक्नुयात्। यथा हि शरीरनामोदयेन गृहीता अप्यौदारिकादिशरीरपुद्गलाः शक्ति-

१ वैक्रियपर्याप्तिः शरीरे आंतर्मौहूर्तिकी शेषा एकसामयिक्यः। आहारे ( पर्याप्तिः ) एकसामयिकी शेषा आंतर्मौहूर्तिक्य औदारिके।

विशेषरूपा शरीरपर्याप्ति विना शरीररूपतया परिणमयितु न शक्यन्त इति शरीरनाम्न॰ पृथग्गिण्यते शरीरपर्याप्ति', एवमत्राप्युच्छ्वासनाम्न' पृथगुच्छ्वासपर्याप्तिरेष्टव्या, तुल्ययुक्तित्वादिति ॥ ४० ॥

**पत्तेय तणू पत्तेउदयेण, दंतअट्ठिमाइ थिरं । नाजुवरि सिराइ सुहं,सुजगाउ सवजणइट्ठो ॥ ४ए ॥**

टीका–प्रत्येकोदयेन प्रत्येकनामकर्मोदयवशाज्जन्तूना प्रत्येक तनु पृथक् पृथक् शरीर जवति। यदुदयादेकैकस्य जन्तोरेकेक शरीरमौदारिक वैक्रिय वा जवति तत्प्रत्येकनामेत्यर्थ । स्थिर स्थिरनामोदयेन दन्तास्थ्यादि निश्चल जवति, यदुदयाच्छिरोऽस्थिग्रीवादीनामवयवाना स्थिरता जवति, तत् स्थिरनामेत्यर्थ । शुज शुजनामोदयात् नाज्युपरि शिरआदिर्जवति, यदुदयान्नाजेरुपर्यवयवा शुजा जवन्ति तच्छुजनाम, शिर प्रभृतिजि स्पृष्ट परो हृष्यतीति तेपा शुजत्वम् । सुजगात् सुजगनामोदयेन सर्वजनेष्टो जवति, यदुदयादनुपकार्यपि सर्वस्य मन प्रियो जवति तत्सुजगनामेत्यर्थ । तदन्यधायि–" अणुवकए वि बहूण होइ पिउ तस्स सुजगनामुदउ त्ति ॥ सुजगुदए वि हु कोई कची आसज दूजगो जइ वि । जायइ तद्दोसाउ जहा अजवाण तित्र्ययरो ॥ १ ॥ " ॥ ४ए ॥

---

१ अनुपकृतेऽपि बहूना भवति प्रियस्तस्य सुभगनामोदय २ सुभगोदयेपिकश्चित् कचिदासाद्य दुर्भगो यद्यपि । जायते तद्दोषात् यथाऽभव्याना तीर्थकर ।

सुसरा महुरसुहझुणी, आइज्जा सव्वलोयगिझवउ। जसउ जसकित्तीउ थावरदसगं विवज्जत्थं ॥५०॥

टीका—सुस्वरात् सुस्वरनामोदयेन मधुरो माधुर्यगुणालंकृतः सुखयतीति सुखः सुखदो ध्वनिः स्वरो भवति। यदुद-याज्जीवस्य स्वरः श्रोत्रप्रीतिहेतुर्भवति तत्सुस्वरनामेत्यर्थः। आदेयादादेयनामोदयेन सर्वलोकेन समस्तेन जनेन ग्राह्यमा-देयं वचो वचनं यस्य स तथा। यदुदयाद्यत् किंचिदपि ब्रुवाणो जीवः सर्वस्योपादेयवचनो भवति, दर्शनसमनन्तरमेव तस्याभ्युत्थानादि समाचरति तदादेयनामेत्यर्थः। ' जसउ त्ति ' यशःकीर्तिनामोदयाद्यशःकीर्तिर्भवति। तत्र सामान्यत-स्तपःशौर्यत्यागादिसमुपार्जितयशसा कीर्तनं संशब्दनं श्लाघनं यशःकीर्तिरुच्यते। यद्वा दानपुण्यकृता कीर्तिः, पराक्रमकृतं यशः। अथवा एकदिग्गामिनी कीर्तिः सर्वदिग्गामुकं यशः। इति व्याख्यातं त्रसदशकं, संप्रति स्थावरदशकं व्याचिख्या-सुरतिदिशति—इतस्त्रसदशकात् स्थावरदशकं विपर्यस्तं विपरीतार्थं भवति। तथाहि—तिष्ठन्तीत्येवंशीला उष्णाद्यभिता-पेऽपि तत्परिहारासमर्थाः स्थावराः "स्थेशभासपिसकसोवरः" ५-२-८१ इति वरप्रत्ययः पृथिवीकायिका अप्कायिका-स्तेजस्कायिका वायुकायिका वनस्पतिकायिका एकेन्द्रियाः, तद्विपाकवेद्यं कर्मापि स्थावरनाम। तेजोवायूनां तु स्थावर-नामोदयेऽपि चलनं स्वाभाविकमेव न पुनरुष्णाद्यभितापेन द्वीन्द्रियादीनामिव विशिष्टमिति। यदुदयात् सूक्ष्माः पृथि-वीकायिकादयः पंच भवन्ति तदपि जीवविपाकि सूक्ष्मनामकर्मेति। यदुदयात् पूर्वोक्तस्वयोग्यपर्याप्तिपरिसमाप्तिविकला जन्तवो भवन्ति तदपर्याप्तनाम, अपर्याप्तयो विद्यन्ते येषां तेऽपर्याप्ता इति कृत्वा तन्निबन्धनं नामापर्याप्तनाम। तत्र द्वेधा अपर्याप्ताः, लब्ध्या करणैश्च। तत्र येऽपर्याप्तका एव संतो म्रियन्ते, न पुनः स्वयोग्यपर्याप्तीः सर्वा अपि समर्थयन्ति ते

लब्ध्यपर्याप्ता.। ये च पुन' करणानि शरीरेन्द्रियादीनि न तावन्निर्वर्तयन्ति, अथ चावश्य पुरस्तान्निर्वर्तयिष्यन्ति ते करणापर्याप्ता । इह चैवमागम –लब्ध्यपर्याप्ता अपि नियमादाहारशरीरेन्द्रियपर्याप्तिपरिसमाप्तावेव म्रियन्ते, नार्वाक् । यस्मादागामिभवायुर्बध्वा म्रियन्ते सर्व एव देहिन , तच्चाहारशरीरेन्द्रियपर्याप्तिपर्याप्तानामेव बध्यत इति । यदुदयादनन्ताना जीवाना साधारणमेक शरीर भवति तत्साधारणनाम । यदुदयात् कर्णभ्रूजिह्वाद्यवयवा अस्थिराश्चपला भवन्ति तदस्थिरनाम । यदुदयान्नाभेरध पादादीनामवयवानामशुभता भवति तदशुभनाम, पादादिना हि स्पृष्ट' परो रुष्यतीति तेषामशुभत्वम् । कामिनीव्यवहारेण व्यभिचार इति चेन्नैव, तस्य मोहनिबन्धनत्वात्, वस्तुस्थितिश्चेह चिन्त्यत इति । यदुदयवशादुपकारकृदपि जनस्याप्रियो भवति तद्दुर्भगनाम । उक्त च–"[1]उवगारकारगो वि हु न रुच्चई दूभगो उ जस्सुदए" । इति । यदुदयात् खरभिन्नहीनस्वरो भवति तद्दु'स्वरनाम । यदुदयवशाद्युक्तियुक्तमपि ब्रुवाणो नादेयवचनो भवति न च लोकोऽभ्युत्थानादि तस्य करोति तदनादेयनाम । यदुदयात्पूर्वप्रदर्शिते यश.कीर्ती न भवतस्तदयश कीर्तिनामेति ॥ ५० ॥

व्याख्यात द्विचत्वारिंशद्भेदं, त्रिनवतिभेद त्र्युत्तरशतभेद, सप्तषष्टिभेद, षष्ठ नाम। सम्प्रति द्विभेद गोत्रकर्माभिधित्सुराह–

**गोय दुहुच्चनीयं कुलाल इव सुघडभुभलाईयं । विग्घं दाणे लाभे भोगुवभोगेसु वीरिए य ॥ ५२ ॥**

टीका–गोत्र प्राग्वर्णितशब्दार्थं द्विधा द्विभेद, कथमित्याह–' उच्चनीच ' उच्च च नीच चोच्चनीच, उच्चैर्गोत्र नीचै-

---

१ उपकारकारकोऽपि हि न रोचते दुर्भगस्तु यस्योदये

गोत्रमित्यर्थः । एतच्च ‘ कुलाल इव ’ कुम्भकारतुल्यं । शोभनो घटः सुघटः पूर्णकलशः, भुंभलं मद्यस्थानं, सुघटभुंभले आदी यस्य तत्कृतोपकरणस्य तत्सुघटभुंभलादि करोतीति शेषः । अयमत्र भावः—यथा हि कुलालः पृथिव्यास्तादृशं पूर्णकलशादिरूपं करोति यादृशं लोकात् कुसुमचन्दनाक्षतादिभिः पूजां लभते, स एव भुंभलादि तादृशं विदधाति यादृशमप्रक्षिप्तमद्यमपि लोकान्निन्दां लभते, तथा यदुदयान्निर्धनः कुरूपो बुद्ध्यादिपरिहीणोऽपि पुरुषः सुकुलजन्ममात्रादेव लोकात् पूजां लभते तदुच्चैर्गोत्रम् । यदुदयात्पुनर्महाधनोऽप्रतिरूपरूपो बुद्ध्यादिसमन्वितोऽपि पुमान् विशिष्टकुलाभावाल्लोकान्निंदां प्राप्नोति तन्नीचैर्गोत्रमिति । उक्तं द्विविधं गोत्रकर्म, अथ विघ्नकर्म पंचधा व्याख्यानयन्नाह—“ विग्घं दाणे लाभे ” इत्यादि । विशेषेण हन्यन्ते तद्दानादिलब्धयो विनाश्यन्तेऽनेनेति विघ्नमन्तरायकर्म । तच्च विषयभेदात् पंचधा इति दर्शयति—दीयत इति दानं तस्मिन्, लभ्यत इति लाभस्तस्मिन्, भुज्यते सकृदुपभुज्यत इति भोगः पुष्पाहारादिः, उपेति पुनः पुनर्भुज्यत इति उपभोगो भवनासनांगनादि । उक्तं च—“ सइ भुज्जइ त्ति भोगो सो पुण आहारपुप्फमाईसु । उवभोगो उ पुणो पुण उवभुज्जइ भुवणवणियाई ॥ १ ॥ ” ततो भोगश्चोपभोगश्च भोगोपभोगौ तयोः । प्राकृतवशाद्द्विवचनस्थाने बहुवचनं भवति, यदाहुः श्रीहेमचन्द्रसूरिपादाः स्वप्राकृतलक्षणे “ द्विवचनस्य बहुवचनम् ” ८-३-१३० इति । विशेषेण ईर्यते चेष्ट्यतेऽनेनेति वीर्यं, यद्वा विविधमनेकप्रकारमीरयति यत्प्राणिनं क्रियासु तद्वीर्यं सामर्थ्यं शक्तिरिति पर्यायास्तस्मिन् । चः समुच्चये । सर्वत्र विघ्नमिति योज्यं । विषयसप्तमी चेयं सर्वत्र । ततो दानादिविषयभेदतो

१ सकृदभुज्यत इति भोगः स पुनराहारपुष्पादिषु । उपभोगस्तु पुनः पुनरुपभुज्यते भवनवनितादि ॥ १ ॥

दानादिविषय पचधा विघ्न कर्म जवतीति वाक्यार्थः । जावार्थस्त्वयम्–सत्यपि दातव्ये वस्तुनि, आगते च गुणवति पात्रे, जानन्नपि दानफल, यदुदयाद्दातु नोत्सहते तद्दानान्तरायम् । यदुदयाद्विशिष्टेऽपि दातरि, विद्यमानेपि देयवस्तुनि, याञ्चाकुशलोऽपि याचको न लजते तल्लाजान्तरायम् । यदुदयात् सति विजवादौ सपद्यमाने चाहारमाल्यादौ विरतिहीनोऽपि न जुक्ते तद्भोगान्तरायम् । यदुदयाद्विद्यमानमपि वस्त्रालकारादि नोपजुक्ते तदुपजोगान्तरायम् । यदुदयवशाद्बलवान् नीरुजो वय स्थोऽपि च तृणकुब्जीकरणेऽप्यसमर्थस्तद्वीर्यान्तरायमिति ॥ ५१ ॥

एतच्च जाण्डागारिकसममिति दर्शयन्नाह–

सिरिहरियसम एय जह पडिकूलेण तेण रायाई । न कुणइ दाणाईयं एवं विग्घेण जीवो वि ॥ ५२ ॥

टीका–श्रियो गृह श्रीगृह जाण्डागार तद्विद्यते यस्य स श्रीगृहिको जाण्डागारिकस्तेन सम तुल्यमेतदन्तरायकर्म । यथा तेन श्रीगृहिकेण प्रतिकूलेनाननुकूलेन राजादि , राजा नृपति आदिशब्दात् श्रेष्ठीश्वरतलवरादिपरिग्रह । न करोति कर्तु न पारयति दानादि, आदिशब्दाल्लाजजोगोपजोगादिग्रहणम् । एवममुना श्रीगृहिकदृष्टान्तेन विघ्नेनान्तरायकर्मणा जीवोऽपि जन्तुरपि दानादि कर्तु न पारयतीति ॥ ५२ ॥

व्याख्यात पचविधमन्तरायकर्म, तद्व्याख्याने च समर्थिता " इह नाणदसणावरणवेय " इत्यादिमूलगाथा, अथ " कीरइ जिएण हेऊहिं जेण तो जन्नए कम्म " इत्यादौ यदुक्तं तद्व्याख्यानार्थं यस्य कर्मणो यद्बन्धहेतवस्तान् क्वचन हेतुद्वारेण क्वापि च हेतुमद्द्वारेण दिदर्शयिषुराह–

पडिणीयत्तणनिन्हवउवघायपउसअंतराएणं । अच्चासायणयाए आवरणदुगं जिओ जयइ ॥ ५३ ॥

टीका-आवरणद्विकं ज्ञानावरणदर्शनावरणरूपं जीवो जयति, धातूनामनेकार्थत्वाद्बध्नातीति संबन्धः । तत्र ज्ञानस्य मत्यादेर्ज्ञानिनां साध्वादीनां ज्ञानसाधनस्य पुस्तकादेः प्रत्यनीकत्वेन तदनिष्टाचरणलक्षणेन निह्नवेन न मया तत्समीपेऽधीतमित्यादिस्वरूपेण, उपघातेन मूलतो विनाशस्वरूपेण, प्रद्वेषेण आन्तराप्रीतिरूपेण, अन्तरायेण भक्तपानवसनोपाश्रयलाभनिवारणलक्षणेन, अत्याशातनया च जात्याद्युद्घट्टनादिहीलारूपया ज्ञानावरणं कर्म जयतीति सर्वत्र द्रष्टव्यम् । एतच्चोपलक्षणम्, अतो ज्ञान्यवर्णवादेनाचार्योपाध्यायाद्यविनयेनाकाले स्वाध्यायकरणेन काले च स्वाध्यायाविधानेन प्राणिवधानृतभाषणस्तैन्याब्रह्मपरिग्रहरात्रिभोजनाविरमणादिभिश्च ज्ञानावरणं जयतीत्याद्यपि वक्तव्यमिति । एवं दर्शनावरणेऽपि वाच्यम्, नवरं दर्शनाभिलापो वक्तव्यः । तथाहि-दर्शनस्य चक्षुर्दर्शनादेः दर्शनिनां साध्वादीनां दर्शनसाधनस्य श्रोत्रनयननासिकादेः संमत्यनेकान्तजयपताकादिप्रमाणशास्त्रपुस्तकादेर्वा प्रत्यनीकत्वेन तदनिष्टाचरणलक्षणेन, निह्नवेन न मया तत्समीपेऽधीतमित्यादिस्वरूपेण, उपघातेन मूलतो विनाशेन, प्रद्वेषेण आन्तराप्रीत्यात्मकेन, अन्तरायेण भक्तपानवसनोपाश्रयलाभनिवारणेन, अत्याशातनया च जात्यादिहीलया दर्शनावरणं कर्म जयतीति सर्वत्र द्रष्टव्यम् । उपलक्षणमिदम्, अतो दर्शनिनां दूषणग्रहणेन श्रवणकर्तननेत्रोत्पाटननासाच्छेदजिह्वाविकर्तनादिना प्राणिवधानृतभाषणस्तैन्याब्रह्मपरिग्रहरात्रिभोजनाविरमणादिभिश्च दर्शनावरणं जयतीत्याद्यपि वक्तव्यम् । यदवादि श्रीहेमचन्द्रसूरिपादैः-"ज्ञानदर्शनयोस्तद्वत्तद्धेतूनां च ये किल । विघ्ननिह्नवपैशून्याशातनाघातमत्सराः ॥ १ ॥ ते ज्ञानदर्शनावारकर्महेतव आश्रवाः" ॥ ५३ ॥

उक्ता ज्ञानावरणदर्शनावरणबन्धहेतव , इदानीं वेदनीयस्य द्विविधस्यापि तानाह–

**गुरुभत्तिखतिकरुणावयजोगकसायविजयदाणजुओ । दढधम्माई अज्जइ सायमसायं विवज्जयओ ॥५४॥**

टीका–इह युतशब्दस्य प्रत्येकं योगस्ततो गुरवो मातापितृधर्माचार्यादयस्तेषां भक्तिरासनादिप्रतिपत्तिर्गुरुभक्तिस्तया युतो गुरुभक्तियुतो गुरुभक्तिसमन्वितो जन्तु सात सातवेदनीयमर्जयति समुपार्जयतीति सबन्ध । क्षान्तियुतः क्षमान्वित , करुणायुतो दयापरीतचेता , व्रतयुतो महाव्रताणुव्रतादिसमन्वित', योगयुतो दशविधचक्रवालसामाचार्याद्याचरणप्रगुण , कषायविजययुत क्रोधादिकषायपरिजिवनशील , दानयुतो दानरुचि', दृढधर्म आपत्स्वपि निश्चलधर्म , आदिशब्दाद्बाल-वृद्धग्लानादिवैयावृत्त्यकरणशीलो जिनचैत्यपूजापरायणश्च सातमर्जयति बध्नाति । यदवाचि–" देवपूजागुरूपास्तिपात्रदान। दयाक्षमा । सरागसंयमो देशसयमोऽकामनिर्जरा॥१॥शौच बालतपश्चेति सद्वेद्यस्य स्युराश्रवा ।" तथा विपर्ययत सातबन्ध-विपर्ययेणासातमर्जयति, तथाहि–गुरूणामवज्ञायकः, क्रोधनो, निर्दयो, व्रतयोगविकल, उत्कटकषाय , कार्पण्यवान्, सद्धर्मकृत्यप्रमत्त , हस्त्यश्वबलीवर्दादिनिर्दयदमनवाहनलाञ्छनादिकरणप्रवण स्वपरदुःखशोकवधतापक्रन्दनपरिदेवनादिकारकश्चेति यदन्यधायि–" दुःखशोकवधास्तापक्रन्दने परिदेवनम् । स्वान्योभयस्था स्युरसद्वेद्यस्यामी इहाश्रवा' ॥ १ ॥" इति ॥ ५४ ॥

उक्ता वेदनीयस्य बन्धहेतव , साम्प्रत मोहनीयस्य द्विविधस्यापि तानाह–

**उम्मग्गदेसणामग्गनासणादेवदव्वहरणेहिं । दंसणमोहं जिणमुणिचेइयसंघाइपडिणीओ ॥ ५५ ॥**

टीका–उन्मार्गस्य भवहेतोर्मोक्षहेतुत्वेन देशना कथनमुन्मार्गदेशना, मार्गस्य ज्ञानदर्शनचारित्रलक्षणस्य मुक्तिपथस्य

नाशनापलपनं मार्गनाशना, देवद्रव्यस्य चैत्यद्रव्यस्य हरणं भक्षणोपेक्षणप्रज्ञाहीनत्वलक्षणं । तत उन्मार्गदेशना च मार्ग-नाशना च देवद्रव्यहरणं च तैर्हेतुभिर्जीवो दर्शनमोहं मिथ्यात्वमोहनीयमर्जयति । तथा जिनमुनिचैत्यसंघादिप्रत्यनीकः, तत्र जिनास्तीर्थकराः, मुनयः साधवः, चैत्यानि प्रतिमारूपाणि, संघः साधुसाध्वीश्रावकश्राविकालक्षणः, आदिशब्दात् सिद्धगुरुश्रुतादिपरिग्रहस्तेषां प्रत्यनीकोऽवर्णवादाशातनाद्यनिष्टनिर्वर्तको दर्शनमोहमर्जयति । यदत्राणि–"वीतरागे श्रुते संघे धर्मे सर्वसुरेषु च । अवर्णवादिता तीव्रमिथ्यात्वपरिणामिता ॥ १ ॥ सर्वज्ञसिद्धदेवापह्नवो धार्मिकदूषणम् । उन्मार्गदर्शनानर्थाग्रहोऽसंयतपूजनम् ॥ २ ॥ असमीक्षितकारित्वं गुर्वादिष्ववमानना । इत्यादयो दृष्टिमोहस्याश्रवाः परिकीर्तिताः ॥ ३ ॥" ॥ ५५ ॥

**दुविहंपि चरणमोहं कसायहासाइविसयविवसमणो । बंधइ नरयाउ महारंभपरिग्गहरओ रुद्दो ॥ ५६ ॥**

टीका–द्विविधमपि द्विभेदमपि चरणमोहं चारित्रमोहनीयं कषायमोहनीयनोकषायमोहनीयरूपं जीवो बध्नातीति संबन्धः। किंविशिष्ट इत्याह–कषायहास्यादिविषयविवशमनाः । तत्र कषायाः क्रोधादय उक्तस्वरूपाः षोडश, हास्यादयो हास्यरत्यरतिशोकभयजुगुप्सा इति गृह्यन्ते, विषयाः शब्दरूपरसगन्धस्पर्शाख्याः पंच । ततः कषायाश्च हास्यादयश्च विषयाश्च कषायहास्यादिविषयास्तैर्विवशं विसंस्थुलं पराधीनं मनो मानसं यस्य स कषायहास्यादिविषयविवशमनाः । इदमत्र हृदयम्–कषायविवशमनाः कषायमोहनीयं बध्नाति, हास्यादिविवशमनास्तु हास्यादिमोहनीयं हास्यमोहनीयरतिमोहनीयारतिमोहनीय-

शोकमोहनीयभयमोहनीयजुगुप्सामोहनीयाख्य नोकषायमोहनीय बध्नाति, विषयविवशमना पुनर्वेदत्रयाख्य नोकषायमोहनीय बध्नाति। सामान्यत सर्वेऽपि कषायहास्यादिविषया द्विविधस्यापि चारित्रमोहनीयस्य बन्धहेतवो भवन्ति। यत्प्रत्यपादि–"कषायोदयतस्तीव्र परिणामो य आत्मन । चारित्रमोहनीयस्य स आश्रव उदीरित ॥ १ ॥ उत्प्रासन सकदर्पोपहासो हासशीलता। बहुप्रलापो दैन्योक्तिर्हास्यस्यामी स्युराश्रवा ॥ २ ॥ देशादिदर्शनौत्सुक्य चित्रे रमणखेलने। परचित्तावर्जना चेत्याश्रवा कीर्तिता रते• ॥ ३ ॥ असूया पापशीलत्व परेषा रतिनाशनम्। अकुशलप्रोत्सहन चारतेराश्रवा अमी ॥ ४ ॥ परशोकाविष्करणं स्वशोकोत्पादशोचने। रोदनादिप्रसक्तिश्च शोकस्यैते स्युराश्रवाः ॥ ५ ॥ स्वय भयपरीणाम परेषामथ भापनम्। त्रासन निर्दयत्वं च भय प्रत्याश्रवा अमी ॥ ६ ॥ चतुर्वर्णस्य सघस्य परिवादजुगुप्सने। सदाचारजुगुप्सा च जुगुप्साया स्युराश्रवा ॥ ७ ॥ ईर्ष्या विषादगार्ध्ये च मृषावादोऽतिवक्रता। परदाररतासक्ति स्त्रीवेदस्याश्रवा इमे ॥ ८ ॥ स्वदारमात्रसन्तोषोऽनीर्ष्या मन्दकषायता॥ अवक्राचारशीलत्व पुवेदस्याश्रवा इति ॥ ९॥ स्त्रीपुंसानगसेवोग्रा कषायास्तीव्रकामता॥ पाखण्डिस्त्रीव्रतभंग षढवेदाश्रवा अमी ॥ १० ॥ साधूना गर्हणा धर्मोन्मुखाना विघ्नकारिता। मधुमासविरतानामविरत्यभिवर्णनम् ॥ ११ ॥ विरताविरताना चान्तरायकरण मुहु । अचारित्रगुणाख्यान तथा चारित्रदूषणम् ॥ १२ ॥ कषायनोकषायाणामन्यस्थानामुदीरणम्। चारित्रमोहनीयस्य सामान्येनाश्रवा अमी ॥ १३ ॥"

अभिहिता मोहनीयस्य बन्धहेतव, सम्प्रति चतुर्विधस्याप्यायुषस्तानाह–"बधइ नरयाउ" इत्यादि। बध्नात्यर्जयति नरकायुर्नारकायुष्क जीव । किंविशिष्ट इत्याह–'महारम्भपरिग्रहरतो' महारम्भरतो महापरिग्रहरतश्चेत्यर्थ । रौद्रो रौद्रपरि-

णामो गिरिभेदसमानकषायरौद्रध्यानारूषितचेतोवृत्तिरित्यर्थः । उपलक्षणत्वात् पंचेन्द्रियवधादिपरिग्रहः । यदुक्तमागमे- " पंचेन्द्रियप्राणिवधो बह्वारंभपरिग्रहौ । निरनुग्रहता मांसभोजनं स्थिरवैरता ॥ १ ॥ रौद्रध्यानं मिथ्यात्वानंतानुबन्धिकषायता । कृष्णनीलकापोताश्च लेश्या अनृतभाषणम् ॥ २ ॥ परद्रव्यापहरणं मुहुर्मैथुनसेवनम् । अवशेन्द्रियता चेति नरकायुष आश्रवाः ॥ ३ ॥ " इति ॥ ५६ ॥

उक्ता नरकायुषो बन्धहेतवः, इदानीं तिर्यगायुषस्तानाह-

**तिरियाउ गूढहियओ सढो ससल्लो तहा मणुस्साउ। पयईइ तणुकसाओ दाणरुई मज्झिमगुणो य ॥ ५७ ॥**

टीका-तिर्यगायुर्बध्नाति जीवः । किंविशिष्ट इत्याह-गूढहृदय उदायिनृपमारकादिवत्तथात्माभिप्रायं सर्वथैव निगूहति यथा नापरः कश्चिद्वेत्ति । शठो वचसा मधुरः परिणामे तु दारुणः । सशल्यो रागादिवशाचीर्णानेकव्रतनियमातिचारस्फुरदन्तःशल्योऽनालोचिताप्रतिक्रान्तः । तथाशब्दादुन्मार्गदेशनादिपरिग्रहः । उक्तं च-" उन्मार्गदेशना मार्गप्रणाशो गूढचित्तता । आर्तध्यानं सशल्यत्वं मायारंभपरिग्रहौ ॥ १ ॥ शीलव्रते सातिचारो नीलकापोतलेश्यता । अप्रत्याख्यानकषायास्तिर्यगायुष आश्रवाः ॥२॥" उक्तास्तिर्यगायुर्बन्धहेतवः, अथ मनुष्यायुषस्तानाह-"मणुस्साउ" इत्यादि । मनुष्यायुर्जीवो बध्नाति । किंविशिष्ट इत्याह-प्रकृत्या स्वभावेनैव तनुकषायो रेणुराजिसमानकषायः, दानरुचिर्यत्र तत्र वा दानशीलः,मध्यमास्तदुचिताः केचिद्गुणाः क्षमामार्दवार्जवादयो यस्य स मध्यमगुणः अधमगुणस्य हि नरकायुःसंभवादुत्तमगुणस्य तु सिद्धेः सुरलोकायुषो

वा सत्त्वादिति भाव । चशब्दादल्पपरिग्रहाल्पारम्भादिपरिग्रह । आह च-" अल्पौ परिग्रहारम्भौ सहजे मार्दवार्जवे । कापोतपीतलेश्यात्व धर्मध्यानानुरागिता ॥ १ ॥ प्रत्याख्यानकषायत्व परिणामश्च मध्यम । सविभागविधायित्व देवता गुरुपूजनम् ॥२॥ पूर्वालापप्रियालापौ सुखप्रज्ञापनीयता । लोकयात्रासु माध्यस्थ्य मानुषायुष आश्रवा ॥३॥ " इति ॥५७॥

उक्ता मनुष्यायुषो बन्धहेतव , सप्रति देवायुषस्तानाह-

**अविरयमाइ सुराउं वालतवोकामनिज्जरो जयइ । सरलो अगारविल्लो सुहनाम अन्नहा असुहं ॥ ५८ ॥**

टीका-अविरतोऽविरतसम्यग्दृष्टि सुरायुर्देवायुष्क जयति बध्नाति। आदिशब्दादेशविरतसरागसंयतपरिग्रह । वीतराग-सयतस्त्वतिविशुद्धत्वादायुर्न बध्नाति, घोलणपरिणाम एव तस्य बध्यमानत्वात् । बाल तपो यस्य स बालतपा , अनधिगतपरमार्थस्वभावो दु खगर्भमोहगर्भवैराग्योऽज्ञानपूर्वकनिर्वर्तिततप प्रभृतिकष्टविशेषो मिथ्यादृष्टि , सोऽप्यात्मगुणानुरूप किंचिदसुरादिकायुर्बध्नाति । यदाह भगवान् भाष्यकार -" वालतवे पडिवद्धा उक्कडरोसा तवेण गारविया । वेरेण य पडिवद्धा मरिउं असुरेसु जायंति ॥ १ ॥ " अकामस्यानिच्छतो निर्जरा कर्मविघटनलक्षणा यस्यासावकामनिर्जर । इद-मुक्त भवति-" अकामतण्हाए अकामछुहाए अकामबंभचेरवासेण अकामसीयायवदंसमसगअण्हाणगसेयजल्लमलपंकप-

१ वालतपसि प्रतिबद्धा उत्कटरोषास्तपसा गर्विता । वैरेण च प्रतिबद्धा मृत्वा असुरेषु जायन्ते ॥ १ ॥ २ अकामतृष्णया अकाम-क्षुधया अकामब्रह्मचर्यवासेन अकामशीतातपदंशमशकास्नानकस्वेदजल्ल ( जल्ल रजोवगुठनादि ) मलपंकपरिग्रहेण दीर्घरोगचारकनिरोधबन्धनतया गिरितरुशिखरनिपतनतया जलज्वलनप्रवेशानशनादिभि

रिग्गहेणं दीहरोगवारगनिरोहबंधणयाए गिरितरुसिहरनिवडणयाए जलजलणपवेसअणसणाईहिं " उदकराजिसमानकषायस्तदुचितशुभपरिणामः किंचिद्व्यंतरादिकायुर्बध्नाति । उपलक्षणत्वात् कल्याणमित्रसंपर्कमानसो धर्मश्रवणशील इत्यादिपरिग्रहः । यदाहुः–"सरागसंयमो देशसंयमोऽकामनिर्जरा । कल्याणमित्रसंपर्को धर्मश्रवणशीलता ॥ १ ॥ पात्रे दानं तपः श्रद्धा रत्नत्रयाविराधना । मृत्युकाले परीणामो लेश्ययोः पद्मपीतयोः ॥ २ ॥ बालं तपोग्नितोयादिसाधनोल्लंबनानि च । अव्यक्तसामायिकता देवस्यायुष आश्रवाः ॥३॥" उक्ता देवायुषो बन्धहेतवः, संप्रति नामकर्म यद्यपि द्विचत्वारिंशदादिभेदादनेकधा तथापि शुभाशुभविवक्षया द्विविधमित्यस्य द्विविधस्यापि बन्धहेतूनाह–" सरलो " इत्यादि, सरलः सर्वत्र मायारहितः । गौरवाणि ऋद्धिरससातलक्षणानि विद्यन्ते यस्य स गौरववान्, न गौरववान् अगौरववान् "आल्विल्लोल्लालवंतमतेत्तेरमणा मतोः" ८-२-१५९ इति प्राकृतसूत्रेण मतोः स्थाने ल्लादेशः । उपलक्षणत्वात् संसारभीरुः, क्षमामार्दवार्जवादिगुणयुक्तः शुभं देवगतियशःकीर्तिपंचेन्द्रियजात्यादिरूपं नामकर्म बध्नाति । अन्यथोक्तविपरीतस्वभावः । तथाहि । मायावी, गौरववान्, उत्कटक्रोधादिपरिणामो,ऽशुभं नरकगत्ययशःकीर्त्येकेन्द्रियादिजातिलक्षणं नामकमार्जयतीति । उक्तं च–" मनोवाक्कायवक्रत्वं परेषां विप्रतारणम् । मायाप्रयोगो मिथ्यात्वं पैशून्यं चलचित्तता ॥१॥ सुवर्णादिप्रतिच्छन्दकरणं कूटसाक्षिता । वर्णगन्धरसस्पर्शान्यथोपपादनानि च ॥२॥ अंगोपांगच्यावनानि यंत्रपंजरकर्म च ॥ कूटमानतुलाकर्मान्यनिन्दात्मप्रशंसनम् ॥३॥ हिंसानृतस्तेयाब्रह्ममहारंभपरिग्रहाः । परुषासभ्यवचनं शुचिवेषादिना मदः ॥ ४ ॥ मौखर्याक्रोशौ सौभाग्योपघाताः कार्मणक्रियाः । परकौतूहलोत्पादः परहास्यविडंबने ॥ ५ ॥ वेश्यादीनामलंकारदानं दावाग्निदीपनम् । देवादिव्याजाद्गन्धादि-

चौर्य तीव्रकषायता ॥ ६ ॥ चैत्यप्रतिश्रयारामप्रतिमाना विनाशनम् । अगारादिक्रिया चैत्यशुजस्य नाम्न आश्रवा ॥ ७ ॥ एत एवान्यथारूपास्तथा ससारजीरुता । प्रमादहान सद्भावार्पण क्षान्त्यादयोऽपि च ॥ ८ ॥ दर्शने धार्मिकाणा च सम्रम स्वागतक्रिया । परोपकारसारत्वमाश्रवा शुजनामनि ॥ ए ॥ ' इति ॥ ५८ ॥

उक्ता नाम्नो वन्धहेतव , सप्रति गोत्रस्य द्विविधस्यापि तानाह–

**गुणपेही मयरहिर्ज अज्जयणज्जावणारुई निच्चं । पकुणइ जिणाइजत्तो उच्च नीयं इयरहा उ ॥ ५ए ॥**

टीका–गुणप्रेक्षी यस्य यावन्त गुण पश्यति, तस्य तमेव प्रेक्षते पुरस्करोति, दोषेषु सत्स्वप्युदास्त इत्यर्थ । मदरहितो विशिष्टजातिलाजकुलैश्वर्यवलरूपतप श्रुतादिसपत्समन्वितोऽपि निरहकार । नित्य सर्वदाऽध्ययनाध्यापनारुचि' स्वय पठतीतरांश्च पाठयति, अर्थतश्च स्वयमजीक्ष्ण विमृशति परेषा च व्याख्यानयति, असत्या वा पठनादिशक्तौ तीव्रवहुमान परानध्ययनाध्यापनापरायणाननुमोदते । तथा जिनादिजक्तो जिनाना तीर्थनाथानामादिशब्दात् सिद्धाचार्योपाध्यायसाधु-चैत्यानामन्येषा च गुणगरिष्ठाना जक्तो वहुमानपर । प्रकरोति प्रकर्षेण समुपार्जयत्युच्चमुच्चैर्गोत्रम् । नीच नीचैर्गोत्रमित-रथा तु जणितविपरीतस्वजाव । उक्त च–" परस्य निन्दावज्ञोपहासा सद्गुणलोपनम् । सदसद्दोषकथनमात्मनस्तु प्रश-सनम् ॥ १ ॥ सदसद्गुणशसा च स्वदोषाच्छादन तथा । जात्यादिजिर्मदश्चेति नीचैर्गोत्राश्रवा अमी ॥ २ ॥ नीचैर्गोत्राश्र-वविपर्यासो विगतगर्वता । वाक्कायचित्तैर्विनय उच्चैर्गोत्राश्रवा अमी ॥ ३ ॥" इति ॥ ५ए ॥

उक्ता गोत्रस्य बन्धहेतवः, सांप्रतमन्तरायस्य ये बन्धहेतवस्तानभिधित्सुः शास्त्रमिदं समर्थयन्नाह—

**जिणपूयाविग्घकरो हिंसाइपरायणो जयइ विग्घं। इय कम्मविवागोयं लिहिउ देविंदसूरिहिं ॥ ६० ॥**

टीका—जिनपूजाविघ्नकरः सावद्यदोषोपेतत्वाद्गृहिणामप्येषाऽविधेयेत्यादिकुदेशनादिभिः समयान्तस्तत्त्वदूरीकृतो जिनपूजानिषेधक इत्यर्थः। हिंसा जीववध आदिशब्दादनृतभाषणस्तैन्याब्रह्मपरिग्रहरात्रिभोजनाविरमणादिपरिग्रहस्तेषु परायणस्तत्परः। उपलक्षणत्वान्मोक्षमार्गस्य ज्ञानचारित्रादेस्तद्दोषग्रहणादिना विघ्नं करोति, साधुभ्यो वा भक्तपानोपाश्रयोपकरणभैषजादिकं दीयमानं निवारयति, तेन चैतद्विदधता मोक्षमार्गः सर्वोऽपि विघ्नितो भवति, अपरेषामपि सत्त्वानां दानलाभभोगपरिभोगविघ्नं करोति, मंत्रादिप्रयोगेण च परस्य वीर्यमपहरति, हठाच्च वधबन्धनिरोधादिभिः परं निश्चेष्टं करोति, छेदनभेदनादिभिश्च परस्येन्द्रियशक्तिमुपहन्ति। स किमित्याह—जयति धातूनामनेकार्थत्वादर्जयति विघ्नं पंचप्रकारमप्यन्तरायकर्म। इति पूर्वोक्तप्रकारेण कर्मविपाकः कर्मविपाकनामकं शास्त्रमयं संप्रत्येव निगदितस्वरूपो लिखितोऽक्षरविन्यासीकृतो देवेन्द्रसूरिभिः करालकलिकालपातालतलावमग्नविशुद्धधर्मधुरोद्धरणधुरीणश्रीमज्जगच्चन्द्रसूरिचरणसरसीरुहचंचरीकैरिति।

विष्णोरिव यस्य विभोः पदत्रयी व्यानशे जगन्निखिलम्। कर्ममलपटलजलदः स श्रीवीरो जिनो जयतु ॥ १ ॥
कुन्दोज्ज्वलकीर्तिभरैः सुरभीकृतसकलविष्टपाभोगः। शतमखशतविनतपदः श्रीगौतमगणधरः पातु ॥ २ ॥ तदनु सुधर्म-

स्वामी जबूप्रजवादयो मुनिवरिष्ठा । श्रुतजलनिधिपारीणा ऋूयास श्रेयसे सन्तु ॥ ३ ॥ तत प्रासतपाचार्येत्यभिख्या भिक्षुनायका । समभूवन् कुले चान्द्रे श्रीजगच्चन्द्रसूरय ॥ ४ ॥ जगज्जनितबोधाना तेषा शुद्धचरित्रिणाम् । विनेया समजायन्त श्रीमद्देवेन्द्रसूरय ॥ ५ ॥ स्वान्ययोरुपकाराय श्रीमद्देवेन्द्रसूरिणा । टीका कर्मविपाकस्य सुबोधेय विनिर्ममे ॥ ६ ॥ विबुधवरधर्मकीर्तिश्रीविद्यानन्दसूरिमुख्यबुधै' । स्वपरसमयैककुशलैस्तदैव सशोधिता चेयम् ॥ ७ ॥ यद्गदितम-ल्पमतिना सिद्धान्तविरुद्धमिह किमपि शास्त्रे । विद्वद्भिस्तत्त्वज्ञै' प्रसादमाधाय तच्छोध्यम् ॥ ८ ॥ कर्मविपाके विवृति वितन्वता यन्मयार्जित सुकृतम् । कर्मविपाकविमुक्त समस्तु सर्वोऽपि तेन जनः ॥ ९ ॥

॥ इति श्रीदेवेन्द्रसूरिविरचिता स्वोपज्ञकर्मविपाकटीका समाप्ता ॥

# अथ कर्मस्तवनामा द्वितीयःकर्मग्रन्थः

बन्धोदयोदीरणसत्पदस्थ नि शेषकर्मारिवलं निहत्य । य सिद्धिसाम्राज्यमलचकार श्रिये स व श्रीजिनवीरनाथ ॥ १ ॥
नत्वा गुरुपदकमल गुरूपदेशाद्यथाश्रुतं किंचित् । कर्मस्तवस्य विवृति विदधे स्वपरोपकाराय ॥ २ ॥

तत्रादावेव मगलार्थमत्रीष्टदेवतास्तुतिमाह–

**तह थुणिमो वीरजिणं जह गुणठाणेसु सयलकंमाइ । बधुदउदीरणयासत्तापत्ताणि खवियाणि ॥ १ ॥**

टीका–तथा तेन प्रकारेण स्तुमोऽसाधारणसद्भूतसकलकर्मनिर्मूलक्षपणलक्षणगुणोत्कीर्तनेन स्तवनगोचरीकुर्म । कं वीर-जिन, तत्र विशेषेणापुनर्भावेन ईर्ते "ईरिक् गतिकंपनयो"रिति वचनात् याति शिव, कंपयत्यास्फोटयत्यपनयति कर्म वेति वीर. । यदि वा "सूर वीर विक्रान्तौ" वीरयति स्म कषायोपसर्गपरीषहादिशत्रुगणमभिभवति स्म वीरः, अत्रयत्र 'लिहा-दित्वादच्' । यद्वा ईरणमीर', " भावेकर्त्रोरिति घञ्, " ततश्च विशिष्ट ईरो गमनं " सर्वे गत्यर्था ज्ञानार्थाः " इति वचनाज्ज्ञानं यस्य स वीर । इत्यनेन व्युत्पत्तित्रयेण भगवतश्चरमजिनेश्वरस्य स्वार्थसपदमाह । अथवा विशिष्टा सकलभु-वनाद्भुता यका स्वर्गापवर्गादिका ईर्लक्ष्मीस्ता राति भव्येभ्य' प्रयच्छति ' राक् दाने ' इति वचनाद्वीर " आतो को ह्वावा-

मः " इति डप्रत्ययः । राति च भगवान् सुरासुरनरोरगतिर्यक्साधारणया वाण्या निःश्रेयसाभ्युदयसाधनोपायोपदेशेन भव्यानां भुवनाद्भुतां श्रियम् । तथा चोक्तम्—"[1]अरहंतो भगवंतो अहियं च हियं च नवि इहं किंचि । वारंति य कारवंति य घेत्तूण जणं बला हत्थे ॥ १ ॥ उवएसं पुण दिंति जेण चरिएण कित्तिनिलयाणं । देवाणवि हुंति पहू किमंग पुण मणुयमित्ताणं ॥ २ ॥ इति " इत्यनया व्युत्पत्त्या प्रसिद्धसिद्धार्थपार्थिवविपुलकुलविमलनभस्तलनिशीथिनीनाथस्य जिननाथस्य परार्थसंपदमाह । वीरश्चासौ जिनश्च कषायादिप्रत्यर्थिसार्थजयाद्वीरजिनस्तं वीरजिनम् । यथा येन प्रकारेण "[2]अभिनवकम्मग्गहणं बंधो ओहेण तत्थ वीससयं । तित्थयराहारगदुगवज्जं मिच्छंमि सत्तरसयं ॥ १ ॥ " इत्यादिवक्ष्यमाणेषु गुणस्थानेषु परमपदप्रासादशिखरारोहणसोपानकल्पेषु व्याख्यास्यमानस्वरूपेषु मिथ्यादृष्ट्यादिषु सकलानि समस्तानि मतिज्ञानावरणप्रभृत्युत्तरप्रकृतिकदम्बकसहितानि कर्माणि ज्ञानावरणीयादिमूलप्रकृतिरूपाण्यष्टौ । कर्माणि च स्वोपज्ञकर्मविपाके विस्तरेण व्याख्यातानि । कथंभूतानि " बंधुदयोदीरणयासत्तापत्ताणि " । तत्र मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मनः क्षीरनीरवद्वह्न्ययःपिण्डवद्वाऽन्योऽन्यानुगमाभेदात्मकः संबन्धो बन्धः । तेषां च यथास्वस्थितिबद्धानां कर्मपुद्गलानामपवर्तनादिकरणविशेषकृते स्वाभाविके वा

---

१ अर्हन्तो भगवन्तोऽहितं च हितं च नापि इह किंचित् । वारयन्ति च कारयन्ति च गृहीत्वा जनं बलाद्धस्ते ॥ १ ॥ उपदेशं पुनर्ददति येन चरितेन कीर्तिनिलयानाम् । देवानामपि भवन्ति प्रभवः किमंग पुनर्मनुष्यमात्राणाम् ॥ २ ॥ २ इयं तृतीया गाथा मूल एव स्फुटीभविष्यति ॥

स्थित्यपचये सत्युदयसमयप्राप्तानां विपाकवेदनमुदयः । तेषामेव कर्मपुद्गलानामकालप्राप्तानां जीवसामर्थ्यविशेषादुदयावलिकायां प्रवेशनमुदीरणा । तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमणकृतस्वरूपप्रच्युत्यभावे सद्भावः सत्ता । बन्धश्चोदयश्चोदीरणा च सत्ता च बन्धोदयोदीरणासत्तास्ताः प्राप्तानि गतानि । सूत्रे चोदीरणयेत्यत्र कप्रत्ययः स्वार्थिकः । क्षपितानि निर्मूलोच्छेदेनाभावत्वमापादितानीति ॥ १ ॥

गुणस्थानेषु कर्माणि क्षपितानीत्युक्तम्, ततो गुणस्थानान्येव तावत् स्वरूपतो निर्दिशति–

**मिच्छे सासण मीसे अविरय देसे पमत्त अपमत्ते। नियट्टि अनियट्टि सुहुमुवसम खीण सजोगिअजोगिगुणा**

टीका–'गुणत्ति' गुणस्थानानि । ततः सूचनात् सूत्रमिति न्यायात्, पदैकदेशेऽपि पदसमुदायोपचाराद्वा, इहैव गुणस्थानकनिर्देशो द्रष्टव्यः । तद्यथा–मिथ्यादृष्टिगुणस्थानं, सास्वादनसम्यग्दृष्टिगुणस्थानं, सम्यग्मिथ्यादृष्टिगुणस्थानं, अविरतसम्यग्दृष्टिगुणस्थानं, देशविरतिगुणस्थानं, प्रमत्तसंयतगुणस्थानं, अप्रमत्तसंयतगुणस्थानं, अपूर्वकरणगुणस्थानं, अनिवृत्तिबादरसंपरायगुणस्थानं, सूक्ष्मसंपरायगुणस्थानं, उपशान्तकषायवीतरागछद्मस्थगुणस्थानं, क्षीणकषायवीतरागछद्मस्थगुणस्थानं, सयोगिकेवलिगुणस्थानं, अयोगिकेवलिगुणस्थानमिति । तत्र गुणाः-ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषाः, स्थानं पुनरत्र तेषां शुद्ध्यविशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः । तिष्ठन्त्यस्मिन् गुणा इति कृत्वा । गुणानां स्थानं गुणस्थानम् । मिथ्या विपर्यस्ता दृष्टिरर्हत्प्रणीतजीवाजीवादिवस्तुप्रतिपत्तिर्यस्य भक्षितहृत्पूरपुरुषस्य सिते पीतप्रतिपत्तिवत् स मिथ्यादृष्टिस्तस्य गुणस्थानं ज्ञानादिगुणानामविशुद्धिप्रकर्षविशुद्ध्यपकर्षकृतः स्वरूपविशेषो मिथ्यादृष्टिगुणस्थानम् । ननु

यदि मिथ्यादृष्टिस्ततः कथं तस्य गुणस्थानसंभवः ? गुणा हि ज्ञानादिरूपास्तत् कथं ते दृष्टौ विपर्यस्तायां भवेयुरिति ? उच्यते—इह यद्यपि सर्वथाऽतिप्रबलमिथ्यात्वमोहनीयोदयादर्हत्प्रणीतजीवाजीवादिवस्तुप्रतिपत्तिरूपा दृष्टिरसुमतो विपर्यस्ता भवति, तथापि काचिन्मनुष्यपश्वादिप्रतिपत्तिरविपर्यस्ता, ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्तिरविपर्यस्ता भवति, अन्यथाऽजीवत्वप्रसंगात् । यदागमः—"[1]सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडिओ चिट्ठइ, जइ पुण सो वि आवरिज्जिज्जा, तो णं जीवो अजीवत्तणं पाविज्जत्ति ।" तथाहि, समुन्नतातिबहलजीमूतपटलेन दिनकररजनिकरकरनिकरतिरस्कारेऽपि नैकान्तेन तत्प्रभानाशः संपद्यते, प्रतिप्राणि प्रसिद्धदिनरजनिविभागाभावप्रसंगात् । उक्तं च—"[2]सुट्ठु वि मेहसमुदए होइ पहा चंदसूराणमिति" एवमिहापि प्रबलमिथ्यात्वोदयेपि काचिदविपर्यस्तापि दृष्टिर्भवतीति तदपेक्षया मिथ्यादृष्टेरपि गुणस्थानसंभवः । यद्येवं ततः कथमसौ मिथ्यादृष्टिरेव मनुष्यपश्वादिप्रतिपत्त्यपेक्षयान्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्त्यपेक्षया वा सम्यग्दृष्टित्वादपि, नैष दोषः, यतो भगवदर्हत्प्रणीतं सकलमपि द्वादशांगार्थमभिरोचयमानोऽपि यदि तद्भदितमेकमप्यक्षरं न रोचयति तदानीमप्येष मिथ्यादृष्टिरेवोच्यते, तस्य भगवति सर्वज्ञे प्रत्ययनाशात् । तदुक्तम्—"[3]पयमक्खरं पि इक्कं पि जो न रोएइ सुत्तनिद्दिट्ठं । सेसं रोयंतो

१ सर्वजीवानामपि च अक्षरस्यानन्तभागो नित्योद्घाटितस्तिष्ठति, यदि पुनः सोऽपि आव्रियेत,ततो जीवोऽजीवत्वं प्राप्नुयात् । २ सुष्ठ्वपि मेघसमुदाये भवति प्रभा चन्द्रसूर्ययोरिति । ३ पदमक्षरमप्येकमपि यो न रोचयति सूत्रनिर्दिष्टम् । शेषं रोचयमानोऽपि हि मिथ्यादृष्टिर्जमालिरिव ॥ १ ॥

वि हु मिच्छदिट्ठी जमालि व ॥ १ ॥ इति " किं पुनर्भगवदर्हदभिहितसकलजीवाजीवादिवस्तुतत्त्वप्रतिपत्तिविकल इति । आयमौपशमिकसम्यक्त्वलाभलक्षणं सादयत्यपनयतीत्यायसादनं, अनन्तानुबन्धिकषायवेदनम् । अत्र " पृषोदरादित्वाद्यशब्दलोप " " कृद्बहुलमिति कर्तर्यनट् " । सति ह्यस्मिन् परमानन्दरूपानन्तसुखफलदो निःश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेणोत्कर्षतः षड्भिरावलिकाभिरपगच्छतीति । ततः सहासादनेन वर्तत इति सासादनः । सम्यगविपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः । सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिस्तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानम् । सास्वादनसम्यग्दृष्टिगुणस्थानमिति वा पाठ, तत्र सह सम्यक्त्वलक्षणरसास्वादनेन वर्तत इति सास्वादनः । यथा हि भुक्तक्षीरान्नविषयव्यलीकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वादयति, तथैषोऽपि मिथ्यात्वाभिमुखतया सम्यक्त्वस्योपरि व्यलीकचित्तः सम्यक्त्वमुद्वमंस्तद्रसमास्वादयति । ततः स चासौ सम्यग्दृष्टिश्च तस्य गुणस्थानं सास्वादनसम्यग्दृष्टिगुणस्थानम् । एतच्चैवं भवति-इह गम्भीरापारसंसारसागरमध्यमध्यासीनो जन्तुर्मिथ्यात्वप्रत्ययमनन्तान् पुद्गलपरावर्ताननन्तदुःखलक्षाण्यनुभूय कथमपि तथाभव्यत्वपरिपाकवशतो गिरिसरिदुपलघोलनाकल्पेनानाभोगनिर्वर्तितयथाप्रवृत्तकरणेन ' करणं परिणामोऽत्रेति' वचनादध्यवसायविशेषरूपेणायुर्वर्जानि ज्ञानावरणीयादिकर्माणि सर्वाण्यपि पल्योपमासंख्येयभागन्यूनैकसागरोपमकोटाकोटीस्थितिकानि करोति । अत्र चान्तरे जीवस्य कर्मजनितो घनरागद्वेषपरिणामः कर्कशनिबिडचिररूढगुपिलवक्रग्रन्थिवद्दुर्भेदोऽभिन्नपूर्वो ग्रन्थिर्भवति ।

तदुक्तम्—"तीएँ वि थोवमित्ते खविए इत्थंतरंमि जीवस्स । हवइ हु अभिन्नपुव्वो गंठी एवं जिणा विंति ॥ १ ॥ गंठित्ति सुदुब्भेउ कक्खडघणरूढगुढगंठि व्व । जीवस्स कम्मजणिउ घणरागद्दोसपरिणामो ॥ २ ॥ इति "। इमं ग्रन्थिं यावदभव्या अपि यथाप्रवृत्तिकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति । उक्तं चावश्यकटीकायाम्—" अभव्यस्यापि कस्यचिद्यथाप्रवृत्तिकरणतो ग्रन्थिमासाद्यार्हदादिविभूतिदर्शनतः प्रयोजनान्तरतो वा प्रवर्तमानस्य श्रुतसामायिकलाभो भवति न शेषलाभ इति "। एतदनन्तरं कश्चिदेव महात्मासन्नपरमनिर्वृतिसुखः समुल्लसितप्रचुरदुर्निवारवीर्यप्रसरो निशितकुठारधारयेव परमविशुद्ध्या यथोक्तस्वरूपस्य ग्रन्थेर्भेदं विधाय मिथ्यात्वस्थितेरन्तर्मुहूर्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणलक्षणविशुद्धिजनितसामर्थ्यादन्तर्मुहूर्तकालप्रमाणं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति । अत्र यथाप्रवृत्तिकरणापूर्वकरणानिवृत्तिकरणानामयं क्रमः—" जा गंठी ता पढमं गंठिं समइच्छउ भवे बीयं । अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥१॥ " 'गंठिं समइच्छउ त्ति' ग्रन्थिं समतिक्रामतो भिन्दानस्येति ' सम्मत्तपुरक्खडे त्ति ' सम्यक्त्वं पुरस्कृतं येन तस्मिन्नासन्नसम्यक्त्वे जीवेऽनिवृत्तिकरणं भवतीत्यर्थः । एतस्मिंश्चान्तरकरणे कृते सति तस्य मिथ्यात्वकर्मणः स्थितिद्वयं भवति । अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्तप्रमाणा, तस्मादेवान्तरकरणादुपरि-

---

१ तस्मिन्नपि स्तोकमात्रे क्षपित अत्रान्तरे जीवस्य । भवति हि अभिन्नपूर्वो ग्रन्थिरेवं जिना वदन्ति ॥ १ ॥ ग्रन्थिरिति सुदुर्भेदः कर्कशघनरूढगूढग्रन्थिरिव । जीवस्य कर्मजनितो घनरागद्वेषपरिणामः ॥ २ ॥ २ यावत् ग्रन्थिः तावत् प्रथमं ग्रन्थिं समतिक्रामतो भवेद्द्वितीयम् । अनिवृत्तिकरणं पुनः सम्यक्त्वपुरस्कृते जीवे ॥ १ ॥

तनी शेषा द्वितीया । स्थापना । तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्तेन पुनस्तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकसम्यक्त्वमाप्नोति, मिथ्यात्वदलिकवेदनाभावात् । यथा हि वनदावानल पूर्वदग्धेन्धनमूषर वा देशमप्राप्य विध्यायति, तथा मिथ्यात्ववेदनवनदवोऽप्यन्तरकरणमवाप्य विध्यायति । तथा च सति तस्यौपशमिकसम्यक्त्वलाभ । उक्त च–"ऊसरदेस दड्ढिल्लय च विज्झाइ वणदवो पप्प । इय मिच्छस्स अणुदए उवसमसम्म लहइ जीवो ॥ १ ॥" तस्या चान्तर्मौहूर्तिक्यामुपशान्ताद्धाया परमनिधिलाभकल्पाया जघन्यत. समयशेषायामुत्कृष्टत षडावलिकाशेषाया सत्या कस्यचिन्महाविभीषिकोत्थानकल्पोऽनन्तानुबन्ध्युदयो भवति, तदुदये चासौ सास्वादनसम्यग्दृष्टिगुणस्थाने वर्तते, उपशमश्रेणिप्रतिपतितो वा कश्चित् सासादनत्वं याति, तदुत्तरकाल चावश्यं मिथ्यात्वोदयादसौ मिथ्यादृष्टिर्भवतीति । तथा सम्यक् च मिथ्या च दृष्टिर्यस्यासौ सम्यग्मिथ्यादृष्टिस्तस्य गुणस्थान सम्यग्मिथ्यादृष्टिगुणस्थानम् । इहानन्तराभिहितविधिना लब्धेनौपशमिकसम्यक्त्वेनौषधविशेषकल्पेन मदनकोद्रवस्थानीय मिथ्यात्वमोहनीय कर्म शोधयित्वा त्रिधा करोति । तद्यथा–शुद्धमर्धविशुद्धमविशुद्ध चेति । स्थापना । तत्र त्रयाणा पुञ्जाना मध्ये यदार्धविशुद्धपुंज उदेति तदा तदुदयाज्जीवस्यार्धविशुद्ध जिनप्रणीततत्त्वश्रद्धान भवति, तेन तदासौ सम्यग्मिथ्यादृष्टिगुणस्थानमन्तर्मुहूर्त काल स्पृशति, तत ऊर्ध्वमवश्य सम्यक्त्वं मिथ्यात्व वा गच्छतीति । तथा विरतिर्विरत 'क्लीबे क्तप्रत्यय' तत्पुन सावद्ययोगप्रत्याख्यान तन्न जानाति नाभ्युपगच्छति न तत्पालनाय यतत इति त्रयाणा पदानामष्टौ भगा । स्थापना । तत्र

१ उपरदेश दग्ध च विध्यायति वनदावानल प्राप्य । इति मिथ्यात्वस्यानुदये उपशमसम्यक्त्व लभते जीव ।

प्रथमेषु चतुर्भंगेषु मिथ्यादृष्टिरज्ञानित्वात्, शेषेषु सम्यग्दृष्टिर्ज्ञानित्वात्, सप्तसु भंगेषु नास्य विरतमस्तीत्यविरतो 'अभ्रादिभ्य इति अप्रत्ययः' चरमभंगे तु विरतिरस्तीति । यद्वा विरमति स्म सावद्ययोगेभ्यो निवर्तते स्मेति विरतः "गत्यर्थाकर्मकपिवभुजेः" इति कर्तरि क्तप्रत्यये विरतः, न विरतोऽविरतः स चासौ सम्यग्दृष्टिश्चाविरतसम्यग्दृष्टिः । इदमुक्तं भवति–यः पूर्ववर्णितौपशमिकसम्यग्दृष्टिः शुद्धदर्शनमोहपुंजोदयवर्ती वा क्षायोपशमिकसम्यग्दृष्टिर्वा क्षीणदर्शनसप्तको वा क्षायिकसम्यग्दृष्टिर्वा परममुनिप्रणीतां सावद्ययोगविरतिं सिद्धिसौधाध्यारोहणनिःश्रेणिकल्पां जानन्नप्रत्याख्यानकषायोदयविघ्नितत्वान्नाभ्युपगच्छति, न च तत्पालनाय यतत इत्यसावविरतसम्यग्दृष्टिरुच्यते, तस्य गुणस्थानमविरतसम्यग्दृष्टिगुणस्थानम् । उक्तं च–"[1]वंधं अविरइहेउं जाणंतो रागदोसदुक्खं च । विरइसुहं इच्छंतो विरइं काउं च असमत्थो ॥ १ ॥ एस असंजयसंमो निंदंतो पावकंमकरणं च । अहिगयजीवाजीवो अचलियदिट्ठी [2]चलियमोहो ॥ २ ॥" । तथा सर्वसावद्ययोगस्य देशे एकव्रतविषये स्थूलसावद्ययोगादौ सर्वव्रतविषयानुमतिवर्जसावद्ययोगान्ते विरतं विरतिर्यस्यासौ देशविरतः । सर्वसावद्यविरतिः पुनरस्य नास्ति, प्रत्याख्यानावरणकषायोदयात् सर्वविरतिरूपं प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणाः । उक्तं च–"[1]सम्मदंसणसहिओ गिण्हंतो विरइमप्पसत्तीए । एगव्वयाइचरिमो अणुमइमित्तत्ति देसजई

---

१ बन्धमविरतिहेतुं जानानो रागद्वेषदुःखं च । विरतिसुखमिच्छन् विरतिं कर्तुं चासमर्थः ॥ १ ॥ एषोऽसंयतसम्यग्दृष्टिः निन्दन् पापकर्मकरणं च । अधिगतजीवाजीवोऽचलितदृष्टिश्चलितमोहः ॥ २ ॥ छलियमोहो । २ सम्यग्दर्शनसहितः गृह्णन् विरतिमात्मशक्त्या । एकव्रतादि चरिमः अनुमतिमात्रं इति देशयतिः ॥ १ ॥

॥ १ ॥ " देशविरतस्य गुणस्थान देशविरतगुणस्थानम् । तथा सयच्छति स्म सम्यगुपरमति स्म सयत " गत्यर्थाकर्मेति क्त " प्रमाद्यति स्म सयमयोगेषु सीदति स्म ' प्राग्वत्कर्तरि क्त ' प्रमत्त । यद्वा प्रमदन प्रमाद स च मदिराविषयकषायनिद्राविकथानामन्यतम सर्वे वा । प्रमत्तमस्यास्तीति प्रमत्त प्रमादवान् ' अभ्रादिभ्य इत्यप्रत्यय ' प्रमत्तश्चासौ संयतश्च प्रमत्तसयतस्तस्य गुणस्थान प्रमत्तसयतगुणस्थान, विशुद्ध्यविशुद्धिप्रकर्षापकर्षकृत स्वरूपभेद । तथाहि–देशविरतिगुणापेक्षया एतद्गुणाना विशुद्धिप्रकर्षोऽविशुद्ध्यपकर्षश्च, अप्रमत्तसंयतापेक्षया तु विपर्यय । एवमन्येष्वपि गुणस्थानेषु पूर्वोत्तरापेक्षया विशुद्ध्यविशुद्धिप्रकर्षापकर्षयोजना द्रष्टव्या । न प्रमत्तोऽप्रमत्त । यद्वा नास्ति प्रमत्तमस्यासावप्रमत्त , स चासौ सयतश्च, तस्य गुणस्थानमप्रमत्तसंयतगुणस्थानम् । अपूर्वमभिनव प्रथममित्यर्थ । करण स्थितिघातरसघातगुणश्रेणिगुणसक्रमस्थितिबन्धाना पचानामर्थाना निर्वर्तन यस्यासावपूर्वकरण । तथाहि–बृहत्प्रमाणाया ज्ञानावरणीयादिकर्मस्थितेरपवर्तनाकरणेन खंडनमल्पीकरण स्थितिघात उच्यते । रसस्यापि प्रचुरीभूतस्य सतोऽपवर्तनाकरणेन खंडनमल्पीकरण रसघात उच्यते । एतौ द्वावपि पूर्वगुणस्थानेषु विशुद्धेरल्पत्वादल्पावेव कृतवान् । अत्र पुनर्विशुद्धे प्रकृष्टत्वाद्बृहत्प्रमाणतयाऽपूर्वाविमौ करोति । तथोपरितनस्थितेर्विशुद्धिवशादपवर्तनाकरणेनावतारितस्य दलिकस्यान्तर्मुहूर्तप्रमाणमुदयक्षणादुपरि क्षिप्रतरक्षपणाय प्रतिक्षणमसख्येयगुणवृद्ध्या विरचन गुणश्रेणि । स्थापना । एता च पूर्वगुणस्थानेष्वविशुद्धत्वात् कालतो द्राघीयसीं दलिकरचनामाश्रित्याप्रथीयसीमल्पदलिकस्यापवर्तनाद्विरचितवान् । इह तु तामेव विशुद्धत्वादपूर्वां कालतो ह्रस्वतरा, दलिकरचनामाश्रित्य पुन पृथुतरा बहुतरदलिकस्यापवर्तनाद्विरचयतीति । तथा वध्यमानशुभ-

प्रकृतिष्वबध्यमानाशुभप्रकृतिदलिकस्य प्रतिक्षणमसंख्येयगुणवृद्ध्या विशुद्धिवशान्नयनं गुणसंक्रमः । तमप्यसाविहापूर्वं करोति । तथा स्थितिं कर्मणामशुद्धत्वात्प्राग्द्राघीयसीं बद्धवान्, इह तु तामपूर्वां विशुद्धत्वादेव ह्रसीयसीं बध्नातीति ( स्थितिबंधः ) । अयं चापूर्वकरणो द्विधा क्षपक उपशमकश्च । क्षपणोपशमनार्हत्वाच्चैवमुच्यते, राज्यार्हकुमारराजवत् । न पुनरसौ क्षपयत्युपशमयति वा तस्य गुणस्थानमपूर्वकरणगुणस्थानम् । एतच्च गुणस्थानं प्रपन्नानां कालत्रयवर्तिनो नानाजीवानपेक्ष्य सामान्यतोऽसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति । कथं पुनस्तानि भवन्तीति विनेयजनानुग्रहार्थं विशेषतोऽपि प्ररूप्यन्ते—इह तावदिदं गुणस्थानकमन्तर्मुहूर्तकालप्रमाणं भवति । तत्र च प्रथमसमयेऽपि ये प्रपन्नाः प्रपद्यन्ते प्रपत्स्यंते च तदपेक्ष्या जघन्यादीन्युत्कृष्टान्तान्यसंख्येयलोकाकाशप्रदेशप्रमाणाध्यवसायस्थानानि लभ्यन्ते प्रतिपत्तॄणां बहुत्वादध्यवसायानां च विचित्रत्वादिति भावनीयम् । ननु यदि कालत्रयापेक्षा क्रियते तदैतद्गुण-स्थानकं प्रतिपन्नानामनन्तान्यध्यवसायस्थानानि कस्मान्न भवन्ति ? अनन्तजीवैरस्य प्रतिपन्नत्वादनन्तैरेव च प्रतिपत्स्य-मानत्वादिति । सत्यम्, स्यादेवं यदि तत्प्रतिपत्तॄणां सर्वेषां पृथक् पृथग्भिन्नान्येवाध्यवसायस्थानानि स्युः, तच्च नास्ति, बहूनामेकाध्यवसायस्थानवर्तित्वादपीति । ततो द्वितीयसमये तदन्यान्यधिकतराण्यध्यवसायस्थानानि लभ्यन्ते, तृतीयसमये तदन्यान्यधिकतराणि, चतुर्थसमये तदन्यान्यधिकतराणीत्येवं तावन्नेयं यावच्चरमसमयः । एतानि च स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमभिव्याप्नुवन्ति । तद्यथा—अत्र प्रथमसमयजघन्याध्यवसायस्थानात् प्रथमसमयोत्कृष्टमध्यवसायस्थान-मनन्तगुणविशुद्धम्, तस्माच्च द्वितीयसमयजघन्यमनन्तगुणविशुद्धम्, ततोऽपि द्वितीयसमयजघन्यात्तदुत्कृष्टमनन्तगुण-

विशुद्धम्, तस्माच्च तृतीयसमयजघन्यमनन्तगुणविशुद्धम्, ततोऽपि तदुत्कृष्टमनन्तगुणविशुद्धमित्येव तावन्नेय यावद्विचरमसमयोत्कृष्टाच्चरमसमयजघन्यमनन्तगुणविशुद्धम्, ततोऽपि तदुत्कृष्टमनन्तगुणविशुद्धमिति । एकसमयगतानि चामून्यध्यवसायस्थानानि परस्परमनन्तभागवृद्ध्यसंख्यातभागवृद्धिसंख्यातभागवृद्धिसंख्येयगुणवृद्ध्यसंख्येयगुणवृद्ध्यनन्तगुणवृद्धिरूपषट्स्थानकपतितानि । युगपदेतद्गुणस्थानप्रविष्टाना च परस्परमध्यवसायस्थानव्यावृत्तिलक्षणा निवृत्तिरप्यस्तीति निवृत्तिगुणस्थानकमप्येतदुच्यते, अत एवोक्त सूत्रे " नियट्टिअनियट्टीत्यादि " । तथा युगपदेतद्गुणस्थानक प्रतिपन्नाना बहूनामपि जीवानामन्योऽन्यमध्यवसायस्थानस्य व्यावृत्तिर्निवृत्तिर्नास्त्यस्येति अनिवृत्ति । समकालमेतद्गुणस्थानकमारूढस्यापरस्य यदध्यवसायस्थान विवक्षितोऽन्योऽपि कश्चित्तद्वर्त्येवेत्यर्थ । सपरैति पर्यटति ससारमनेनेति सपराय: कषायोदय । बादर सूक्ष्मकिट्टीकृतसपरायापेक्षया स्थूर सपरायो यस्य स बादरसपराय, अनिवृत्तिश्चासौ बादरसपरायश्च, तस्य गुणस्थानमनिवृत्तिबादरसपरायगुणस्थानम् । इदमप्यन्तर्मुहूर्तप्रमाणमेव । तत्र चान्तर्मुहूर्ते यावन्त समयास्तत्प्रविष्टाना तावन्त्येवाध्यवसायस्थानानि भवन्ति, एकसमयप्रविष्टानामेकस्यैवाध्यवसायस्थानस्यानुवर्तनादिति । स्थापना । प्रथमसमयादारभ्य प्रतिसमयमनन्तगुणविशुद्ध यथोत्तरमध्यवसायस्थान भवतीति वेदितव्यम् । स चानिवृत्तिबादरो द्विधा, क्षपक उपशमकश्च । तथा सूक्ष्म सपराय किट्टीकृतलोभकषायोदयरूपो यस्य सोऽय सूक्ष्मसपराय । सोऽपि द्विधा क्षपक उपशमको वा । क्षपयत्युपशमयति वा लोभमेकमिति कृत्वा, तस्य गुणस्थान सूक्ष्मसपरायगुणस्थानम् । तथा छाद्यते केवलज्ञान केवलदर्शन चात्मनोऽनेनेति छद्म ज्ञानावरणदर्शनावरणमोहनीयान्तरायकर्मो-

दयः । सति तस्मिन् केवलस्यानुत्पादात्, तदपगमानन्तरं चोत्पादात् । छद्मनि तिष्ठतीति छद्मस्थः, स च सरागोऽपि भवतीत्यतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम् । वीतो विगतो रागो मायालोभकषायोदयरूपो यस्य स वीतरागः, स चासौ छद्मस्थश्च वीतरागछद्मस्थः । स च क्षीणकषायोऽपि भवति, तस्यापि यथोक्तरागापगमादतस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणम् । "कषशिषे"त्यादिदंडकधातुर्हिंसार्थः, कषन्ति कष्यन्ते च परस्परमस्मिन् प्राणिन इति कषः संसारः । कषमयन्ते गच्छन्त्येभिर्जन्तव इति कषायाः क्रोधादयः । उपशान्ता उपशमिता विद्यमाना एव संक्रमणोद्वर्तनादिकरणोदयायोग्यत्वेन व्यवस्थापिताः कषाया येन स उपशान्तकषायः । स चासौ वीतरागछद्मस्थश्चेत्युपशान्तकषायवीतरागछद्मस्थः, तस्य गुणस्थानमिति प्राग्वत् । तत्राविरतसम्यग्दृष्टेः प्रभृत्यनन्तानुबन्धिनः कषाया उपशान्ताः संभवन्ति । उपशमश्रेण्यारंभे ह्यनन्तानुबन्धिकषायानविरतो देशविरतः प्रमत्तोऽप्रमत्तो वा सन्नुपशमय्य दर्शनमोहत्रितयमुपशमयति । तदुपशमानन्तरं प्रमत्ताप्रमत्तगुणस्थानपरिवृत्तिशतानि कृत्वा ततोऽपूर्वकरणगुणस्थानोत्तरकालमनिवृत्तिबादरसंपरायगुणस्थाने चारित्रमोहनीयस्य प्रथमं नपुंसकवेदमुपशमयति, ततः स्त्रीवेदं, ततो हास्यरत्यरतिशोकभयजुगुप्सारूपं युगपत् षट्कम्, ततः पुरुषवेदं, ततो युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणौ क्रोधौ, ततः संज्वलनक्रोधं, ततो युगपद्द्वितीयतृतीयौ मानौ, ततः संज्वलनमानं, ततो युगपद्द्वितीयतृतीये माये, ततः संज्वलनमायां, ततो युगपद्द्वितीयतृतीयौ लोभौ, ततः सूक्ष्मसंपरायगुणस्थाने संज्वलनलोभमुपशमयति इत्युपशमश्रेणिः । स्थापना चेयम् । विस्तरतस्तूपशमश्रेणिः स्वोपज्ञशतकटीकायां व्याख्याता ततः परिभावनीया । तदेवमन्येष्वपि गुणस्थानकेषु क्वापि कियतामपि कषायाणामुपशान्तत्वसंभवादुपशान्तकषा-

यव्यपदेश सम्भवत्यतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम् । उपशान्तकषायवीतराग इत्येतावतापीष्टसिद्धौ छद्मस्थग्रहणं स्वरूप-कथनार्थं, व्यवच्छेद्याभावात् । न ह्यछद्मस्थ उपशान्तकषायवीतराग सम्भवति, यस्य छद्मस्थग्रहणेन व्यवच्छेद स्यादिति । अस्मिंश्च गुणस्थानेऽष्टाविंशतिरपि मोहनीयप्रकृतय उपशान्ता ज्ञातव्या । उपशान्तकषायश्च जघन्येनैक समय भवति, उत्कर्षेण त्वन्तर्मुहूर्तं कालं यावत् । तत ऊर्ध्वं नियमादसौ प्रतिपतति । प्रतिपातश्च द्वेधा भवक्षयेणाद्धाक्षयेण वा । तत्र भवक्षयो म्रियमाणस्य, अद्धाक्षय उपशान्ताद्धाया समाप्ताया, अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति । यत्र यत्र बन्धोदयोदीरणा व्यवच्छिन्नास्तत्र तत्र प्रतिपतता सता ते आरभ्यन्त इति यावत् । प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तगुणस्थानम् । कश्चित्तु ततोऽप्यधस्तन गुणस्थानकद्विक याति, कोऽपि सासादनभावमपि । य पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्तयतीति विशेष । उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावु-पशमश्रेणिं प्रतिपद्यते । यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभाव[1] । य. पुनरेक वार प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपीति । उक्त च सप्ततिकाचूर्णौ—"जो दुवे वारे उवसमसेढिं पडिवज्जइ तस्स नियमा तम्मि भवे खवगसेढी नत्थि, जो इक्कसिं उवसमसेढी पडिवज्जइ तस्स खवगसेढी वि हुज्जत्ति" । एष कार्मग्रन्थिकाभिप्राय । आगमाभिप्रायेण त्वेकस्मिन् भव एकामेव श्रेणिं प्रतिपद्यते यदुक्त कल्पभाष्ये—"एव अप्परिवडिए सम्मत्ते देवमणुयज-

१ यो द्वौ वारौ उपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेणिर्नास्ति, य एकवारं उपशमश्रेणिं प्रतिपद्यते तस्य क्षपकश्रेणिरपि भवतीति ॥

मेसु अन्नयरसेढिवज्जं एगन्नवेणं च सबाइं" सर्वाणि देशविरत्यादीनि । अन्यत्राप्युक्तम्–"मोहोपशम एकस्मिन् न्नवे द्विः स्यादसंततम् । यस्मिन् न्नवे तूपशमः क्षयो मोहस्य तत्र न ॥ १ ॥ इति" । तथा क्षीणा अन्नावमापन्नाः कषाया यस्य स क्षीणकषायः । तत्रानन्तानुबन्धिकषायान् प्रथममविरतसम्यग्दृष्ट्याद्यप्रमत्तान्तेषु गुणस्थानेषु क्षपयितुमारन्नते, ततो मिथ्यात्वं मिश्रं सम्यक्त्वं, ततोऽप्रत्याख्यानावरणान् प्रत्याख्यानावरणान् कषायानष्टौ क्षपयितुमारन्नते, तेषु चार्धक्षपितेष्वेवातिविशुद्धिवशादन्तराल एव स्त्यानर्द्धित्रिकं नरकद्विकं तिर्यग्द्विकं एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातयः आतपमुद्योतं स्थावरं सूक्ष्मं साधारणमिति प्रकृतिषोमशकं क्षपयति । तस्मिंश्च क्षीणे कषायाष्टकस्य क्षपितशेषं क्षपयति । ततो नपुंसकवेदं स्त्रीवेदं हास्यादिषट्कं पुंवेदं संज्वलनं क्रोधं मानं मायां क्षपयति, एताश्च प्रकृतीरनिवृत्तिबादरसंपरायगुणस्थाने क्षपयति, संज्वलनलोन्नं सूक्ष्मसंपरायगुणस्थान इति क्षपकश्रेणिः । स्थापना चेयम् । विस्तरतस्तु क्षपकश्रेणिस्वरूपं स्वोपज्ञशतकटीकायां निरूपितं, तत एव परिन्नावनीयम् । तदेवमन्येष्वपि गुणस्थानेषु क्षीणकषायव्यपदेशः संन्नवति, क्वापि कियतामपि कषायाणां क्षीणत्वात्, अतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम् । क्षीणकषायवीतरागत्वं च केवलिनोऽप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणम् । छद्मस्थग्रहणे च कृते सरागव्यवच्छेदार्थं वीतरागग्रहणम् । वीतरागश्चासौ छद्मस्थश्च वीतरागछद्मस्थः । स उपशान्तकषायोऽप्यस्तीति तद्व्यवच्छेदार्थं क्षीणकषायग्रहणम् । क्षीणकषायश्चासौ वीतरागछद्मस्थश्च क्षीणकषायवीतरागछद्मस्थस्तस्य गुणस्थानं क्षीणकषायवीतरागछद्मस्थगुणस्थानमिति । तथा योगो वीर्यं शक्तिरुत्साहः पराक्रम इति पर्यायाः, स च मनोवाक्कायलक्षणकरणन्नेदात्त्रिस्नः संज्ञा लन्नते मनोयोगो वाग्योगः काययोगश्चेति । तथा चोक्तं कर्म-

प्रकृतौ–"परिणामालंबणगहणकारण तेण लब्धनामतिग । कज्जाप्रासानुभप्पवेसविसमीकयपएसं ॥ १ ॥" तत्र भगवतो मनोयोगो मन पर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा मनसा पृष्टस्य सतो मनसैव देशनात्, ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मन पर्यायज्ञानेनावधिज्ञानेन वा पश्यन्ति, दृष्ट्वा च ते विवक्षितवस्त्वाकारान्यथानुपपत्त्या लोकस्वरूपादिवाह्यमर्थमवगच्छन्तीति । वाग्योगो धर्मदेशनादौ । काययोगो निमेषोन्मेषचङ्क्रमणादौ । ततोऽनेन योगत्रयेण सह वर्तत इति सयोगी "सर्वादेरिन्" इतीन्प्रत्यय । केवल केवलज्ञान केवलदर्शन च विद्यते यस्य स केवली । सयोगी चासौ केवली च सयोगिकेवली तस्य गुणस्थान सयोगिकेवलिगुणस्थानम् । तथा न विद्यन्ते योगा पूर्वोक्ता यस्यासावयोगी । कथमयोगित्वमसावुपगच्छतीति चेदुच्यते–स भगवान् सयोगिकेवली जघन्यतोऽन्तर्मुहूर्तमुत्कृष्टतो देशोना पूर्वकोटीं विहृत्य कश्चित् कर्मणा समीकरणार्थं समुद्घातं करोति, यस्य वेदनीयादिकमायुष सकाशादधिकतर भवति । अन्यस्तु न करोति । यदाहु श्रीआर्यश्यामपादा –"सव्वे वि ण भते केवलीसमुग्घाय गच्छति, गोयमा, नोइणट्ठे समट्ठे जस्साउएण तुल्लाइ बधणेहि ठिईइ य भवोवग्गाहिकम्माइं न समुग्घाय स गच्छइ । अगतूण समुग्घायमणता केवलीजिणा । जरमरणविप्पमुक्का सिद्धि वरगइ गया ॥ १ ॥" अत्र 'बधणेहिं' बध्यन्त इति बन्धनानि "भुजिपत्यादिभ्य॰ कर्मोपादाने" इति कर्मण्यनट्, कर्मपरमाणवस्तै, शेष सुगमम् । गत्वा वागत्वा वा समुद्घातम् । समुद्घातस्वरूप च स्वोपज्ञषडशीतिकटीकाया विस्तरत प्ररूपित, तत एवावधारणीयम् । भवोपग्राहिकर्मक्षपणाय लेश्यातीतमत्यन्ताप्रकंपं परमनिर्जराकारण ध्यान प्रतिपित्सुर्योगनिरोधार्थमुपक्रमते । तत्र पूर्वं बादरकाययोगेन बादरमनोयोग निरुणद्धि, ततो वाग्योग, तत सूक्ष्मकाययोगेन बादरकाययोग, तेनैव सूक्ष्म-

नोयोगं सूक्ष्मवाग्योगं च, सूक्ष्मकाययोगं तु सूक्ष्मक्रियमनिवर्तिशुक्लध्यानं ध्यायन् स्वावष्टंभेनैव निरुणद्धि, अन्यस्यावष्टंभ-नीयस्य योगान्तरस्य तदासत्वात् तद्ध्यानसामर्थ्याच्च वदनोदरादिविवरपूरणेन संकुचितदेहत्रिभागवर्तिप्रदेशो भवति, तदनन्तरं समुच्छिन्नक्रियमप्रतिपाति शुक्लध्यानं ध्यायन्मध्यमप्रतिपत्त्या ह्रस्वपंचाक्षरोच्चिरणमात्रं कालं शैलेशीकरणं प्रविशति, तत्र शैलेशो मेरुस्तस्येयं स्थिरता साम्यावस्था शैलेशी, यद्वा सर्वसंवरः शीलं तस्य य ईशः शीलेशः तस्येयं योगनिरोधावस्था शैलेशी तस्यां करणं, पूर्वविरचितशैलेशीसमयसमानगुणश्रेणीकस्य वेदनीयनामगोत्राख्याघातिकर्मत्रितयस्यासंख्येयगुणया श्रेण्या, आयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्जरणं, शैलेशीकरणं, तच्चासौ प्रविष्टोऽयोगी स चासौ केवली चायोगिकेवली । अयं च शैलेशीकरणचरमसमयानन्तरमुच्छिन्नचतुर्विधकर्मबन्धनत्वादष्टमृत्तिकालेपलिप्ताधोनिमग्नक्रमापनीतमृत्तिकालेपजलतलमर्यादोर्ध्वगामितथाविधालाबुवदूर्ध्वं लोकान्ते गच्छति, न परतोऽपि, मत्स्यस्य जलकल्पगत्युपष्टंभिधर्मास्तिकायाभावात् । स चोर्ध्वं गच्छन्नृजुश्रेण्या यावत् स्वाकाशप्रदेशेष्विहावगाढस्तावत एव प्रदेशानूर्ध्वमप्यवगाहमानो विवक्षितसमयाच्च समयान्तरमसंस्पृशन् गच्छति । तदुक्तमावश्यकचूर्णौ—"जत्तिए[1] जीवो अवगाढो तावइयाए उगाहणाए उड्ढं उज्जुगं गच्छइ न वंकं, बीयं च समयं न फुसइ त्ति" । दुःषमान्धकारनिमग्नजिनप्रवचनप्रदीपप्रतिमाः श्रीजिनभद्रगणिपूज्या अप्याहुः—"पज्जत्तमित्तसंनिस्स जत्तियाइं जहन्नजोगिस्स । हुंतु मणोदव्वाइं तव्वावारो य जंमत्तो ॥ १ ॥ तदसंखगुणविहीणं समए समए निरुंभमाणो सो । मणसो सव्वनिरोहं कुणइ असंखिज्जसमएहिं ॥ २ ॥ पज्जत्तमित्तबिंदियजहन्नवइजो-

---

१ यावतो जीवोऽवगाढस्तावत्यावगाहनयोर्ध्वमृजुगं गच्छति न वक्रम्, द्वितीयं च समयं न स्पृशति इति.

गपज्जाया जे ज । तदसखगुणविहीणे समए समए निरुंभंतो ॥ ३ ॥ सववइजोगरोह सखाईएहि कुणइ समएहि । तत्तो य सुहुमपणयस्स पढमसमर्उववन्नस्स ॥ ४ ॥ जो किर जहन्नजोगो तदसखिज्जगुणहीणमिक्केक्के । समए निरुंभमाणो देहति- भाग च मुचतो ॥ ५ ॥ रुंभइ स कायजोग सखाईएहिं चेव समएहिं । तो कयजोगनिरोहो सेलेसीभावणामेइ ॥ ६ ॥ हस्सरकराडमझेण जेण कालेण पच भन्नति । अछइ सेलेसिगर्उ तत्तियमेत्त तर्उ काल ॥ ७ ॥ तणुरोहारभार्उ झायइ सुहु- मकिरियानियट्टि सो । वोच्छिन्नकिरियमप्पडिवाई सेलेसिकालमि ॥ ८ ॥ तदसखेज्जगुणाए गुणसेढीइरइय पुरा कमं । समए समए खविउ कमेण सब तहिं कम ॥ ९ ॥ उजुसेढीपडिवन्नो समयपएसतरं अफुसमाणो । एगसमएण सिझइ अह सागारोवउत्तो सो ॥ १० ॥ इति" तस्य गुणस्थानमयोगिकेवलिगुणस्थानमिति ॥ २ ॥

व्याख्यातानि सभावार्थानि चतुर्दशापि गुणस्थानानि, अथ यथैतेष्वेव गुणस्थानेषु भगवता बन्धमुदयमुदीरणा सत्ता चाश्रित्य कर्माणि रूपितानि तथा विभणिषु प्रथम तावद्बन्धमाश्रित्य क गुणस्थाने कियत्य कर्मप्रकृतयो व्यवच्छिन्ना इत्ये- तद्बन्धलक्षणकथनपूर्वक प्रचिकटयिषुराह–

**अभिनवकंमग्गहण बंधो ओहेण तत्थ वीससयं । तित्थयराहारगडुगवज्जं मिछमि सतरसय ॥ ३ ॥**

टीका–मिथ्यात्वादिभिर्हेतुभिरभिनवस्य नूतनस्य कर्मणो ज्ञानावरणादेर्ग्रहणमुपादान बन्ध इत्युच्यते ।ओघेन सामान्येन, नैक किंचिद्गुणस्थानकमाश्रित्येत्यर्थः । 'तत्थ त्ति' तत्र बन्धे विश शत विंशत्युत्तर शत कर्मप्रकृतीना भवतीति शेष । तथाहि–मति- ज्ञानावरण श्रुतज्ञानावरणमवधिज्ञानावरणं मन पर्यायज्ञानावरण केवलज्ञानावरणमिति पंचधा ज्ञानावरणम् । निद्रा निद्रानिद्रा

प्रचला प्रचलाप्रचला स्त्यानर्द्धिश्चक्षुर्दर्शनावरणमचक्षुर्दर्शनावरणमवधिदर्शनावरणं केवलदर्शनावरणमिति नवविधं दर्शनावरणम्। वेदनीयं द्विधा सातवेदनीयमसातवेदनीयं च। मोहनीयमष्टाविंशतिभेदं, तद्यथा—मिथ्यात्वं सम्यग्मिथ्यात्वं सम्यक्त्वमिति दर्शनत्रिकं, अनन्तानुबन्धी क्रोधो मानो माया लोभः, अप्रत्याख्यानावरणः क्रोधो मानो माया लोभः, प्रत्याख्यानावरणः क्रोधो मानो माया लोभः, संज्वलनः क्रोधो मानो माया लोभ इति षोडश कषायाः, स्त्री पुमान्नपुंसकमिति वेदत्रयं हास्यं रतिररतिः शोको भयं जुगुप्सेति हास्यषट्कं मिलितं नव नोकषायाः। आयुश्चतुर्धा नरकायुस्तिर्यगायुर्मनुष्यायुर्देवायुरिति। अथ नामकर्म द्विचत्वारिंशद्विधं, तद्यथा, चतुर्दश पिंडप्रकृतयः, अष्टौ प्रत्येकप्रकृतयः, त्रसदशकं, स्थावरदशकं चेति। तत्र पिंडप्रकृतय इमाः—गतिनाम जातिनाम शरीरनामांगोपांगनाम बन्धननाम संघातननाम संहनननाम संस्थाननाम वर्णनाम गन्धनाम रसनाम स्पर्शनामानुपूर्वीनाम विहायोगतिनामेति। आसां भेदा दर्श्यन्ते—नरकतिर्यङ्मनुष्यदेवगतिनामभेदाच्चतुर्धा गतिनाम, एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपंचेन्द्रियजातिनामेति पंचधा जातिनाम, औदारिकवैक्रियाहारकतैजसकार्मणशरीरनामेति पंचधा शरीरनाम, औदारिकांगोपांगं वैक्रियांगोपांगमाहारकांगोपांगं नामेति त्रिधांगोपांगनाम, बन्धननाम पंचधौदारिकबन्धनादि शरीरवत्, एवं संघातनमपि, संहनननाम षड्भेदं—वज्रऋषभनाराचं ऋषभनाराचं नाराचं अर्धनाराचं कीलिका सेवार्तं चेति, संस्थाननाम षड्विधं—समचतुरस्रं न्यग्रोधपरिमंडलं सादि वामनं कुब्जं हुंडं चेति, वर्णनाम पंचधा—कृष्णं नीलं लोहितं हारिद्रं शुक्लं चेति, गन्धनाम द्विधा सुरभिगन्धनाम दुरभिगन्धनामेति, रसनाम पंचधा—तिक्तं कटुकं कषायं अम्लं मधुरं चेति, स्पर्शनामाष्टधा—कर्कशं मृदु लघु गुरु शीतं उष्णं

स्निग्ध रुक्ष च, आनुपूर्वी चतुर्धा–नरकानुपूर्वी तिर्यगानुपूर्वी मनुष्यानुपूर्वी देवानुपूर्वी (चेति) विहायोगतिर्द्विधा–प्रशस्तविहायोगतिरप्रशस्तविहायोगतिरिति। आसा चतुर्दशपिण्डप्रकृतीनामुत्तरभेदा अमी ( पूर्वोक्ता ) पचषष्टिः । प्रत्येकप्रकृतयस्त्विमा–पराघातनाम, उपघातनाम, उच्छ्वासनाम, आतपनाम उद्योतनाम, अगुरुलघुनाम, तीर्थकरनाम, निर्माणनामेति । त्रसदशकमिद–त्रसनाम, बादरनाम, पर्याप्तनाम, प्रत्येकनाम, स्थिरनाम, शुभनाम, सुभगनाम, सुस्वरनाम आदेयनाम, यश कीर्तिनामेति । स्थावरदशक पुनरिद–स्थावरनाम, सूक्ष्मनाम, अपर्याप्तनाम, साधारणनाम, अस्थिरनाम, अशुभनाम, दुर्भगनाम, दु स्वरनाम, अनादेयनाम, अयश कीर्तिनामेति । पिण्डप्रकृत्युत्तरभेदा पचषष्टि , प्रत्येकप्रकृतयोऽष्टौ, त्रसदशकं, स्थावरदशक च सर्वमीलने त्रिनवति । गोत्र द्विधा–उच्चैर्गोत्र नीचैर्गोत्रं च । अन्तराय पचधा–दानान्तराय लाभान्तरायं भोगान्तरायमुपभोगान्तराय वीर्यान्तराय चेति । एवं च कृत्वा ज्ञानावरणे कर्मप्रकृतय पच, दर्शनावरणे नव, वेदनीये द्वे, मोहनीयेऽष्टाविशति , आयुषि चतस्र , नाम्नि त्रिनवति , गोत्रे द्वे, अन्तराये पच । सर्वपिण्डेऽष्टाचत्वारिंश शत भवति । तेन च सत्तायामधिकार । उदयोदीरणयो पुनरौदारिकादिबन्धनाना पचानामौदारिकादिसघातनाना च पचाना यथास्वमौदारिकादिषु पचसु शरीरेष्वन्तर्भाव । वर्णरसगन्धस्पर्शाना यथासख्य पचद्विपचाष्टभेदाना तद्भेदकृता विशतिमपनीय तेषामेव चतुर्णामविभ्राना ग्रहणे षोडशकमिदं बन्धनसघातनसहितमष्टचत्वारिशशतादपनीयते। शेषेण द्वाविंशेन शतेनाधिकार । बन्धे तु सम्यग्मिथ्यात्वसम्यक्त्वयो सक्रमेणैव निष्पाद्यमानत्वाद्बन्धो न सभवतीति तयोर्द्वाविशतिशतादपनीतयो शेषेण विशत्युत्तरशतेनाधिकार इति प्रकृतिसमुत्कीर्तना कृता। प्रकृत्यर्थ स्वोपज्ञकर्मविपाकटीकाया

विस्तरेण निरूपितस्तत एवावधार्य इत्यलं प्रसंगेन । प्रकृतं प्रस्तुमः । तत्र बन्धे सामान्येन विंशं शतं भवतीति प्रकृतं, तदेव च विंशं शतं तीर्थकराहारकद्विकवर्जं तीर्थकराहारकद्विकरहितं सप्तदशोत्तरं शतं 'मिच्छंमिच्चि' भीमसेनो भीम इत्यादिवत् पदवाच्यस्यार्थस्य पदैकदेशेनाप्यभिधानदर्शनान्मिथ्यात्वे मिथ्यादृष्टिगुणस्थान इत्यर्थः । एवमुत्तरेष्वपि पदवाच्येषु पदैकदेशप्रयोगो द्रष्टव्यः 'सतरसयं ति' सप्तदशाधिकं शतं सप्तदशशतं बन्धे भवतीति । अयमत्राभिप्रायः—तीर्थकरनाम तावत् सम्यक्त्वगुणनिमित्तमेव बध्यते । आहारकशरीराहारकांगोपांगलक्षणमाहारकद्विकं त्वप्रमत्तयतिसंबन्धिना संयमेनैव । यदुक्तं श्रीशिवशर्मसूरिपादैः शतके—"संमत्तगुणनिमित्तं तित्थयरं संजमेण आहारं" इति मिथ्यादृष्टिगुणस्थाने एतत्प्रकृतित्रयवर्जनं कृतं, शेषं पुनः सप्तदशशतं मिथ्यात्वादिभिर्हेतुभिर्बध्यत इति मिथ्यादृष्टिगुणस्थाने तद्बन्ध इति ॥ ३ ॥

नन्वेता मिथ्यादृष्टिप्रायोग्याः सप्तदशशतसंख्याः सर्वा अपि प्रकृतय उत्तरगुणस्थानेषु गच्छन्त्युत काश्चिदेवेत्याशंक्याह—

**नरयतिग जाइथावरचउ हुंडायवछिवठनपुमिच्छं। सोलंतो इगहियसय सासणि, तिरिथीणदुहगतिगं४**

टीका—नरकत्रिकं नरकगतिनरकानुपूर्वीनरकायुर्लक्षणम्, 'जाइथावरचउ त्ति' चतुःशब्दस्य प्रत्येकमभिसंबन्धाज्जातिचतुष्कं एकेन्द्रियजातिद्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजातिस्वरूपं,स्थावरचतुष्कं स्थावरसूक्ष्मापर्याप्तसाधारणलक्षणं, हुंडं, आतपं, छेदपृष्ठं, 'नपु त्ति' नपुंसकवेदः, 'मिच्छ त्ति' मिथ्यात्वमित्येतासां 'सोलंतु त्ति' षोडशानां प्रकृतीनां मिथ्यादृ-

१ सम्यक्त्वगुणनिमित्तं तीर्थकरं संयमेनाहारम्.

ष्टिगुणस्थाने 'तत्र भाव उत्तरत्राभाव' इत्येवंलक्षणोऽन्तो विनाश क्षयो भेदो व्यवच्छेद उच्छेद इति पर्याया । इयमत्र भावना–एता हि षोडश प्रकृतयो मिथ्यादृष्टिगुणस्थान एव बन्धमायान्ति, मिथ्यात्वप्रत्ययत्वादेतासाम् । नोत्तरत्र सास्वादनादिषु, मिथ्यात्वाभावादेव । यत एता प्रायो नारकैकेन्द्रियविकलेन्द्रिययोग्यत्वादत्यन्ताशुभत्वाच्च मिथ्यादृष्टिरेव बध्नातीति सप्तदशशतात्पूर्वोक्तादेतदपगमे शेषमेकोत्तरं प्रकृतिशतमेवाविरत्यादिहेतुभि सास्वादने बन्धमायात्यत एवाह– "इगहियसय सासणि त्ति" एकाधिकशत सास्वादने बध्यते । 'इगहियसय' इत्यत्र विभक्तिलोप' प्राकृतत्वात् । एवमन्यत्रापि विभक्तिलोप' प्राकृतलक्षणवशादवसेय । "तिरिथीणदुहगतिग ति" त्रिकशब्द' प्रत्येकं सबध्यते । तिर्यक्त्रिकं तिर्यग्गतितिर्यगानुपूर्वीतिर्यगायुर्लक्षण, स्त्यानर्द्धित्रिक निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिस्वरूप, दुर्भगत्रिक दुर्भगदु स्वरानादेयस्वरूपमिति ॥ ४ ॥

**अणमज्झागिइसंघयणचउ निउज्जोयकुखगइत्थि त्ति। पणवीसंतो मीसे चउसयरि दुआउयअबंधा॥५॥**

टीका–चतु शब्दस्य प्रत्येक योजनात् 'अण त्ति' अनन्तानुबन्धिचतुष्कमनन्तानुबन्धिक्रोधमानमायालोभाख्यम् । मध्या मध्यमा आद्यन्तवर्जा आकृतय' संस्थानानि मध्याकृतय' तासा चतुष्क न्यग्रोधपरिमण्डलसंस्थानं सादिसंस्थान वामनसंस्थान कुब्जसंस्थानमिति । तथा काकाक्षिगोलकन्यायान्मध्यशब्दस्यात्रापि योगस्ततो मध्यानि मध्यमानि प्रथमान्तिमवर्जानि संहननान्यस्थिनिचयात्मकानि तेषा चतुष्क ऋषभनाराचसंहनन नाराचसंहननमर्धनाराचसंहननं कीलिकासंहननमिति । 'निउ त्ति' नीचैर्गोत्रम् । उद्योतम् । कुखगति कु कुत्सिताऽप्रशस्ता खगतिर्विहायोगतिरप्रशस्तविहायोगतिरि-

त्यर्थः । 'त्थित्ति' स्त्रीवेदः । इत्येतासां पंचविंशतिप्रकृतीनां सास्वादनेऽन्तः, तत्र बध्यन्ते नोत्तरत्रेत्यर्थः । यतोऽनन्तानुबन्धिप्रत्ययो ह्यासां बन्धः स चोत्तरत्र नास्तीति । ततश्चैकाधिकशतात् पंचविंशत्यपगमे 'मीसि त्ति' मिश्रे सम्यग्मिथ्यादृष्टिगुणस्थाने षट्सप्ततिर्बन्धे भवति । ततोऽपि " डुआउयअबंध त्ति " द्वयोर्मनुष्यायुर्देवायुषोरबन्धो द्व्यायुरबंधस्तस्माद्व्यायुरबन्धादिति हेतोश्चतुःसप्ततिर्भवति । इदमुक्तं भवति–इह नारकतिर्यगायुषी यथासंख्यं मिथ्यादृष्टिसास्वादनगुणस्थानयोर्व्यवच्छिन्ने । शेषं तु मनुष्यायुर्देवायुर्द्वयमवतिष्ठते तदपि मिश्रो न बध्नाति, मिश्रस्य सर्वथायुर्बन्धप्रतिषेधात् । उक्तं च–"संमामिच्छद्दिठी आउयबंधं पि न करेइ त्ति" तत् षट्सप्ततेरायुर्द्वयापगमे चतुःसप्ततिर्भवतीति ॥ ५ ॥

**संमे सगसयरि जिणाउबंधि वइरनरतिगबियकसाया। उरलडुगंतोदेसेसत्तठी तिअकसायंतो ॥ ६ ॥**

टीका–'संमि त्ति' अविरतसम्यग्दृष्टिगुणस्थाने 'सगसयरि त्ति' सप्तसप्ततिप्रकृतीनां बन्धो भवति । कथमिति चेदुच्यते–पूर्वोक्तैव चतुःसप्ततिः ' जिणाउबंधि त्ति ' तीर्थकरनाममनुष्यायुर्देवायुर्द्वयबन्धे सति सप्तसप्ततिर्भवति । एतदुक्तं भवति–तीर्थकरनाम तावत्सम्यक्त्वप्रत्ययादेवात्र बन्धमायाति ये च तिर्यग्मनुष्या अविरतसम्यग्दृशस्ते देवायुर्बध्नन्ति, ये तु नारकदेवास्ते मनुष्यायुर्बध्नन्ति । ततोऽत्रेयं प्रकृतित्रयी समधिका लभ्यते सा च पूर्वोक्तायां चतुःसप्ततौ क्षिप्यते जाता सप्तसप्ततिरिति । 'वइर त्ति' वज्रर्षभनाराचसंहननं, 'नरतिग त्ति' नरत्रिकं नरगतिनरानुपूर्वीनरायुर्लक्षणं, 'बियकसाय त्ति' द्वितीयकषाया अप्रत्याख्यानावरणाः क्रोधमानमायालोभाः, 'उरलडुग त्ति' औदारिकद्विकमौदारिकशरीरौदारिकांगोपांग-

१ सम्यग्मिथ्यादृष्टिरायुर्बन्धमपि न करोतीति.

लक्षणमित्येतासा दशप्रकृतीनामविरतसम्यग्दृष्टावन्तो भवति, एता अत्र बध्यन्ते नोत्तरत्रेत्यर्थ । अयमत्राभिप्राय –द्वितीयकषायास्तावत्तदुदयाभावान्न बध्नाति देशविरतादि । कषाया ह्यनन्तानुबन्धिवर्जा वेद्यमाना एव बध्यन्ते "[1]जे वेएइ ते बधइ" इति वचनात् । अनन्तानुबन्धिनस्तु चतुर्विंशतिसत्कर्मानन्तवियोजको मिथ्यात्व गतो बन्धावलिकामात्र कालमनुदितान् बध्नाति । यदाहु सप्ततिकाटीकाया मोहनीयचतुर्विंशतिकावसरे श्रीमलयगिरिपादा –"इह सम्यग्दृष्टिना सता केनचित् प्रथमतोऽनन्तानुबन्धिनो विसयोजिता , एतावतैव स विश्रान्तो न मिथ्यात्वादिक्षयाय स उद्युक्तवान्, तथाविधसामग्र्यभावात् । तत कालान्तरे मिथ्यात्व गत सन् मिथ्यात्वप्रत्ययतो भूयोऽप्यनन्तानुबन्धिनो बध्नाति । ततो बन्धावलिका यावन्नाद्याप्यतिक्रामति तावत्तेषामुदयं विना बन्ध इति । नरत्रिक पुनरेकान्तेन मनुष्यवेद्यम् । औदारिकद्विक वज्रऋषभनाराचसहनन च मनुष्यतिर्यगेकान्तवेद्यम् । देशविरतादिषु देवगतिवेद्यमेव बध्नाति, नान्यत्तेनासा दशप्रकृतीनामविरतसम्यग्दृष्टिगुणस्थानेऽन्त । तत एतत्प्रकृतिदशक पूर्वोक्तसप्तसप्ततेरपनीयते । ततो " देसे सत्तट्ठि त्ति " देशे देशविरतगुणस्थाने सप्तषष्टिर्बध्यते " तियकसायतु त्ति " तृतीयकषायाणा प्रत्याख्यानावरणक्रोधमानमायालोभाना देशविरतेऽन्तस्तदुत्तरेषु तेषामुदयाभावादनुदिताना चाबन्धात् "जे वेयइ ते बधइ " इति वचनादिति भाव । एतच्च प्रकृतिचतुष्क पूर्वोक्तसप्तषष्टेरपनीयते ॥ ६ ॥

तत –

---

१ यान् वेदयते तान् बध्नाति

तेवट्ठि पमत्ते सोग अरइ अथिरदुग अजस अस्सायं। वुच्छिज्ज छच्च सत्त व नेइसुराउं जया निट्ठं ॥७॥

टीका–"तेवट्ठि पमत्ति त्ति" त्रिषष्टिः प्रमत्ते बध्यते। शोकोऽरतिः, 'अथिरदुग त्ति' अस्थिरद्विकमस्थिराशुभरूपम्, 'अजस त्ति' अयशःकीर्तिनाम, असातमित्येताः षट् प्रकृतयः प्रमत्ते 'वुच्छिज्ज त्ति' प्राकृतत्वादादेशस्य व्यवच्छिद्यन्ते क्षीयन्ते बन्धमाश्रित्येति भावः। यद्वा सप्त वा व्यवच्छिद्यन्ते। कथमित्याह–"नेइ सुराउं जया निट्ठं ति" यदा कश्चित्प्रमत्तः सन् सुरायुर्बद्धुमारभते निष्ठां च नयति सुरायुर्बन्धं समापयतीत्यर्थः, तदा पूर्वोक्ताः षट् सुरायुःसहिताः सप्त व्यवच्छिद्यन्ते। इति ॥ ७ ॥

गुणसट्ठि अप्पमत्ते, सुराउ बंधंतु जइ इहागच्छे। अन्नह अट्ठावन्ना, जं आहारगदुगं बंधे ॥ ८ ॥

टीका–'गुणसट्ठि त्ति' एकोनषष्टिरप्रमत्ते बध्यत इति शेषः। कथमित्याह–सुरायुर्बध्नन् देवायुर्बन्धं कुर्वन् यदि चेदिहाप्रमत्तगुणस्थान आगच्छेत्। इयमत्र भावना–सुरायुर्बन्धं हि प्रमत्त एवारभते नाप्रमत्तादिः, तस्यातिविशुद्धत्वात्, आयुष्कस्य तु घोलनापरिणामेनैव बन्धनात्, परं सुरायुर्बध्नन् प्रमत्ते किंचित्सावशेषे सुरायुर्बन्धेऽप्रमत्तेऽप्यागच्छेत्। अत्र च सावशेषं सुरायुर्निष्ठां नयति। तत एकोनषष्टिरप्रमत्ते भवति "देवाउयं च इक्कं नायव्वं अप्पमत्तंमि त्ति [१]" वचनात्। 'अन्नह अट्ठावन्न त्ति' अन्यथा यदि सुरायुर्बन्धः प्रमत्तेनारब्धः प्रमत्तेनैव निष्ठां नीतस्ततोऽष्टापंचाशदप्रमत्ते भवतीति।

१ देवायुष्कं चैकं ज्ञातव्यमप्रमत्ते इति.

ननु यदि पूर्वोक्तत्रिषष्टे शोकारत्यस्थिरद्विकायशोऽसातलक्षण प्रकृतिषट्कमपनीयते तर्हि सा सप्तपञ्चाशद्भवति, अथ सुरायु सहितं पूर्वोक्तप्रकृतिषट्कमपनीयते तर्हि षट्पञ्चाशत्, तत कथमुक्तमेकोनषष्टिरष्टपञ्चाशद्वाऽप्रमत्त इत्याशंक्याह– "ज आहारगडुग वधे त्ति" यद्यस्मात्कारणादाहारकद्विक बन्धे जवतीति शेष । अयमत्राशय'–अप्रमत्तयतिसबन्धिना सयमविशेषेणाहारकद्विक बध्यते, तच्चेह लभ्यत इति पूर्वापनीतमप्यत्र क्षिप्यते । तत' षट्पञ्चाशदाहारकद्विकक्षेपेऽष्टापञ्चाशद्भवति, सप्तपञ्चाशत् पुनराहारकद्विकक्षेप एकोनषष्टिरिति ॥ ८ ॥

अडुवन्न अपुवाइमि निद्दडुगतो बपन्न पणजागे। सुरडुगपणिंदिसुखगइतसनवउरलविणुतणुवगा ॥९॥
समचउरनिमिणजिणवंनअगुरुलघुचउ ठलंसि तीसतो । चरमे ठवीसबधो हासरईकुठजयजेउं ॥१०॥

टीका–' अडवन्न अपुवाइमि त्ति ' इह किलापूर्वकरणाद्धाया सप्त जागा क्रियन्ते । तत्रापूर्वस्यापूर्वकरणस्यादिमे प्रथमे सप्तजागेऽष्टापञ्चाशत् पूर्वोक्ता जवति । तत्र चाद्ये सप्तजागे निद्राद्विकस्य निद्राप्रचलालक्षणस्यान्तो जवति, अत्र बध्यते नोत्तरत्रापि, उत्तरत्र 'तद्बन्धाध्यवसायस्थानाजावात्'; उत्तरेष्वप्ययमेव हेतुरनुसरणीय । तत' पर षट्पञ्चाशद्भवति । कथमित्याह–'पणजागि त्ति' पंचाना जागाना समाहार पचजाग तस्मिन् पचजागे पचसु जागेष्वित्यर्थ । इदमुक्त जवति–अपूर्वकरणाद्धाया सप्तसु जागेषु विवक्षितेषु प्रथमे सप्तजागेऽष्टपञ्चाशत्, तत्र च व्यवच्छिन्ननिद्राप्रचलापनयने षट्पञ्चाशत्, सा च द्वितीये सप्तजागे तृतीये सप्तजागे चतुर्थे सप्तजागे पंचमे सप्तजागे षष्ठे सप्तजागे जवतीत्यर्थ ।

अत्र च षष्ठे सप्तभागे आसां त्रिंशत्प्रकृतीनामन्तो भवति इत्याह—'सुरदुगेत्यादि' सुरद्विकं सुरगतिसुरानुपूर्वीरूपं, 'पणिंदि त्ति' पंचेन्द्रियजातिः, सुखगतिः प्रशस्तविहायोगतिः, 'तसनव त्ति' त्रसनवकं त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेयलक्षणं, 'उरलविणु त्ति' औदारिकशरीरं विना औदारिकांगोपांगं च विनेत्यर्थः, 'तणु त्ति' तनवः शरीराणि, 'उवंग त्ति' उपांगानि । इदमुक्तं भवति—वैक्रियशरीरमाहारकशरीरं तैजसशरीरं कार्मणशरीरं वैक्रियांगोपांगमाहारकांगोपांगं चेति । 'समचउर त्ति' समचतुरस्रसंस्थानं 'निमिण त्ति' निर्माणं, 'जिण त्ति' जिननाम तीर्थकरनामेत्यर्थः, 'वन्नअगुरुलहुचउ त्ति' चतुःशब्दस्य प्रत्येकमभिसंबन्धात् वर्णचतुष्कं वर्णगन्धरसस्पर्शरूपम्, अगुरुलघुचतुष्कमगुरुलघूपघातपराघातोच्छ्वासलक्षणमित्येतासां त्रिंशत्प्रकृतीनां 'छलंसि त्ति' षष्ठोऽशो भागः षडंशः "मयूरव्यंसकादित्वात्समासः" यथा तृतीयो भागस्त्रिभाग इति । अत्र रुकारस्य लकारो "रोलः" इति प्राकृतसूत्रेण तस्मिन् षडंशे । ततः पूर्वोक्तषट्पंचाशत इमास्त्रिंशत् प्रकृतयोऽपनीयन्ते शेषाः षड्विंशतिप्रकृतयोऽपूर्वकरणस्य 'चरमि त्ति' चरमेऽन्तिमे सप्तमे सप्तभागे बन्धे लभ्यन्त इत्यर्थः । चरमे च सप्तभागे हास्यं च रतिश्च 'कुच्छ त्ति' कुत्सा च जुगुप्सा भयं च हास्यरतिकुत्साभयानि तेषां भेदो व्यवच्छेदो हास्यरतिकुत्साभयभेदो भवतीति । एताश्चतस्रः प्रकृतयः पूर्वोक्तषाड्विंशतेरपनीयन्ते, शेषा द्वाविंशतिः, सा चानिवृत्तिबादरप्रथमभागे भवतीति ॥ ९–१० ॥

एतदेवाह—

अनियट्टिभागपणगे इगेगहीणो दुवीसविहबंधो । पुमसंजलणचउण्हं कमेण छेओ सतर सुहुमे ॥११॥

टीका–अनिवृत्तिभागपचके अनिवृत्तिबादराद्धाया पचसु भागेष्वित्यर्थ । स पूर्वोक्तो द्वाविंशतिवन्ध एकैकहीनो भाव्य, एकैकस्मिन् भागे एकैकस्या प्रकृतेर्वन्धव्यवच्छेद इत्यर्थ । कथमित्याह–'पुमसंजलणचउण्ह कमेण छेओ त्ति' क्रमेणानुपूर्व्या प्रथमे भागे पुंवेदस्य छेदस्तत एकविंशतेर्वन्ध, द्वितीये भागे सज्वलनक्रोधस्य छेदस्ततो विंशतेर्वन्ध, तृतीये भागे तु सज्वलनमानस्य छेदस्तत एकोनविंशतेर्वन्ध', चतुर्थे भागे सज्वलनमायायाश्छेदस्ततोऽष्टादशाना वन्ध, पंचमभागे सज्वलनलोभस्य छेद, उत्तरत्र तद्बन्धाध्यवसायस्थानाभाव, छेदहेतुसज्वलनलोभस्य तु वादरसपरायप्रत्ययो वन्ध., स चोत्तरत्र नास्तीत्यतश्छेदस्तत सूक्ष्मसपराये सप्तदशप्रकृतीना वन्धो भवतीत्यत आह–'सतर सुहुमि त्ति' स्पष्टम् ॥ ११ ॥

चउदंसणुच्चजसनाणविग्घदसग ति सोलसुच्छेओ । तिसु सायवंध छेओ सजोगिवधंतुणंतो अ ॥ १२ ॥

। वधो संमत्तो ।

टीका–'चउदसण त्ति' चतुर्णा दर्शनाना समाहारश्चतुर्दर्शन चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनरूप, 'उच्च त्ति' उच्चैर्गोत्र, 'जस त्ति' यश कीर्तिनाम, 'नाणविग्घदसग त्ति' ज्ञानावरणपचक विघ्नपचकमन्तरायपंचकमुभयमीलने ज्ञानविघ्नदशकमित्येतासा षोडशप्रकृतीना सूक्ष्मसपराये वन्धस्योच्छेदो भवति, एतद्बन्धस्य सापरायिकत्वादुत्तरेषु च सापरायिकस्य कषायोदयलक्षणस्याभावादिति । 'तिसु सायवध त्ति' त्रिषूपशान्तमोहक्षीणमोहसयोगिकेवलिगुणस्थानेषु सातवन्ध सातस्य केवलयोगप्रत्ययस्य द्विसामयिकस्य तृतीयसमयेऽवस्थानाभावादिति भाव', न सापरायिकस्य, तस्य कषा-

यप्रत्ययत्वात्। आह च भाष्यसुधांभोनिधिः—"[1]उवसंतखीणमोहा केवलिणो एगविहबंधा। ते पुण दुसमयठिइयस्स बंधगा न उण संपरायस्स ॥ १ ॥ इति" 'तेउ सजोगि त्ति' डमरुकमणिन्यायात् सातबंधशब्दस्येह संबन्धस्ततः सयोगिकेवलिगुणस्थाने सातबन्धस्य छेदो व्यवच्छेदः। 'इह सातबन्धोऽस्ति, योगसद्भावात्।' नोत्तरत्रायोगिकेवलिगुणस्थाने, योगाभावात्। ततोऽबन्धका अयोगिकेवलिनः। उक्तं च—"[2]सेलेसिं पडिवन्ना अबन्धगा हुंति नायव्वा"। 'बंधंतुणंतो य त्ति' बन्धस्यान्तोऽनन्तश्च बन्धशब्दस्याग्रे षष्ठीलोपः प्राकृतत्वात्। तत इदमुक्तं भवति—यत्र हि गुणस्थाने यासां प्रकृतीनां बन्धहेतुव्यवच्छेदस्तत्र तासां बन्धस्यान्तः। यथा मिथ्यादृष्टिगुणस्थाने व्यवच्छिन्नबन्धानां षोडशानां प्रकृतीनां मिथ्यात्वाविरतिकषाययोगा बन्धहेतवस्तेषु मिथ्यात्वं तत्रैव व्यवच्छिन्नं, ततश्च मिथ्यादृष्टिगुणस्थाने तासां बंधस्यान्तः, तत उत्तरेषु कारणवैकल्येन बन्धाभावादितरासां बन्धस्यानन्तः। तत उत्तरेष्वपि तद्बन्धकारणसाकल्येन बन्धभावात्। इत्येवमन्येष्वपि गुणस्थानेषु प्रकृतीनां स्वस्वबन्धहेतुव्यवच्छेदाव्यवच्छेदाभ्यां साकल्यवैकल्यवशाद्बन्धस्यान्तोऽनन्तश्च भावनीय इति ॥ १२ ॥

बन्धाधिकारमेनं विवृण्वता यन्मयार्जितं पुण्यम्। इह कर्मबन्धमुक्तो लोकः सर्वोऽपि तेनास्तु ॥ १ ॥

॥ इति श्रीदेवेन्द्रसूरिविरचितायां स्वोपज्ञकर्मस्तवटीकायां बन्धाधिकारः समाप्तः ॥

---

१ उपशांतक्षीणमोहा केवलिन एकविधबन्धाः। ते पुनर्द्विसमयस्थितिकस्य बंधका न पुनः संपरायस्य ॥ १ ॥ २ शैलेशीं प्रतिपन्न अबन्धका भवन्ति ज्ञातव्याः।

साम्प्रतमुदयस्य प्रायस्तत्समानत्वादुदीरणायाश्च लक्षणकथनपूर्वकं कस्मिन् गुणस्थाने कियत्यः प्रकृतयः तस्य भगवतः क्षीणा इत्येतन्निदिदिक्षुराह–

उदओ विवागवेयणमुदीरणमपत्ति इह दुवीससयं । सतरसयं मिच्छे मीससंमआहारजिणणुदया ॥१३॥

टीका–इह कर्मपुद्गलानां यथास्वस्थितिबद्धानामुदयसमयप्राप्तानां यद्विपाकेनानुभवनेन वेदनं स उदय उच्यते । 'उदीरण अपत्ति त्ति' कर्मपुद्गलानां यथास्वस्थितिबद्धानां यदप्राप्तकाले वेदनमुदीरणा भण्यते । 'इह त्ति' इहोदये उदीरणायां च 'दुवीससय ति' द्विविंशशतं द्वाभ्यामधिकं विंशं शतं द्विविंशशतं "मयूरव्यंसकादित्वात्समासः" तत्सामान्यतोऽधिक्रियत इति शेषः । सप्तदशशतं 'मिच्छ त्ति' मिथ्यादृष्टिगुणस्थाने उदये भवति । कथमित्याह–'मीससंमआहारजिणणुदय त्ति' मिश्रं च, 'समत्ति' सम्यक्त्वं च, 'आहार त्ति' इहाहारकशब्देन सर्वत्राहारकशरीराहारकांगोपांगलक्षणमाहारकद्विकं गृह्यते ततः आहारकं च, 'जिण त्ति' जिननाम च, मिश्रसम्यक्त्वाहारजिनास्तेषामनुदयात् । इदमत्र हृदयम्–मिश्रोदयस्तावत् सम्यग्मिथ्यादृष्टिगुणस्थान एव भवति, सम्यक्त्वोदयस्त्वविरतसम्यग्मिथ्यादृष्ट्यादौ, आहारकद्विकोदयः प्रमत्तादौ, जिननामोदयः सयोगिकेवल्यादौ भवति । ततः इदं प्रकृतिपंचकं द्वाविंशतिशतादपनीयते, ततो मिथ्यादृष्टिगुणस्थाने सप्तदशशतं भवतीति ॥ १३ ॥

सुहुमतिगायवमिच्छं मिच्छंतं सासणे इगारसयं । निरयाणुपुव्विणुदया अणथावरइगविगलअंतो ॥१४॥

टीका–सूक्ष्मत्रिकं च सूक्ष्मापर्याप्तसाधारणरूपं, आतपं च, मिथ्यात्वं च, सूक्ष्मत्रिकातपमिथ्यात्वं। मिथ्यात्वे मिथ्यादृष्टावन्तो यस्य तन्मिथ्यात्वान्तं। एतत्प्रकृतिपंचकस्य मिथ्यात्वेऽन्तो भवतीत्यर्थः। अयमत्राशयः–सूक्ष्मनाम्न उदयः सूक्ष्मैकेन्द्रियेषु। अपर्याप्तनाम्नस्तु सर्वेष्वप्यपर्याप्तकेषु। साधारणनाम्नोऽनन्तवनस्पतिषु। आतपनामोदयस्तु बादरपृथिवीकायिकेषु एव। न चैतेषु स्थितो जीवः सास्वादनादित्वं लभते, नापि पूर्वप्रतिपन्नस्तेषूत्पद्यते, सास्वादनस्तु यद्यपि बादरपर्याप्तैकेन्द्रियेषूत्पद्यते तथापि न तस्यातपनामोदयः, तत्रोत्पन्नमात्रस्यासमाप्तशरीरस्यैव सास्वादनत्ववमनात्, समाप्ते च शरीरे तत्रातपनामोदयो भवति। मिथ्यात्वोदयः पुनर्मिथ्यादृष्टावेव। तेनैतासां पंचप्रकृतीनां मिथ्यादृष्टावुदयस्यान्तः। तत इदं प्रकृतिपंचकं पूर्वोक्तसप्तदशशतादपनीयते, शेषं द्वादशशतं सास्वादने उदये प्रतीत्य भवति। नरकानुपूर्व्यपनयने एकादशशतं भवतीत्येतदेवाह–'सासणे इगारसयं नरयाणुपुव्विणुदय त्ति' सास्वादन एकादशशतमुदये भवति, नरकानुपूर्व्या अनुदयात्। नरकानुपूर्व्या उदयो हि नरके वक्रेण गच्छतो जीवस्य भवति, न च सास्वादनो नरके गच्छति। यदुक्तं बृहत्कर्मस्तवभाष्ये–"[1]नरयाणुपुव्वियाए सासणसमयम्मि होइ न हु उदओ। नरयंमि जं न गच्छइ अवणिज्जइ तेण सा तत्थ ॥ १ ॥" ततो नरकानुपूर्वी मिथ्यादृष्टिव्यवच्छिन्नसूक्ष्मत्रिकातपमिथ्यात्वलक्षणप्रकृतिपंचकं च सप्तदशशतादपनीयते, शेषं सासादने एकादशशतं भवतीति। 'अणथावरइगविगलअंतु त्ति' 'अण त्ति' अनन्तानुबन्धिनश्चत्वारः क्रोधमानमायालोभाः, स्थावरनाम, 'इग त्ति' एकेन्द्रियजातिः, विकलाः पंचेन्द्रियजात्यपेक्षयाऽसंपूर्णा द्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजातयः इत्येतैः, इत्य-

---

१ नरकानुपूर्व्याः सासादनसमये भवति न खलूदयः। नरके यन्न गच्छति अपनीयते तेन सा तत्र ॥ १ ॥

तासा नवाना प्रकृतीना सास्वादनेऽन्त उदयमाश्रित्य भवति । इयमत्र भावना—अनन्तानुबन्धिनामुदये हि सम्यक्त्वलाभ एव न भवति । यदाहु श्रीभद्रबाहुस्वामिपादा —"पढमिल्लुयाण उदए नियमा सजोयणा कसायाण । सम्मद्दसणलभ भवसिद्धिया वि न लहति ॥ १ ॥" नापि सम्यग्मिथ्यात्व कोऽप्यनन्तानुबन्ध्युदये गच्छति, योऽपि पूर्वप्रतिपन्नसम्यक्त्वोऽनन्तानुबन्धिनामुदय करोति सोऽपि सास्वादन एव भवतीत्युत्तरेष्वासामुदयाभाव । स्थावरैकेन्द्रियजातिविकलेन्द्रियजातयस्तु यथास्वमेकेन्द्रियविकलेन्द्रियवेद्या एव । उत्तरगुणस्थानानि तु सञ्ज्ञिपंचेन्द्रिय एव प्रतिपद्यते, पूर्वप्रतिपन्नोऽपि पचेन्द्रियेष्वेव गच्छतीत्युत्तरेष्वासामुदयाभाव इति ॥ १४ ॥

**मीसे सयमणुपुव्वीणुदया मीसोदएण मीसंतो । चउसयमजए समाणुपुव्विखेवा बियकसाया ॥ १५ ॥**

टीका—मिश्रे सम्यग्मिथ्यादृष्टौ शतमुदये भवति । कथमित्याह—'अणुपुव्वीणुदय त्ति' इहानुपूर्वीशब्देन तिर्यगानुपूर्वीमनुजानुपूर्वीदेवानुपूर्वीलक्षणानुपूर्वीत्रयी गृह्यते तस्या अनुदयात् मिश्रोदयेन च । अयमत्र भाव.—नरकानुपूर्वी तावदुदयमाश्रित्य सास्वादने व्यवच्छिन्ना, इह सा न गृह्यते, शेषमानुपूर्वीत्रिक मिश्रदृष्टेर्नोदेति तस्य मरणाभावात् 'न सममीसो कुणइ काल' इति वचनात् । मिश्रप्रकृति पुनरत्रोदये प्राप्यते । तत सास्वादनव्यवच्छिन्नं प्रकृतिनवकमानुपूर्वीत्रिकं च पूर्वोक्तैकादशशतादपनीयते, शेषा तिष्ठति प्रकृतीना नवनवति , तत्र मिश्रप्रकृतिप्रक्षेपे जात शतमिति । 'मीसतु त्ति' मिश्रगुणस्थाने मिश्रप्रकृतेरन्तो भवति । एतदुदये हि मिश्रदृष्टिरेव भवति नान्य इति । 'चउसयमजए संमाणुपुव्विखेव

१ प्रथमानामुदये नियमातसयोजना कषायाणाम् । सम्यग्दर्शनलाभ भवसिद्धिका अपि न लभन्ते ॥१॥ २ न सम्यग्मिश्र करोति कालम्

त्ति' चतुर्भिरधिकं शतं चतुःशतमुदये भवति । क्वेत्याह–अयतेऽविरतसम्यग्दृष्टौ । कथमित्याह'संम त्ति' सम्यक्त्वं 'अणुपुव्वि त्ति' आनुपूर्व्यश्चतस्रस्तासां क्षेपात् प्रक्षेपात् । इदमुक्तं भवति–पूर्वोक्तशतान्मिश्रगुणस्थानव्यवच्छिन्नैका मिश्रप्रकृतिरपनीयते, शेषा नवनवतिः, तत्र सम्यक्त्वानुपूर्वीचतुष्कलक्षणं प्रकृतिपंचकं क्षिप्यते जातं चतुःशतम् । यतः सम्यक्त्वमत्र गुणे उदयत एव, तथाऽविरतसम्यग्दृशां यथास्वं चतस्रोऽप्यानुपूर्व्य इति । 'बियकसाय त्ति' द्वितीयकषाया अप्रत्याख्यानाश्चत्वारः क्रोधमानमायालोभाः ॥ १५ ॥

मणुतिरिणुपुव्वि विउवट्ठ दुहग अणाइज्जदुग सतरछेउ ।
सगसीइ देसि तिरिगईआउ निउज्जोयतिकसाया ॥ १६ ॥

टीका–'मणुतिरिणुपुव्वि त्ति' आनुपूर्वीशब्दस्य प्रत्येकं योजनान्मनुजानुपूर्वी तिर्यगानुपूर्वी च, 'विउवट्ठ त्ति' वैक्रियाष्टकं वैक्रियशरीरवैक्रियांगोपांगदेवगतिदेवानुपूर्वीदेवायुर्नरकगतिनरकानुपूर्वीनरकायुर्लक्षणं, दुर्भगं, अनादेयद्विकं अनादेयायशःकीर्तिरूपं, इत्येतासां सप्तदशप्रकृतीनामविरतसम्यग्दृष्टावुदयं प्रतीत्य छेदो भवति । तत इमाः सप्तदश प्रकृतयः पूर्वोक्तचतुःशतादपनीयन्ते, शेषा 'सगसीइ देसि त्ति' सप्ताशीतिर्देशविरते उदये भवति । इदमत्र तात्पर्यम्–द्वितीयकषायोदये हि देशविरतेर्लाभ आगमे निषिद्धः । यदागमः–"बीयकसायाणुदए अप्पच्चक्खाणनामधिज्जाणं । संमदंसणलंभं

१ द्वितीयकषायाणामुदयेऽप्रत्याख्याननामधेयानाम् । सम्यग्दर्शनलाभं विरताविरतं न तु लभन्ते ॥ १ ॥

निरयाविरय न उ लहति ॥ १ ॥" नापि पूर्वप्रतिपन्नदेशविरत्यादेर्जीवस्य तदुदयसम्भवस्तेनोत्तरेषु तदुदयाभावः । मनुजानुपूर्वीतिर्यगानुपूर्व्योस्तु परभवादिसमयेषु त्रिष्वपान्तरालगतावुदयसम्भव, स च यथायोग मनुजतिरश्चा वर्षाष्टकादुपरिष्टात् मत्तनिपु देशविरत्यादिगुणस्थानेषु न सम्भवति । देवत्रिक नारकत्रिकं च देवनारकवेद्यमेव । न च तेषु देशविरत्यादे. सम्भव । वैक्रियशरीरवैक्रियागोपागनाम्नोस्तु देवनारकेषूदय, तिर्यग्मनुष्येषु तु प्राचुर्येणाविरतसम्यग्दृष्ट्यन्तेषु । यस्तूत्तरगुणस्थानेष्वपि केषाचिदागमे विष्णुकुमारस्थूलभद्रादीना वैक्रियद्विकस्योदय श्रूयते, स प्रविरलतरत्वादिना केनापि कारणेन पूर्वाचार्यैर्नविवक्षित इत्यस्माभिरपि न विवक्षित इति । दुर्भगमनादेयद्विकमित्येतास्तु तिस्र प्रकृतयो देशविरत्यादिषु गुणप्रत्ययान्नोदयन्त इत्येता अविरते व्यवच्छिन्ना इति। 'तिरिगइआउ त्ति' तिर्यक्शब्दस्य प्रत्येक योगात्तिर्यग्गतिस्तिर्यगायु' । 'निउज्जोय त्ति' नीचैर्गोत्रमुद्योत च । 'तिकसाय त्ति' तृतीय कषायस्त्रिकषाय । "मयूरव्यसकादित्वात्" पूरणप्रत्ययलोपी समास । प्रत्याख्यानावरणाश्चत्वार क्रोधमानमायालोभा ॥ १६ ॥

**अट्ठच्छेओ इगसी पमत्ति आहारजुगलपक्खेवा । थीणतिगाहारगदुगछेओ छस्सयरि अपमत्ते ॥ १७ ॥**

*टीका–पूर्वोक्ताष्टप्रकृतीना देशविरते उदयमाश्रित्य छेदो भवति । तत प्रमत्ते एकाशीतिर्भवति,* आहारकयुगलप्रक्षेपात् । इदमत्र हृदयम्–तिर्यग्गतितिर्यगायुषी तिर्यग्वेद्ये एव, तेषु च देशविरतान्तान्येव गुणस्थानानि घटन्ते नोत्तराणीत्युत्तरेषु तदुदयाभाव । नीचैर्गोत्र तु तिर्यग्गतिस्वाभाव्याद्ध्रुवोदयिकं न परावर्तते, ततश्च देशविरतस्यापि तिरश्चो नीचैर्गोत्रोदयोऽस्त्येव, मनुजेषु पुनः सर्वस्या देशविरतादेर्गुणिनो गुणप्रत्ययादुच्चैर्गोत्रमेवोदेतीत्युत्तरत्र नीचैर्गोत्रोदयाभाव । उद्यो-

तनाम स्वभावतस्तिर्यग्वेद्यं, तेषु च देशविरतान्तान्येव गुणस्थानानि नोत्तराणीत्युत्तरेषु तदुदयाभावः । यद्यपि यतिवैक्रियेषूद्योतनामोदेति "उत्तरदेहे च देवजइ" इति वचनात् तथापि स्वल्पत्वादिना केनापि कारणेन पूर्वाचार्यैर्न विवक्षितमित्यस्माभिरपि न विवक्षितं । तृतीयकषायोदये हि चारित्रलाभ एव न भवति । उक्तं च पूज्यैः—"[1]तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाणं । देसिक्कदेसविरइं चरित्तलंभं न उ लहंति ॥ १ ॥" न च पूर्वप्रतिपन्नचारित्रस्य तदुदयसंभव इत्युत्तरेषु तदुदयाभाव इत्येता अष्टौ प्रकृतयः पूर्वोक्तसप्ताशीतेरपनीयन्ते, शेषा एकोनाशीतिः । तत्राहारकयुगलं क्षिप्यते, यतः प्रमत्तयतेराहारकयुगलस्योदयो भवतीत्येकाशीतिः । 'थीणतिग त्ति' स्त्यानर्द्धित्रिकं निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरूपं, आहारकद्विकं आहारकशरीराहारकांगोपांगलक्षणमिति प्रकृतिपंचकस्य प्रमत्ते छेदो भवति । ततः पूर्वोक्तैकाशीतेरिदं प्रकृतिपंचकमपनीयते, शेषा षट्सप्ततिरप्रमत्ते उदये भवति । अयमत्राशयः—स्त्यानर्द्धित्रिकोदयः प्रमादरूपत्वादप्रमत्ते न संभवति । आहारकद्विकं च विकुर्वाणो यतिरौत्सुक्यादवश्यं प्रमादवशगो भवत्यत इदमप्यप्रमत्ते उदयमाश्रित्य न जाघटीति । यत्पुनरिदमन्यत्र श्रूयते—प्रमत्तयतिराहारकं विकृत्य पश्चाद्विशुद्धिवशात्तत्रस्थ एवाप्रमत्ततां यातीति तत्केनापि स्वल्पत्वादिना कारणेन पूर्वाचार्यैर्न विवक्षितमित्यस्माभिरपि न विवक्षितमिति ॥ १७ ॥

**संमत्तंतिमसंघयणतियगछेओ बिसत्तरि अपुव्वे । हासाइछक्कअंतो छसट्ठि अनियट्टि वेयतिगं ॥ १८ ॥**

टीका—सम्यक्त्वम्,. अन्तिमसंहननत्रिकमर्धनाराचसंहननकीलिकासंहननसेवार्तसंहननरूपमित्येतत्प्रकृतिचतुष्टयस्याप्र-

---

१ तृतीयकषायाणामुदये प्रत्याख्यानावरणनामधेयानाम् । देशैकदेशविरतिं चारित्रलाभं न तु लभन्ते ॥ १ ॥

मत्ते छेदो भवति, तत इद प्रकृतिचतुष्क पूर्वोक्तद्विसप्ततेरपनीयते शेषा द्वासप्तति 'अपुव्वि त्ति' अपूर्वकरणे उदये भवतीति । अयमत्राशय –सम्यक्त्वे क्षपिते उपशमिते वा श्रेणिद्वयमारुह्यत इत्यपूर्वकरणादौ तदुदयाभाव । अन्तिमसंहननत्रयोदये तु श्रेणिमारोढुमेव न शक्यते, तथाविधशुद्धेरभावादित्युत्तरेषु तदुदयाभाव । 'हासाइछक्कअतु त्ति' हास्यमादौ यस्य षट्कस्य तद्धास्यादिषट्क हास्यरत्यरतिशोकभयजुगुप्साख्य तस्यान्तोऽपूर्वकरणे भवति, सङ्क्लिष्टतरपरिणामत्वादेतस्य, उत्तरेषा च विशुद्धतरपरिणामत्वात्तेषु तदुदयाभाव इत्युत्तरेष्वप्ययमुदयव्यवच्छेदहेतुरनुसरणीय । तत इद प्रकृतिषट्क पूर्वोक्तद्विसप्ततेरपनीयते, शेषा 'छसट्ठि अनियट्टि त्ति' षट्षष्टिरनिवृत्तिबादरे भवति, उदयमाश्रित्येति शेष. । 'वेयतिग ति' वेदत्रिक स्त्रीवेदपुवेदनपुसकवेदाख्यम् ॥ १८ ॥

संजलणतिगं छछेओ सट्ठि सुहुमंमि तुरियलोभंतो। उवसतगुणे गुणसट्ठि रिसहनारायदुगअंतो ॥१९॥

टीका–सज्वलनत्रिक संज्वलनक्रोधमानमायारूपमित्येतासा षण्णा प्रकृतीनामनिवृत्तिबादरे छेदो भवति । तत्र स्त्रिया श्रेणिमारोहन्त्या स्त्रीवेदस्य प्रथममुदयच्छेद तत क्रमेण पुवेदस्य नपुसकवेदस्य संज्वलनत्रयस्य चेति । पुंसस्तु श्रेणिमारोहत प्रथम पुंवेदस्योदयच्छेदस्तत क्रमेण स्त्रीवेदस्य षण्ढवेदस्य सज्वलनत्रयस्य चेति । षण्ढस्य तु श्रेणिमारोहत प्रथम षण्ढवेदस्योदयच्छेदस्तत स्त्रीवेदस्य पुवेदस्य सज्वलनत्रयस्य चेत्येतत्प्रकृतिषट्क पूर्वोक्तषट्षष्टेरपनीयते, शेषा 'सट्ठि सुहुमंमि त्ति' षष्टि सूक्ष्मसपराये उदये भवति । अत्र च तुर्यलोभान्तश्चतुर्थलोभान्त सज्वलनलोभव्यवच्छेद इत्यर्थ । तत इयमेका प्रकृति षष्टेरपनीयते,शेषा उपशान्तगुणे उपशान्तमोहगुणस्थाने एकोनषष्टिरुदये भवति।'रिसहनारायदुग तु त्ति'

ऋषभनाराचद्विकं ऋषभनाराचसंहनननाराचसंहननाख्यं तस्मान्त उपशान्तगुणे भवति, प्रथमसंहननेनैव क्षपकश्रेण्या-रोहणात्क्षीणमोहादौ तदुदयाभावः । उपशमश्रेणिरतु प्रथमसंहननत्रयेणारुह्यते, तत इदं प्रकृतिद्वयं पूर्वोक्तैकोनषष्टेरपनीयते, शेषा ॥ १९ ॥

**सगवंन खीण डुचरमि निद्दडुगंतो अचरमि पणपंना। नाणंतरायदंसणचउ छेउ सजोगि बायाला ॥२०॥**

टीका–सप्तपंचाशत् 'खीण त्ति' क्षीणमोहस्य 'दुचरिमि त्ति' द्विचरमसमये चरमसमयादर्वाक्द्वितीयसमये निद्राद्विकस्य निद्राप्रचलाख्यस्य क्षीणद्विचरमसमयेऽन्त इत्येतत्प्रकृतिद्वयं पूर्वोक्तसप्तपंचाशतोऽपनीयते, ततः 'अचरमि त्ति' चरमसमये क्षीणमोहस्येति शेषः, 'पणपंन त्ति' पंचपंचाशदुदये भवति । इदमुक्तं भवति–निद्राप्रचलयोः क्षीणमोहस्य द्विचरमसमये उदयच्छेदः । अपरे पुनराहुः–उपशान्तमोहे निद्राप्रचलयोरुदयच्छेदः, पंचानामपि निद्राणां घोलनापरिणामे भवत्युदयः, क्षपकाणां त्वतिविशुद्धत्वान्न निद्रोदयसंभवः, उपशमकानां पुनरनतिविशुद्धत्वात् स्यादपीति । 'नाणंतरायदंसणचउ त्ति' ज्ञानावरणपंचकं मतिश्रुतावधिमनःपर्यायकेवलज्ञानावरणरूपं, अन्तरायपंचकं दानलाभभोगोपभोगवीर्यान्तरायाख्यं, दर्शनचतुष्कं चक्षुरचक्षुरवधिकेवलदर्शनावरणलक्षणमित्येतासां क्षीणमोहचरमसमये छेदो भवति, तदनन्तरं क्षीणत्वादित्येतत्प्रकृतिचतुर्दशकं पूर्वोक्तपंचपंचाशतोऽपनीयते, शेषैकचत्वारिंशत् तीर्थंकरनामोदयाच्च तत्प्रक्षेपे द्वाचत्वारिंशत् सयोगिकेवलिनि भवतीति । एतदेवाह–'सजोगि बायालत्ति' स्पष्टम् ॥ २० ॥

**तित्थुदया,उरला थिरखगइडुग परित्ततिग छ संठाणा। अगुरुलहुवंनचउ निमिणतेयकंमाइसंघयणं॥२१॥**

टीका–ननु पचपचाशतो ज्ञानावरणपचकान्तरायपचकदर्शनचतुष्कलक्षणप्रकृतिचतुर्दशकापनयन एकचत्वारिशदेव भवति, तत कथमुक्त सयोगिनि द्विचत्वारिशदित्याह–'तित्थुदय त्ति' तीर्थोदयात्तीर्थकरनामोदयादित्यर्थ । यत सयोग्यादौ तीर्थकरनामोदयो भवति। यदुक्तम्–"उदए जस्स सुरासुरनरवइनिवहेहि पूइउ होइ। त तित्थयरनाम तस्स विवागो हु केवलिणो ॥ १ ॥" तत पूर्वोक्तैकचत्वारिशति तीर्थकरनाम क्षिप्यते, जाता द्विचत्वारिशत् सा च सयोगिनि भवतीति । 'उरलाथिरखगइदुग त्ति' द्विकशब्दस्य प्रत्येक योगादौदारिकद्विकं औदारिकशरीरौदारिकागोपागलक्षण, अस्थिरद्विकमस्थिराशुभाख्य, खगतिद्विक शुभविहायोगत्यशुभविहायोगतिरूप । 'परित्ततिग त्ति' प्रत्येकत्रिक प्रत्येकस्थिरशुभाख्य । 'छ सठाण त्ति' षट् सस्थानानि समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुंडस्वरूपाणि । सस्थानशब्दस्य च पुस्त्व प्राकृतलक्षणवशात्। यदाह पाणिनि –"स्वप्राकृतलक्षणे लिग व्यभिचार्यपि।" 'अगुरुलहुवनचउ त्ति' चतु शब्दस्य प्रत्येक सबन्धादगुरुलघुचतुष्कमगुरुलघूपघातपराघातोच्छ्वासाख्य, वर्णचतुष्क वर्णगन्धरसस्पर्शरूप । 'निमिण त्ति' निर्माण, 'तेय त्ति' तैजसशरीर, 'कम त्ति' कार्मणशरीर, 'आइसहनन ति' प्रथमसहनन वज्रर्षभनाराचसहननमित्यर्थ ॥ २१ ॥

## दूसर सूसर सायासाएगयर च तीस वुछेउ। वारस अजोगि सुभगाइज्जजसंनयरवेयणिय ॥२२॥

---

१ उदये यस्य सुरासुरनरपतिनिवहै पूजितो भवति। तत्तीर्थकरनाम तस्य विपाको हि केवलिन ॥ १ ॥

टीका–दुःस्वरं, सुस्वरं, सातं च सुखं असातं च दुःखं सातासाते तयोरेकतरमन्यतरत् सातं वाऽसातं वेत्यर्थः, एतासां त्रिंशतः प्रकृतीनां सयोगिकेवलिन्युदयव्यवच्छेदः। तत्रैकतरवेदनीयं यदयोगिकेवलिनि न वेदयितव्यं ततसयोगिकेवलिचरमसमये व्युच्छिन्नोदयं भवति, न पुनरुत्तरत्रोदयाभावात्। दुःस्वरसुस्वरनाम्नोस्तु भाषापुद्गलविपाकित्वाद्भाषयोगिनामेवोदयः, शेषाणां पुनः शरीरपुद्गलविपाकित्वात् काययोगिनामेव। तेन हि योगेन पुद्गलग्रहणपरिणामालंबनानि, ततस्तेषु गृहीतेष्वेतेषां कर्मणां स्वस्वविपाकेनोदयो भवति, तेनायोगिकेवलिनि तद्योगाभावात्तदुदयाभावः। इत्येतास्त्रिंशत्प्रकृतयः पूर्वोक्तद्विचत्वारिंशतोऽपनीयन्ते, ततः शेषा द्वादश प्रकृतयोऽयोगिकेवलिन्युदयमाश्रित्य भवन्तीति। एतदेवाह–'बारस अजोगीत्यादि' द्वादश प्रकृतयोऽयोगिकेवलिनि [1]चरमसमयान्ताश्चरमसमयेऽयोगिकेवलिगुणस्थानस्यान्तो व्यवच्छेदो यासां ताश्चरमसमयान्तास्ता एवाह–सुभगं, आदेयं, 'जस त्ति' यशःकीर्तिनाम, अन्यतरवेदनीयं सयोगिकेवलिचरमसमयव्यवच्छिन्नोद्धरितं वेदनीयमित्यर्थः॥ ३२॥

तसतिग पणिंदि मणुयाउगइ जिणुच्चं ति चरमसमयंतो।

उदउ संमत्तो॥

टीका–'तसतिगं ति' त्रसत्रिकं त्रसबादरपर्याप्ताख्यं, 'पणिंदि त्ति' पंचेन्द्रियजातिः, 'मणुयाउगइ त्ति' मनुजशब्दस्य

---

१ इदं पदमनन्तरगाथोक्तम्।

प्रत्येक योगान्मनुजायुर्मनुजगति, 'जिण त्ति' जिननाम, 'उच्च ति' उच्चैर्गोत्रम्। इतिशब्दो द्वादशप्रकृतिपरिसमाप्तिद्योतक इति ॥

उदयाधिकारमेन विवृण्वता यन्मयार्जित पुण्यम्। दुष्कर्मोदयरहितो लोक' सर्वोऽपि तेनास्तु ॥ १ ॥

॥ इति श्रीदेवेन्द्रसूरिविरचिताया स्वोपज्ञकर्मस्तवटीकायामुदयाधिकार समाप्त ॥

अथ तस्य भगवत कस्मिन् गुणस्थाने कियत्य प्रकृतय उदीरणामाश्रित्य व्यवच्छिना इत्येतदतिदेशद्वारेणाह—

## उदउव्वुदीरणा परमपमत्ताईसगगुणेसु ॥ २३ ॥

टीका—उदयवदुदीरणा पूर्वोक्तशब्दार्था गुणस्थानेषु वक्तव्या। किमुक्तं भवति ? यावतीना प्रकृतीनामुदयस्वामी तावतीनामुदीरणास्वाम्यपीति। अतिप्रसगनिवृत्त्यर्थमाह—'परमपमत्ताईसगगुणेसु त्ति' पर केवलमियान् विशेष, अप्रमत्त आदौ येषा तेऽप्रमत्तादय, गुणा गुणस्थानानि, सप्त च ते गुणाश्च सप्तगुणा, अप्रमत्तादयश्च ते सप्तगुणाश्चाप्रमत्तादिसप्तगुणास्तेष्वप्रमत्तादिसप्तगुणेषु ॥ २३ ॥

किमित्याह—

## एसा पयडितिगूणा वेयणियाहारजुगल थीणतिग। मणुयाउ पमत्तंता अजोगि अणुदीरगो भगवं २४

॥ उदीरणा समत्ता ॥

टीका–एषा उदीरणा प्रकृतित्रिकेणोना हीना वक्तव्या। इयमत्र भावना–मिथ्यादृष्टेः सप्तदशोत्तरशतस्योदयः, उदीरणाप्येवम्। सास्वादनस्यैकादशशतस्योदयस्तथैवोदीरणापि। मिश्रस्योदयः शतस्य, उदीरणापि। अविरतसम्यग्दृष्टेरुदयश्चतुरुत्तरशतस्य, तथैवोदीरणा। देशविरतस्य सप्ताशीतेरुदयः, उदीरणापि। प्रमत्तस्यैकाशीतेरुदयः, उदीरणापि च। अप्रमत्ते उदयः षट्सप्ततेः, उदीरणा त्रिसप्ततेः। अपूर्वकरणे उदयो द्विसप्ततेः, उदीरणा एकोनसप्ततेः। अनिवृत्तिबादरे उदयः षट्षष्टेः, उदीरणा त्रिषष्टेः। सूक्ष्मसंपराये उदयः षष्टेः, उदीरणा सप्तपंचाशतः। उपशान्तमोहे उदय एकोनषष्टेः, उदीरणा षट्पंचाशतः। क्षीणमोहे उदयः सप्तपंचाशतः, उदीरणा चतुष्पंचाशतः। सयोगिकेवलिन्युदयो द्विचत्वारिंशतः, उदीरणा एकोनचत्वारिंशतः इति। ननु केन प्रकृतित्रिकेणाप्रमत्तादिषूदीरणोनेत्याशंक्याह–'वेयणियाहारजुगल त्ति' युगलशब्दस्य प्रत्येकं योजनाद्वेदनीययुगलं सातवेदनीयासातवेदनीयरूपं, आहारकयुगलमाहारकशरीराहारकांगोपांगलक्षणं, 'थीणतिगं ति' स्त्यानर्द्धित्रिकं निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरूपं, मनुष्यायुः, इत्येतासामष्टानां प्रकृतीनां प्रमत्तेऽन्तो व्यवच्छेद उदीरणां प्रतीत्य यासां ताः प्रमत्तान्ताः। अयमत्र भावार्थः–स्त्यानर्द्धित्रिकं प्रमादरूपत्वादप्रमत्तादिषु नास्त्येव, कुतस्तेषु तदुदीरणा?। आहारकशरीरं च विकुर्वाण औत्सुक्याद्यतिः प्रमत्त एवेति अप्रमत्तादिषु तदपि नास्ति, कुतस्तेषु तदुदीरणा?। सातासातमनुजायुषां हि प्रमादसहितेनैव योगेनोदीरणा भवति नान्येनेत्युत्तरेषु न तदुदीरणा। तदयमत्र तात्पर्यार्थः–उदयमाश्रित्य प्रमत्ते हि स्त्यानर्द्धित्रिकाहारकद्विकाख्यपंचप्रकृतयो व्यवच्छिद्यन्ते, उदीरणामाश्रित्य पुनः स्त्यानर्द्धित्रिकाहारकद्विकसातासातमनुजायुर्लक्षणा अष्टौ प्रकृतयः, इति मनुजायुःसातासातरूपप्रकृतित्रयेणाप्रमत्तादिषूना

उदीरणा वाच्येति । अयोगी अयोगिकेवली अनुदीरको न किमपि कर्मोदीरणया क्षिपति, योगाभावात्, उदीरणा हि योगकृतकरणविशेष इति भगवान् परमप्रयत्नवान् सर्वसंवररूपचारित्रधर्मवान् वेत्यर्थ ॥ २४ ॥

सुकृत मया यदाप्त विवृण्वतोदीरणाधिकारमिमम् । तेनास्तु सर्वलोको दुष्कर्मोदीरणारहित ॥ १ ॥

॥ इति श्रीदेवेन्द्रसूरिविरचिताया स्वोपज्ञकर्मस्तवटीकायामुदीरणाधिकार समाप्त ॥

अथ सत्तालक्षणकथनपूर्वक यथा तेन भगवता त्रिलोकाधिपतिना श्रीमद्वर्धमानस्वामिना सत्तामाश्रित्य गुणस्थानेषु कर्माणि क्षपितानि तथा प्रतिपादयन्नाह–

**सत्ता कम्माण ठिई, बंधाईलद्धअत्तलाभाणं । संते अडयालसयं जा उवसमु विजिणु बियतइए ॥२५॥**

टीका–सत्ता उच्यत इति शेष । किमित्याह–कर्मणा ज्ञानावरणादियोग्यपरमाणूना स्थितिरवस्थान सद्भाव इति पर्याया । किंविशिष्टाना कर्मणामित्याह–बन्धादिलब्धात्मलाभाना, तत्र मिथ्यात्वादिभिर्हेतुभि कर्मयोग्यपुद्गलैरात्मनो वह्न्यय पिण्डवदन्योऽन्यानुगमाभेदात्मक सम्बन्धो बन्ध । आदिशब्दात्सक्रमकरणादिपरिग्रह । ततो बन्धादिभिर्लब्ध प्राप्त आत्मलाभ आत्मस्वरूप यैस्तानि बन्धादिलब्धात्मलाभानि तेषा बन्धादिलब्धात्मलाभाना कर्मणा या स्थिति सा सत्ता तस्या 'सत त्ति' सत्कर्मणि सत्तायामष्टाचत्वारिंश शत प्रकृतीना भवति । कियन्ति गुणस्थानानि यावदित्याह–'जा उवसमुत्ति' यावदुपशममुपशान्तमोहम् । अयमर्थ –मिथ्यादृष्टिगुणस्थानात्प्रभृत्युपशान्तमोहगुणस्थान यावदष्टाचत्वारिंश

विगतं जिननाम यस्मात्तद्विजिनं जिननामविर-

शतं सत्तायां भवति । किमविशेषेण ? नेत्याह–'विजिणु वियतइए त्ति' विगतं जिननाम यस्मात्तद्विजिनं जिननामविर- तृतीये मिश्रदृष्टौ, "सासणमिस्सरहिएसु वा तित्थ-

हितं तदेवाष्टाचत्वारिंशं शतं भवति । क्वेत्याह–द्वितीये सास्वादने, तृतीये मिश्रदृष्टौ, इदमत्र हृदयम्–इह मिथ्यादृष्टेरष्टचत्वारिंशमपि

मिति" वचनात् सास्वादनमिश्रयोः सप्तचत्वारिंशं शतं भवतीत्यर्थः । इदमत्र हृदयम्–इह मिथ्यादृष्टेरष्टचत्वारिंशमपि तीर्थकरनाम्नो बन्धमारभते तदासौ नरकेपूत्पद्य-

शतं सत्तायां, यदा हि प्राग्बद्धनरकायुः क्षायोपशमिकं सम्यक्त्वमवाप्य तीर्थकरनाम्नो बन्धमारभते तदासौ नरकेपूत्पद्य-

मानः सम्यक्त्वमवश्यं वमतीति मिथ्यादृष्टेस्तीर्थकरनाम्नोऽपि सत्ता संभवति । सास्वादनमिश्रयोस्तु तस्मिन्नेव जिननामर-

हिते सप्तचत्वारिंशं शतं सत्तायां, जिननामसत्कर्मणो जीवस्य तद्भावानवाप्तेः, तद्बन्धारंभस्य च शुद्धसम्यक्त्वप्रत्ययत्वात् ।

यदुक्तं बृहत्कर्मस्तवभाष्ये–"तित्थयरेण विहीणं सीयालसयं तु संतए होइ । सासायणंमि उ गुणे संमामीसे य पयडीणं

॥ १ ॥" अविरतसम्यग्दृष्ट्यादीनामक्षिप्तदर्शनसप्तकानामष्टचत्वारिंशस्यापि शतस्य सत्ता संभवतीति ॥ २५ ॥

**अपुव्वाइचउक्के अण तिरिनिरयाउ विणु बिआलसयं।संमाइचउसु सत्तगखयंमि इगचत्तसयमहवा २६**

टीका–गाथापर्यन्तवर्त्यथवाशब्दस्य संबन्धात् पूर्वं तावदष्टचत्वारिंशं शतं सत्तायामुक्तम्, अथवाऽयमपरः सत्तामा-

श्रित्य भेदस्तथाहि- अपूर्वादिचतुष्केऽपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहरूपे, 'अण त्ति' अनन्तानुबन्धिच-

तुष्कं, 'तिरिनिरयाउ त्ति' आयुःशब्दस्य प्रत्येकं योगात्तिर्यगायुर्नरकायुश्च विना द्विचत्वारिंशं शतं भवतीति । अयमा-

---

१ सास्वादनमिश्ररहितेषु वा तीर्थकरं । २ तीर्थकरेण विहीनं सप्तचत्वारिंशच्छतं तु सत्तायां भवति । सास्वादने तु गुणे सम्यग्मिश्रे च प्रकृतीनाम् ॥ १ ॥

शय'—य कश्चिद्विसयोजितानन्तानुबन्धिचतुष्को बद्धदेवायुर्मनुजायुषि वर्तमान उपशमश्रेणिमारोहति, तस्य तिर्यगायुर्नरकायुरनन्तानुबन्धिचतुष्कलक्षणप्रकृतिषट्करहित शेष द्विचत्वारिश शतं सत्ताया प्राप्यते। यदुक्त बृहत्कर्मस्तवभाष्ये "अणतिरिनारयरहिय वायालसय वियाण सतमि। उवसामगस्स पुवा नियट्टिसुहुमोव सतमि ॥ १ ॥" 'समाइचउसु त्ति' सम्यक्त्वादिचतुर्षु अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तेषु, 'सत्तगखयमि त्ति' अनन्तानुबन्धिचतुष्कमिथ्यात्वमिश्रसम्यक्त्वलक्षणसप्तकक्षये सत्येकचत्वारिश शतमथवा सत्ताया भवति। इहाप्यथवाशब्द आवृत्त्या योज्यते। यदुक्त बृहत्कर्मस्तवसूत्रे—"अणमिच्छमीससम अविरयसमाई अप्पमत्तता" इति ॥ २६ ॥

**खवग तु पप्प चउसु वि पणयालं नरयतिरिसुराउ विणा। सत्तग विणु अडतीसं जा अनियट्टी पढमभागो**

टीका—क्षपक 'तु' पुनरर्थे, क्षपक पुन प्रतीत्याश्रित्य चतुर्ष्वपि अविरतदेशविरतप्रमत्ताप्रमत्तेषु 'पणयाल त्ति' पचचत्वारिश शतमथवा भवति। अथवाशब्द इहापि सबध्यते। कथमित्याह—'नरयतिरिसुराउ विण त्ति' आयु शब्दस्य प्रत्येक योगान्नरकायुस्तिर्यगायु सुरायुर्विनाऽन्तरेण। इदमुक्त भवति—यो जीवो नारकतिर्यक्सुरेषु चरम तद्भवमनुभूय

---

१ अनतिर्यङ्नारकरहित द्वाचत्वारिंशच्छत विजानीहि सत्तायाम्। उपशामकस्य अपूर्वस्याऽनिवृत्ते (अपूर्वस्येत्यादौ विभक्तिव्यत्ययात्षष्ठी) सूक्ष्मस्य (सूक्ष्मो वा सत्तायाम् अनेत्यनेनानन्तानुबधिचतुष्क गृह्यते) ॥१॥ २ अनमिथ्यामिश्रसम्यक् अविरतसम्यक्त्वादप्रमत्तान्तम्। अत्राप्यनेत्यनेनानन्तानुबधिचतुष्क।

मनुष्यतयोत्पन्नस्तस्य नारकतिर्यक्सुरायूंषि स्वस्वभवे व्यवच्छिन्नसत्ताकानि जातानि, पुनस्तदनवाप्तेः। उक्तं च—"सुरनरतिरियआउं नियभवे सव्वजीवाणं" इति। इयं चैतेषु गुणस्थानेषु सामान्यजीवानां संभवमाश्रित्य सत्ता वर्णिता, न त्वधिकृतस्तवस्तुत्यस्य चरमजिनपरिवृढस्य, अस्याः सुरनारकतिर्यगायुःसंभवापेक्षणीयत्वात्, जिनस्य च तदसंभवात्, तस्यापि च प्राग्भवापेक्षया संभवो वाच्यः। इदमेव पंचचत्वारिंशं शतं-सप्तकमनन्तानुबन्धिमिथ्यात्वमिश्रसम्यक्त्वाख्यं विनाऽष्टात्रिंशं शतं भवति। कियन्ति गुणस्थानानि यावदित्याह—'जा अनियट्टीपढमभागु त्ति' इहानिवृत्तिबादराख्यस्य नव भागाः क्रियन्ते, ततोऽविरते देशविरते प्रमत्तेऽप्रमत्ते निवृत्तिबादरेऽनिवृत्तिबादरस्य च प्रथमो भागस्तावदष्टात्रिंशं शतं भवति। उक्तं च—"संते अडयालसयं खवगं तु पडुच्च होइ पणयालं। आउतिगं नत्थि तहिं सत्तगखीणंमि अडतीसं ॥ १ ॥ पणयालं अडतीसं अविरयसंमाउ अप्पमत्तु त्ति। अप्पुव्वे अडतीसं नवरं खवगंमि बोधव्वं ॥ २ ॥ इति" २७

अथ क्षपकश्रेणिमधिकृत्यानिवृत्तिबादरादिषु प्रकृतिसत्ता वर्ण्यते उपशमश्रेणिसत्तायास्त्विह नाधिकार इति—

**थावरतिरिनिरयायवदुग थीणतिगेग विगल साहारं। सोलखउ दुवीससयं बियंसि बियतियकसायंतो॥२८॥**

टीका—इहानिवृत्तिबादरस्य प्रथमे भागेऽष्टात्रिंशं शतं सत्तायां भवति। तत्र च 'थावरतिरिनिरयायवदुग त्ति' द्विकश-

---

१ सुरनरतिर्यगायुर्निजकभवे सर्वजीवानाम्। २ सत्तायामष्टचत्वारिंशच्छतं क्षपकं तु प्रतीत्य भवति पंचचत्वारिंशं। आयुःत्रिकं नास्ति तत्र सप्तके क्षीणेऽष्टात्रिंशत् ॥१॥ पंचचत्वारिंशदष्टात्रिंशदविरतसम्यक्त्वादप्रमत्तान्तमिति। अपूर्वेऽष्टात्रिंशं नवरं क्षपके बोद्धव्यम् ॥२॥

व्दस्य प्रत्येक योगात् स्थावरद्विक स्थावरसूक्ष्मलक्षण, तिर्यग्द्विक तिर्यग्गतितिर्यगानुपूर्वीरूप, नरकद्विक नरकगतिनरकानुपूर्वीलक्षण, आतपद्विकमातपोद्योताख्य। 'थीणतिग त्ति' स्त्यानर्द्धित्रिक निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिलक्षण। 'एग त्ति' एकेन्द्रियजाति, 'विगल त्ति' विकलेन्द्रियजातयो द्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजातिलक्षणा 'साहार त्ति' साधारणनामेत्येतासा षोडशाना प्रकृतीना क्षय सत्तामाश्रित्य भवति, ततोऽनिवृत्तिबादरस्य खशे द्वितीयभागे द्वित्रिंश शत भवति। तत्र 'नियतियकसायतु त्ति' कषायशब्दस्य प्रत्येक योगाद्द्वितीयकषाया अप्रत्याख्यानावरणाश्चत्वार, तृतीयकषाया प्रत्याख्यानावरणाश्चत्वार इत्येतासामष्टाना प्रकृतीनामन्त क्षय। ततस्तृतीयाशे चतुर्दशशत भवतीति २८

एतदेवाह–

**तइयाइसु चउदसतेरबारछपणचउतिहियसय कमसो। नपुइत्थिहासछगपुसतुरियकोहमयमायखऊ २९**

टीका–तृतीयादिषु भागेषु चतुर्दश च त्रयोदश च द्वादश च षट् च पच च चत्वारि च त्रीणि चेति द्वन्द्व, तैरधिक शत 'तिहियसय' इत्यत्राकारलोपो विभक्तिलोपश्च प्राकृतत्वात्, क्रमश' क्रमेण सत्ताया भवति। कथमित्याह–'नपु इत्थि' इत्यादि नपु च नपुसकवेद, स्त्री च स्त्रीवेद, हास्यषट्क च हास्यरत्यरतिशोकभयजुगुप्साख्य, पुमाश्च पुंवेद, नपुस्त्रीहास्यषट्कपुमास। क्रोधश्च कोप', मदश्च मदो मानोऽहकार इति पर्याया, माया च निकृति, क्रोधमदमाया·। तुर्याश्चतुर्या सज्वलना' क्रोधमदमायास्तुर्यक्रोधमदमाया। नपुस्त्रीहास्यषट्कपुमासश्च तुर्यक्रोधमदमायाश्च नपुस्त्रीहास्यषट्कपुतुर्यक्रोधमदमायास्तासा क्षयो नपुस्त्रीहास्यषट्कपुतुर्यक्रोधमदमायाक्षय। 'मायखऊ' इत्यत्र ह्रस्वत्व "दीर्घह्रस्वौ मिथोवृत्तौ" इत्यनेन

प्राकृतसूत्रेण । इति गाथाक्षरार्थः । भावार्थस्त्वयम्–अनिवृत्तिबादरस्य तृतीये भागे द्वितीयतृतीयकषायाष्टकक्षये चतुर्दशाधिकं शतं, चतुर्थभागे नपुंसकवेदक्षये त्रयोदशाधिकं शतं, पंचमे भागे स्त्रीवेदक्षये द्वादशाधिकं शतं, षष्ठे भागे हास्यषट्कक्षये षडधिकं शतं, सप्तमे भागे पुंवेदक्षये पंचाधिकं शतं, अष्टमे भागे संज्वलनक्रोधक्षये चतुरधिकं शतं, नवमे भागे संज्वलनमानक्षये त्र्यधिकं शतं, संज्वलनमायाक्षये तु द्व्यधिकं शतं सत्तायां भवति । तच्च सूक्ष्मसंपराये ॥ २९ ॥

तथा चाह–

**सुहुमि डुसय लोहंतो खीणडुचरिमेगसउ डुनिद्दखउ । नवनवइ चरमसमए चउदंसणनाणविग्घंतो॥३०**

टीका–'सुहुमि त्ति' सूक्ष्मसंपराये द्विशतं द्वाभ्यामधिकं शतं सत्तायां भवति । तत्र च लोभान्तः संज्वलनलोभस्य क्षयः । ततः 'खीणडुचरिमेगसउ त्ति' क्षीणमोहद्विचरमसमये एकशतमेकाधिकं शतं सत्तायाम् । तत्र च 'डुनिद्दखउ त्ति' निद्राप्रचलयोर्द्वयोः क्षयो भवति, ततो नवनवतिश्चरमसमये क्षीणमोहगुणस्थानस्येति शेषः । तत्र चत्वारि च तानि दर्शनानि च चतुर्दर्शनानि चक्षुरचक्षुरवधिकेवलदर्शनावरणाख्यानि, ज्ञानानि ज्ञानावरणानि मतिश्रुतावधिमनःपर्यायकेवलज्ञानावरणलक्षणानि पंच, विघ्नानि दानलाभभोगोपभोगवीर्यविघ्नरूपाणि पंच, तेषामन्तो भवति । ततः ॥ ३० ॥

**पणसीइ सयोगि अजोगि डुचरिमे देवखगइगंधडुगं । फासठ वंनरसतणुबंधणसंघायपण निमिणं ॥३१॥**

टीका–पंचाशीतिः सयोगिकेवलिनि सत्तायां भवति । ततः 'अजोगि डुचरिमे त्ति' अयोगिकेवलिनि द्विचरमसमये ।

इत्येतासा द्विसप्ततिप्रकृतीना क्षयो भवति । ता एवाह–'देवखगइगधदुग ति' द्विकशब्दस्य प्रत्येक योगादेवद्विक देवगति-देवानुपूर्वीरूप, खगतिद्विक शुभविहायोगत्यशुभविहायोगतिरूप, गन्धद्विक सुरभिगन्धासुरभिगन्धाख्य । 'फासट्ठ त्ति' स्पर्शाष्टक गुरुलघुमृदुखरशीतोष्णस्निग्धरूक्षाख्यम् । 'वनरसतणुवधणसघायपण त्ति' पचकशब्दस्य प्रत्येक सवन्धाद्वर्ण-पचक कृष्णनीललोहितहारिद्रशुक्लाख्य, रसपंचक तिक्तकटुकषायाम्लमधुररूप, तनुपंचकमौदारिकवैक्रियाहारकतैजसका-र्मणतनुलक्षण, एव तनुनाम्ना वन्धनपचक सघातनपचक च वाच्यम् । 'निमिण त्ति' निर्माणमिति ॥ ३१ ॥

## सघयणअथिरसंठाणछक्क अगुरुलहुचउ अपज्जत्तं । साय व असायं वा परित्तुवंगतिग सुसर नियं ॥३२॥

टीका–षट्कशब्दस्य प्रत्येक योगात् सहननषट्क वज्रऋषभनाराचऋषभनाराचनाराचार्धनाराचकीलिकासेवार्तसंहननाख्य, अस्थिरषट्क अस्थिराशुभदुर्भगदु स्वरानादेयायश कीर्तिरूप, सस्थानषट्क समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुड-सस्थानाख्य । अगुरुलघुचतुष्क अगुरुलघूपघातपराघातोच्छ्वासाख्य । अपर्याप्तम् । सात वाऽसात वैकतरवेदनीयम्, यद-नुदयावस्थम् । 'परित्तुवगतिग त्ति' त्रिकशब्दस्य प्रत्येक सवन्धात् प्रत्येकत्रिक प्रत्येकस्थिरशुभाख्य, उपागत्रिक औदा-रिकवैक्रियाहारकागोपागरूपम् । सुस्वर, 'निय ति' नीचैर्गोत्रमिति ॥ ३२ ॥

## विसयरि खउ य चरिमे तेरस मणुयतसतिग जसाइज्जं।सुभग जिणुच्च पणिंदिय सायासाएगयरछेउ॥३३॥

टीका–इत्येतासा द्विसप्ततिप्रकृतीनामयोगिकेवलिद्विचरमसमये सत्तामाश्रित्य क्षयो भवति । तत पूर्वोक्तपचाशीतेरिमा

द्विसप्ततिप्रकृतयोऽपनीयन्ते शेषास्त्रयोदश प्रकृतयोऽयोगिचरमसमये क्षीयन्ते । तथा चाह–'विसयरिखउं त्ति' स्पष्टम् । 'चः' पुनरर्थे व्यवहितसंबन्धश्च । चरमसमये पुनः अयोगिकेवलिनस्त्रयोदशप्रकृतीनां क्षयो भवति । 'मणुयतसतिग त्ति' त्रिकशब्दस्य प्रत्येकं योगान्मनुजत्रिकं मनुजगतिमनुजानुपुर्वीमनुजायुर्लक्षणं, त्रसत्रिकं त्रसबादरपर्याप्ताख्यम् । 'जसाइज्जं ति' यशःकीर्तिनाम, आदेयनाम । 'सुभगजिणुच्च त्ति' सुभगनाम, जिननाम, उच्चैर्गोत्रं । 'पणिंदिय त्ति' पंचेन्द्रियजातिः सातासातयोरेकतरं तस्य छेदः सत्तामाश्रित्य क्षय इति ॥ ३३ ॥

अत्रैव मतान्तरमाह–

**नरअणुपुव्वि विणा वा बारस चरिमसमयंमि जो खविउंपत्तो सिद्धिं देविंदवंदियं नमह तं वीरं ॥३४॥**

टीका–नरानुपुर्वीं विना मनुष्यानुपुर्वीमन्तरेण 'वा' शब्दो मतान्तरसूचको द्वादशप्रकृतीरयोगिकेवलिचरमसमये यः क्षपयित्वा सिद्धिं प्राप्तस्तं वीरं नमतेति संटंकः । अयमत्राभिप्रायः–मनुजानुपुर्व्या अयोगिद्विचरमसमये सत्तव्यवच्छेदः, उदयाभावात् । उदयवतीनां हि द्वादशानां स्तिबुकसंक्रमाभावात् स्वानुभवेन दलिकं चरमसमये दृश्यत इति युक्तस्तासां चरमसमये क्षयः । आनुपूर्वीनाम्नां तु चतुर्णामपि क्षेत्रविपाकित्वाद्भवान्तरालगतावेवोदयस्तेन भवस्थस्य नास्ति तदुदयः, तदुदयाभावाच्चायोगिद्विचरमसमये मनुजानुपूर्व्या अपि सत्ताव्यवच्छेदः तन्मतेऽयोगिकेवलिनो द्विचरमसमये त्रिसप्ततिप्रकृतीनां चरमसमये (च) द्वादशानां क्षय इति । ततो यो भगवान् मातापित्रोर्दिवंगतयोः संपूर्णनिजप्रतिज्ञो भक्तिसंभार-

भ्राजिष्णुरोचिष्णुलोकान्तिकत्रिदशसद्मजन्मभिः पुष्पमाणवकैरिव "सर्वजगज्जीवहिय भयव तित्थ पवत्तेहि" इत्यादिवचोभिर्निवेदिते निष्क्रमणसमये संवत्सरं यावन्निरतरं स्थूरचामीकरधारासारैः प्रावृषेण्यधाराधर इवामुद्रदारिद्र्यसतापप्रसरमवनीमण्डलस्योपशमय्य परस्परमहमहमिकया समायातसुरासुरनरोरगनायकनिकरैर्जय जीव नन्द क्षत्रियवरवृषभेत्यादिवचनरचनया स्तूयमानः सप्राप्य ज्ञातखण्डवनं प्रतिपन्ननिरवद्यचारित्रभारः साधिका द्वादशसंवत्सरीं यावत्परीषहोपसर्गवर्गससर्गमुग्रमधिसह्य परमसितध्यानाकुण्ठकुठारधारया सकलघनघातिवनखण्डनमखण्डमाधाय निर्मलनिकलकेवलालोकावलोकितनिखिललोकालोकः श्रीगौतमप्रभृतिमुनिपुंगवानां तत्त्वमुपदिश्य संसारसरितः सुखंसुखेन समुत्तरणाय भव्यजनानां धर्मतीर्थमुपदर्श्यायोगिकेवलिचरमसमये त्रयोदशप्रकृतीर्द्वादशप्रकृतीर्वा क्षपयित्वा सिद्धिं परमानन्दरूपां प्राप्तः, तं नमत प्रणमत वीरं श्रीवर्धमानस्वामिनं, किविशिष्ट ? देवेन्द्रवन्दितं देवानां भवनपतिव्यन्तरज्योतिष्कवैमानिकानामिन्द्राः स्वामिनो देवेन्द्रास्तैर्वन्दितः शशधरकरनिकरविमलतरगुणगणोत्कीर्तनेन स्तुतः शिरसा च प्रणतः 'वदुइ' स्तुत्यभिवादनयोरिति वचनात् । यद्वा पदैकदेशे पदसमुदायोपचाराद्देवेन्द्रेण देवेन्द्रसूरिणाचार्येण श्रीमज्जगच्चन्द्रसूरिचरणसरसीरुहचञ्चरीकेण वन्दितः सकलकर्मक्षयलक्षणासाधारणगुणसंकीर्तनेन स्तुतः कायेन प्रणत इति । 'नमतेति' प्रेरणायां पंचम्यन्तं क्रियापदं, तच्च श्रोतृणां कथंचिदनाभोगवशतः प्रमादसंभवेऽप्याचार्येण नोद्विजितव्यं, किं तु मृदुमधुरवचोभिः शिक्षानिबन्धनैः श्रोतृणां मनांसि प्रह्लाद्य यथार्हं सन्मार्गप्रवृत्तिरुपदेष्टव्या इति ज्ञापनार्थं। यदाह प्रवचनोपनिषद्वेदी भगवान् हरिभद्रसूरिः—अणुवत्तणाइ सेहा

१ सर्वजगज्जीवहित भगवन् तीर्थं प्रवर्तय ।

पायं पावंति जुग्गयं परमं । रयणं पि गुणुक्करिसं उवेइ सोहं मणुगुणेणं ॥ १ ॥ इत्थ य पमायखलिया पुव्वभासेण कस्स
व न हुंति । जो तेऽवणेइ संमं गुरुत्तणं तस्स सफलं ति ॥ २ ॥ को नाम सारहीणं स हुज्ज जो भद्दवाइणो दमए । दुट्ठे वि
य जो आसे दमेइ तं सारहिं विंति ॥ ३ ॥ इति ॥ २४ ॥

सत्ताधिकारमेनं विवृण्वता यन्मयार्जितं सुकृतम् । निःशेषकर्मसत्तारहितस्तेनास्तु लोकोऽयम् ॥ १ ॥ विष्णोरिव यस्य विभोः पदत्रयी व्यानशे जगन्निखिलम् । कर्ममलपटलमुक्तः स श्रीवीरो जिनो जयतु ॥ २ ॥ कुन्दोज्ज्वलकीर्तिभरैः सुरभीकृतसकलविष्टपाभोगः । शतमखशतविनतपदः श्रीगौतमगणधरः पातु ॥ ३ ॥ तदनु सुधर्मस्वामिजंबूप्रभवादयो मुनिवरिष्ठाः । श्रुतजलनिधिपारीणा भूयांसः श्रेयसे सन्तु ॥ ४ ॥ क्रमात्प्राप्ततपाचार्येत्यभिख्या भिक्षुनायकाः । समभूवन् कुले चान्द्रे श्रीजगच्चन्द्रसूरयः ॥ ५ ॥ जगज्जनितबोधानां तेषां शुद्धचरित्रिणाम् । विनेयाः समजायन्त श्रीमद्देवेन्द्रसूरयः ॥ ६ ॥ स्वान्ययोरुपकाराय श्रीमद्देवेन्द्रसूरिणा । कर्मस्तवस्य टीकेयं सुखबोधा विनिर्ममे ॥ ७ ॥ यद्गदितमल्पमतिना सिद्धान्तविरुद्धमिह किमपि शास्त्रे । विद्वद्भिस्तत्त्वज्ञैः प्रसादमाधाय तच्छोध्यम् ॥ ८ ॥ विबुधवरधर्मकीर्तिश्रीविद्यानन्दसूरिमुख्यबुधैः । स्वपरसमयैककुशलैस्तदैव संशोधिता चेयम् ॥ ९ ॥ कर्मस्तवसूत्रमिदं विवृण्वता यन्मयार्जितं सुकृतम् । सर्वेऽपि कर्मबन्धास्तेन त्रुट्यन्तु जगतोऽपि ॥ १० ॥

॥ इति श्रीदेवेन्द्रसूरिविरचितायां स्वोपज्ञकर्मस्तवटीकायां सत्ताधिकारः समाप्तः ॥

॥ तत्समाप्तौ च समाप्ता लघुकर्मस्तवटीका ॥

# बंधस्वामित्वनामतृतीयकर्मग्रंथः

सम्यग्बन्धस्वामित्वदेशक वर्धमानमानम्य । बन्धस्वामित्वस्य व्याख्येय लिख्यते किंचित् ॥ १ ॥

इह स्वपरोपकाराय यथार्थाभिधान बन्धस्वामित्वप्रकरणमारिप्सुराचार्यो मगलादिप्रतिपादिका गाथामाह–

**बधविहाणविमुक्क वदिय सिरिवद्धमाणजिणचद । गइयाईसु वुच्छ समासउं बंधसामित्तं ॥ १ ॥**

टीका–इह प्रथमार्धेन मगल द्वितीयार्धेनाभिधेय साक्षाडुक्तम्, प्रयोजनसबन्धौ तु सामर्थ्यगम्यौ । तत्र बन्धः कर्मपरमाणूना जीवप्रदेशै सह सबन्धस्तस्य विधान मिथ्यात्वादिभिर्बन्धहेतुभिर्निर्वर्तन बन्धविधान तेन विमुक्त. स तथा त बन्धविधानविमुक्त वन्दित्वा श्रीवर्धमानजिनचन्द्रम् । वक्ष्येऽभिधास्ये समासत सक्षेपतो न विस्तरेण । किमित्याह–बन्धस्वामित्व बन्ध कर्माणूना जीवप्रदेशै सह सबन्धस्तस्य स्वामित्वमाधिपत्य जीवानामिति गम्यते । केषु? 'गइयाईसु त्ति' गतिरादिर्येषा तानि गत्यादीनि, आदिशब्दादिन्द्रियादिपरिग्रह, तेषु गत्यादिषु मार्गणास्थानेषु । अत्र चेय मार्गणास्थानप्रतिपादिका बृहद्बन्धस्वामित्वगाथा "गइ इंदिए य काए जोए वेए कसाय नाणे य । सजम दसण लेसा भव समे सनि आहारे ॥ १ ॥" तत्र गतिश्चतुर्धा नरकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिरिति । इन्द्रिय स्पर्शनरसनघ्राणचक्षुःश्रोत्रभेदात्पचधा, इन्द्रियग्रहणेन च तदुपलक्षिता एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपचेन्द्रिया गृह्यन्ते । कायः षोढा पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात् । योग पचदशधा सत्यमनोयोग,

असत्यमनोयोगः, सत्यासत्यमनोयोगः, असत्यामृषामनोयोगः, सत्यवाग्योगः, असत्यवाग्योगः, सत्यासत्यवाग्योगः, असत्यामृषावाग्योगः, वैक्रियकाययोगः, आहारककाययोगः, औदारिककाययोगः, वैक्रियमिश्रकाययोगः, आहारकमिश्रकाययोगः, औदारिकमिश्रकाययोगः, कार्मणकाययोग इति । वेदस्त्रिधा स्त्रीवेदः पुरुषवेदो नपुंसकवेदश्च । कषायाः क्रोधमानमायालोभाः । ज्ञानं पंचधा मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यायज्ञानं केवलज्ञानं च, ज्ञानग्रहणेन चाज्ञानमपि तत्प्रतिपक्षभूतमुपलक्ष्यते, तच्च त्रिविधं मत्यज्ञानं श्रुताज्ञानं विभंगज्ञानं चेति ज्ञानमार्गणास्थानमष्टधा । संयमश्चारित्रं तत्पंचधा सामायिकं छेदोपस्थापनं परिहारविशुद्धिकं सूक्ष्मसंपरायं यथाख्यातं च, संयमग्रहणेन च तत्प्रतिपक्षभूतो देशसंयमोऽसंयमश्च सूच्यत इति संयमः सप्तधा । दर्शनं चतुर्विधं चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शनं केवलदर्शनं च । लेश्या षोढा कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या । भव्यः तथाविधानादिपारिणामिकभावात् सिद्धिगमनयोग्यो, भव्यग्रहणेन च तत्प्रतिपक्षभूतोऽभव्योऽपि गृह्यते । सम्यक्त्वं त्रिधा क्षायोपशमिकमौपशमिकं क्षायिकं च, सम्यक्त्वग्रहणेन च तत्प्रतिपक्षभूतं मिथ्यात्वं सासादनं मिश्रं च परिगृह्यते । संज्ञी विशिष्टस्मरणादिरूपमनोविज्ञानसहितेन्द्रियपंचकसमन्वितः, तत्प्रतिपक्षभूतः सर्वोऽप्येकेन्द्रियादिरसंज्ञी, सोऽपि संज्ञिग्रहणेन सूचितो द्रष्टव्यः । आहारयति ओजोलोमप्रक्षेपाहाराणामन्यतममाहारमित्याहारकः । ननु ज्ञानादिषु किमर्थमज्ञानादिप्रतिपक्षग्रहणं कृतम् ? उच्यते चतुर्दशस्वपि मार्गणास्थानेषु प्रत्येकं सर्वसांसारिकसत्त्वसंग्रहार्थमिति उक्तरूपेषु गत्यादिषु बन्धस्वामित्वं वक्ष्ये । तत्र बन्धं प्रतीत्य विंशत्युत्तरं प्रकृतिशतमधिक्रियते । तद्याहि, ज्ञानावरणे उत्तरप्रकृतयः पंच, दर्शनावरणे नव, वेदनीये द्वे, मोहे सम्यक्त्व-

मिश्रवर्जा षड्विंशति, आयुषि चतस्र, नाम्नि वेदान्तरसत्त्वेऽपि सप्तषष्टि, गोत्रे द्वे, अन्तराये पच, सर्वमीलने विंशत्युत्तर शतमित्येतच्च प्राक् सविस्तर कर्मविपाके जावितमेव ॥ १ ॥

सप्रति विंशत्युत्तरशतमध्यगतानामेव वक्ष्यमाणार्थोपयोगित्वेन प्रथम कियतीनामपि प्रकृतीना सग्रह पृथक्करोति—

**जिण सुरविउव्वाहारडु देवाउ य नरयसुहुमविगलतिगं। एगिंदि थावरायव नपु मिच्छं हुंड छेवट्ठं ॥२॥ अण मज्झागिइसघयण कुखग निय इत्थि दुहगथीणतिग। उज्जोय तिरिदुग तिरिनराउ नरउरलदुग रिसह ॥ ३ ॥ युग्म ॥**

टीका–जिननाम । सुरद्विक सुरगतिसुरानुपूर्वीरूपम्, वैक्रियद्विक वैक्रियशरीरवैक्रियागोपागलक्षण, आहारकद्विकमाहारकशरीर तदगोपाग च । देवायुष्क च । नरकत्रिक नरकगतिनरकानुपूर्वीनरकायुष्करूप, सूक्ष्मत्रिक सूक्ष्मापर्याप्तसाधारणलक्षण, विकलत्रिक द्वित्रिचतुरिन्द्रियजातय । एकेन्द्रियजाति । स्थावरनाम । आतपनाम । नपुसकवेद । मिथ्यात्व । हुण्डसस्थान । सेवार्तसहनन ॥ २ ॥ 'अण त्ति' अनन्तानुबन्धिक्रोधमानमायालोभा । मध्याकृतयो मध्यमसस्थानानि न्यग्रोधपरिमण्डल सादि वामन कुब्जं चेति, मध्यमसहननानि ऋषभनाराच नाराचमर्धनाराच कीलिका चेति । 'कुखग त्ति' अशुभविहायोगति । नीचैर्गोत्र । स्त्रीवेद. । दुर्भगत्रिक दुर्भगदु स्वरानादेयरूप, स्त्यानर्द्धित्रिक निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिलक्षणम् । उद्योतनाम । तिर्यग्द्विक तिर्यग्गतितिर्यगानुपूर्वी

रूपम्। तिर्यगायुः, नरायुः। नरद्विकं नरगतिनरानुपूर्वीलक्षणं, औदारिकद्विकमौदारिकशरीरमौदारिकांगोपांगनाम च। वज्रऋषभनाराचसंहननम्। इति पंचपंचाशत्प्रकृतिसंग्रहः ॥ ३ ॥

अथैतस्य प्रकृतिसंग्रहस्य यथास्थानमुपयोगं दर्शयन्मार्गणास्थानानां प्रथमं गतिमार्गणास्थानमाश्रित्य बन्धः प्रतिपाद्यते–

**सुरइगुणवीसवज्जं इगसउ ओहेण बंधहिं निरया।तित्थ विणा मिच्छि सयं सासणि नपुचउ विणा छनुई॥४॥**

टीका–"जिण सुरविउवाहारेत्यादि" गाथोक्ताः क्रमेण सुरद्विकाद्येकोनविंशतिप्रकृतीर्वर्जयित्वा शेषमेकोत्तरशतमोघेन नारका बध्नन्ति। अयमत्राभिप्रायः–एता एकोनविंशतिप्रकृतीर्बन्धाधिकृतकर्मप्रकृतिविंशत्युत्तरशतमध्यान्मुक्त्वा शेषस्यैकोत्तरशतस्य नरकगतौ नानाजीवापेक्षया सामान्यतो बन्धः। सुरद्विकाद्येकोनविंशतिप्रकृतीनां तु भवप्रत्ययादेव नारकाणामबन्धकत्वात्। सामान्येन नरकगतौ बन्धमभिधाय संप्रति तस्यामेव मिथ्यादृष्ट्यादिगुणस्थानचतुष्टयविशिष्टं तं दर्शयति-'तित्थ विणेत्यादि' प्रागुक्तमेकोत्तरशतं तीर्थकरनाम विना मिथ्यादृष्टिगुणस्थानके शतं भवति। एतच्च शतं नपुंसकवेदमिथ्यात्वहुंडसंस्थानसेवार्तसंहननप्रकृतिचतुष्कं विना सासादनगुणस्थानके षण्णवतिर्नारकाणां बन्धे ॥४॥

**विणु अणछवीस मीसे बिसयरि संमंमि जिणनराउजुया।इय रयणाइसु भंगो पंकाइसु तित्थयरहीणो ५**

टीका–प्रागुक्तापण्णवतिरनन्तानुबन्ध्यादिषड्विंशतिप्रकृतीर्विना मिश्रगुणस्थाने सप्ततिः। सैव जिननामनरायुर्युता सम्यग्दृष्टिगुणस्थानके द्विसप्ततिः। इत्येवं बन्धमाश्रित्य भंगो रत्नादिषु रत्नप्रभाशर्कराप्रभावालुकाप्रभाभिधानप्रथम-

नरकपृथिवीत्रये द्रष्टव्य । पङ्कप्रभादिषु पुनरेष एव जगत्तीर्थंकरनामहीनो विज्ञेय । अयमर्थ –पङ्कप्रभाधूमप्रभातमःप्रभासु सम्यक्त्वसद्भावेऽपि क्षेत्रमाहात्म्येन तथाविधाध्यवसायाभावात्तीर्थंकरनामबन्धो नारकाणा नास्तीति । ततस्तत्र सामान्येन शत, मिथ्यादृशा च शत, सासादनाना षण्णवति, मिश्राणा सप्तति, अविरतसम्यग्दृष्टीनामेकसप्तति । इह सामान्यपदेऽविरतसम्यग्दृष्टिगुणस्थाने च रत्नप्रभादिर्जगत्तीर्थंकरनाम्ना हीन उक्त । मिथ्यादृष्टिसासादनमिश्रेषु त्रिषु गुणस्थानेषु पुनस्तस्य प्रागेवापनीतत्वात्तदवस्थ एव ॥ ५ ॥

अजिणमणुआउ ओहे सत्तमिए नरदुगुच्च विणु मिच्छे। इगनवई सासाणे तिरिआउ नपुसचउवज्जं ॥६॥

टीका–रत्नप्रभादिनरकत्रयसामान्यबन्धाधिकृतैकोत्तरशतमध्याज्जिननाममनुजायुषी मुक्त्वा शेषा नवनवतिरोघबन्धे सप्तमपृथिव्या नारकाणा भवति । सैव नवनवतिर्नरगतिनरानुपूर्वीरूपनरद्विकोच्चैर्गोत्रैर्विना षण्णवतिर्मिथ्यादृष्टिगुणस्थाने भवति। सैव षण्णवतिस्तिर्यगायुर्नपुसकवेदमिथ्यात्वहुण्डसस्थानसेवार्तसंहननवर्जिता एकनवति सासादने सप्तम्या नारकाणाम्॥६॥

अणचउवीसविरहिया सनरदुगुच्चा य सयरि मीसदुगे ।

सतरसउ ओहि मिच्छे पज्जतिरिया विणु जिणाहारं ॥ ७ ॥

टीका–प्रागुक्तैकनवतिरनन्तानुबन्ध्यादिचतुर्विंशतिप्रकृतिभिर्विरहिता नरद्विकोच्चैर्गोत्राभ्या च सहिता सप्ततिर्भवति सा च ' मीसदुगे त्ति ' मिश्राविरतगुणस्थानद्वये द्रष्टव्या । इह सप्तम्या नरायुस्तावन्न बध्यते एव, तद्बन्धाभा-

वेऽपि च मिश्रगुणस्थानकेऽविरतगुणस्थानके च नरद्विकं बध्यते । अयमर्थः—नरद्विकस्य नरायुषा सह नावश्यं प्रतिबन्धो यत्तुत यत्रैवायुर्बध्यते तत्रैव गत्यानुपूर्वीद्वयमपि तस्यान्यदापि बन्धात् । मिथ्यात्वसासादनयोस्तु कलुषाध्यवसायत्वेन नरद्विकं न बध्यते । एवं नरकगतौ बन्धस्वामित्वं प्रतिपाद्याथ तिर्यग्गतौ तदाह—' सतर सउ ' इत्यादि विंशत्युत्तरशतं जिननामाहारकद्विकं च विना शेषं सप्तदशोत्तरशतमोघे मिथ्यादृष्टिगुणस्थाने च पर्याप्तास्तिर्यञ्चो बध्नन्ति । अत्रौघे तिरश्चां सत्यपि सम्यक्त्वे भवप्रत्ययादेव तथाविधाध्यवसायाभावात्तीर्थंकरनाम्नः संपूर्णसंयमाभावादाहारकद्विकस्य च बन्धो नास्तीति हृदयम् ॥ ७ ॥

**विणु नरयसोल सासणि सुराउ अण एगतीस विणु मीसे।ससुराउ सयरि संमे बीयकसाए विणा देसे ॥८॥**

टीका—प्रागुक्तं सप्तदशोत्तरशतं नरकत्रिकादिषोडशप्रकृतीर्विना एकोत्तरशतं सासादने पर्याप्ततिरश्चाम् । एतदेवैकोत्तरशतं सुरायुरनन्तानुबन्ध्याद्येकत्रिंशत्प्रकृतीश्च विना एकोनसप्ततिः, सा मिश्रगुणस्थाने बध्यते । अयं भावार्थः—" [1]संमामिच्छद्दिठ्ठी आउबंधं पि न करेइ" इति वचनादत्र सुरनरायुषोरबन्धः, अनन्तानुबन्ध्यादयश्च पंचविंशतिप्रकृतयः सासादन एव व्यवच्छिन्नबन्धाः, तथा मनुष्यास्तिर्यञ्चश्च मिश्रगुणस्थानकस्था अविरतसम्यग्दृष्टिवद्देवार्हमेव बध्नन्ति । तेन नरद्विकौदारिकद्विकवज्रऋषभनाराचानामपि बन्धाभावः । एषैव एकोनसप्ततिः सुरायुषा सहिता

---

१ सम्यग्मिथ्यादृष्टिरायुर्बन्धमपि न करोति.

मन्तति सम्यक्त्वेऽविरतगुणस्थानके चवति । सा सप्ततिर्द्वितीयकषायैरप्रत्याख्यानक्रोधमानमायालोभैर्विना षट्षष्टिर्देशविरतगुणस्थाने बध्यते ॥ ८ ॥

अथ तिर्यग्गतिबन्धाधिकार एव ग्रन्थलाघवार्थं मनुष्यगतावपि बन्ध दर्शयति–

इय चउगुणेसु वि नरा परमजया सजिण ओहु देसाई।जिणइक्कारसहीण नवसउ अपज्जत्तति रियनरा ॥९॥

टीका–यथा पर्याप्ततिरश्चां चतुर्षु मिथ्यादृष्टिसासादनमिश्राविरतिगुणस्थानेषु सप्तदशोत्तरशतादिको बन्ध उक्त इत्येव पर्याप्तनरा अपि चतुर्षु मिथ्यादृष्टिसासादनमिश्राविरतिगुणस्थानेषु सप्तदशोत्तरशतादिबन्धस्वामिनो मन्तव्या । परमयता अविरतसम्यग्दृष्टय पर्याप्तनरा 'सजिण त्ति' अविरतसम्यग्दृष्टिपर्याप्ततिर्यग्बन्धयोग्यसप्ततिर्जिननामसहिता एकसप्ततिस्ता बध्नन्ति, जिननामकर्मणोऽपि बंधकत्वात्तेषाम् । 'ओहु देसाइ त्ति' देशविरतादिगुणस्थानकेषु गुणस्थानकानाश्रयणे च पर्याप्तनराणा पुनरोघ सामान्यो बन्धोऽवसेय. । स च कर्मस्तवोक्त एव यत कर्मस्तवग्रन्थे सामान्यतो गुणस्थानकेषु बन्ध प्रतिपादितो न पुन किंचनगत्यादिमार्गणास्थानमाश्रित्य, स चात्र बहुषु स्थानेषूपयोगीति मूलतोऽपि दर्श्यते—"अभिनवकम्मग्गहण बधो ओहेण तत्थ वीससय । तित्थयराहारगदुगवज्जं मिच्छमि सतरसय ॥ १ ॥ नरयतिग जाइथावरचउ हुडायवछिवट्ठनपुमिच्छ । सोलतो इगहियसय सासणि तिरिथीणदुहगतिग ॥ २ ॥ अणमज्झागिइसघयण-चउ निउज्जोय कुखगइत्थित्ति । पणवीसतो मीसे चउसयरि दुआउय अबधा ॥ ३ ॥ सम्मे सगसयरि जिणाउबंधि वइरनरतिगबियकसाया । उरलदुगतो देसे सत्तट्ठी तियकसायतो ॥ ४ ॥ तेवट्ठि पमत्ते सोगअरइअथिर दुग अजस

अस्सायं । वुच्छिज्ज छच्च सत्त व नेइ सुराउं जया निट्ठं ॥ ५ ॥ गुणसट्ठि अप्पमत्ते सुराउ वंधंतु जइ इहागच्छे । अन्नह अट्ठावन्ना जं आहारदुगं वंधे ॥ ६ ॥ अडवन्न अपुव्वाइमि निद्ददुगंतो छपंन पणभागे । सुरदुग पणिंदि सुखगइ तस नव उरल विणु तणुवंगा ॥७॥ समचउर निमिण जिण वन्नअगुरुलहुचउ छ लंसि तीसंतो । चरिमे छवीसवंधो हासरईकुच्छभयभेउ ॥ ८ ॥ अनियट्टिभागपणगे इगेगहीणो दुवीसविहवंधो । पुम संजलणचउण्हं कमेण छेउ सतर सुहुमे ॥ ए ॥ चउदंसणु च्च जस नाणविग्घदसगं ति सोलस च्छेउ । तिसु सायवंध छेउ सजोगि बंधंतुणंतो य ॥ १० ॥ " इत्येतासां दशानामपि गाथानां व्याख्यानं कर्मस्तवटीकातो बोद्धव्यम् । इत्योघवन्धः । इह कर्मस्तवोक्तगुणस्थानकवन्धान्नरतिरश्चां मिश्राविरतगुणस्थानकयोरयं विशेषः–कर्मस्तवे मिश्रगुणस्थानके चतुःसप्ततिः, अविरतसम्यग्दृष्टिगुणस्थानके सप्तसप्ततिः । तिरश्चां पुनर्मनुष्यद्विकौदारिकद्विकवज्रऋषभनाराचसंहननरूपप्रकृतिपंचकस्य वन्धाभावान्मिश्रगुणस्थानके एकोनसप्ततिः, अविरतसम्यग्दृष्टौ सुरायुःक्षेपे सप्ततिः । नराणां तु मिश्रे एकोनसप्ततिः, अविरतसम्यग्दृष्टौ तीर्थकरनामक्षेपे एकसप्ततिः । अस्यां चैकसप्ततौ यदि मनुष्यद्विकौदारिकद्विकवज्रऋषभनाराचसंहननप्रकृतिपंचकं नरायुष्कं च क्षिप्यते तदा कर्मस्तवोक्ता सप्तसप्ततिर्भवत्यविरतगुणस्थानके । तथा कर्मस्तवे देशविरतगुणस्थानके या सप्तषष्टिरुक्ता सा तिरश्चां जिननामरहिता षट्षष्टिर्देशविरतगुणस्थाने भवति । प्रमत्तादीनि गुणस्थानानि तिरश्चां न संभवन्ति । नराणां तु सर्वगुणस्थानकसंभवेन देशविरतादिगुणस्थानकेषु कर्मस्तवोक्त एव सर्वोऽप्यन्यूनाधिक ओघवन्धो वाच्यः । ततश्च पर्याप्तनराणां सामान्येन वन्धे विंशत्युत्तरशतं प्रकृतीनां प्राप्यते, तेषामेव मिथ्यादृशां सप्तदशोत्तरशतं, सासादनानामेको-

त्तरशत, मिथ्याणामेकोनसप्तति', अविरतसम्यग्दृष्टीनामेकसप्तति, देशविरताना सप्तषष्टि, प्रमत्ताना त्रिषष्टि, अप्रमत्तानामेकोनषष्टिरष्टपञ्चाशद्वा, निवृत्तिबादराणा प्रथमे भागेऽष्टपञ्चाशत्, भागपञ्चके षट्पञ्चाशत्, सप्तमभागे षड्विंशति, अनिवृत्तिबादराणामाद्ये भागे द्वाविंशति, द्वितीये एकविंशति, तृतीये विंशति, चतुर्थे एकोनविंशति, पञ्चमेऽष्टादश च, सूक्ष्मसंपरायाणा सप्तदश, उपशान्तमोहक्षीणमोहसयोगिनामेका सातलक्षणा प्रकृतिर्बन्धे प्राप्यते, अयोगिना तु बन्धाभाव । एवमन्यत्राप्योघबन्ध । उक्तस्तिर्यग्नराणा पर्याप्ताना बन्ध, अथ तेषामेवापर्याप्ताना तमाह–'जिणइक्कारसहीणमित्यादि' यदेव नराणामोघबन्धे विंशत्युत्तरशत तदेव जिननामाद्येकादशप्रकृतिहीन शेषं नवोत्तरशतमपर्याप्ततिर्यग्नरा ओघतो मिथ्यात्वे च बध्नन्ति । यद्यपि करणापर्याप्तो देवो मनुष्यो वा जिननामकर्म सम्यक्त्वप्रत्ययेन बध्नाति, तथापीह नराणा लब्ध्यापर्याप्तत्वेन विवक्षणान्न जिननामबन्ध ॥ ९ ॥

तिर्यग्गतौ मनुष्यगतौ च बन्धस्वामित्वमुक्त, सांप्रत देवगतिमधिकृत्य तदुच्यते–

**निरय व्व सुरा नवरं ओहे मिच्छे इगिंदितिगसहिया । कप्पदुगे वि य एवं जिणहीणो जोइभवणवणे ॥१०॥**

टीका–सुरा अपि नारकवदोघतोऽविशेषतश्च तद्बन्धस्वामिनोऽवगन्तव्या । नवरमय विशेष –ओघे मिथ्यात्वगुणस्थानके च बन्धमाश्रित्य सुरा एकेन्द्रियादित्रिकसहिता द्रष्टव्या । ततोऽयमर्थ –यो नारकाणामेकोत्तरशतरूप ओघबन्ध स एवैकेन्द्रियजातिस्थावरनामातपनामप्रकृतित्रयसहित सुराणा सामान्यतो बन्धश्चतुरग्रशत, तदेव मिथ्यात्वे जिननामरहित त्र्युत्तरशत, एतदेवैकेन्द्रियजातिस्थावरातपनपुंसकवेदमिथ्यात्वहुण्डसेवार्तलक्षणप्रकृतिसप्तकहीन सासादने षण्णवति, षण्णवति-

रेवानन्तानुबन्ध्यादिषड्विंशतिप्रकृतिसहिता मिश्रे सप्ततिः, सैव जिननामनरायुष्कयुता द्विसप्ततिस्तामविरतसम्यग्दृष्टयो देवा बध्नन्तीति सामान्यदेवगतिबन्धः । सांप्रतं देवविशेषनामोच्चारणपूर्वकं तमाह–'कप्पदुगे' इत्यादि कल्पद्विकेऽपि सौधर्मेशानाख्यदेवलोकद्वयेऽप्येवं सामान्यदेवबन्धवद्बन्धो द्रष्टव्यः । तथाहि–सामान्येन चतुरग्रशतं, मिथ्यादृशां त्र्यग्रशतं, सासादनानां षण्णवतिः, मिश्राणां सप्ततिः, अविरतानां द्विसप्ततिः । देवौघो जिननामकर्महीनो ज्योतिष्कभवनपतिव्यन्तर देवेषु तद्देवीषु च विज्ञेयः, जिनकर्मसत्ताकस्य तेषूत्पादाभावेन तत्र तद्बन्धासंभवात्, ततः सामान्यतस्त्र्यधिकशतं, मिथ्यात्वेऽपि त्र्यधिकशतं, सासादने षण्णवतिः, मिश्रे सप्ततिः, अविरते एकसप्ततिः ॥ १० ॥

रयणु व्व सणंकुमाराइ आणयाई उज्जोयचउरहिया ।
अपज्जतिरिय व्व नवसयमिगिंदिपुढविजलतरुविगले ॥ ११ ॥

टीका–सनत्कुमाराद्याः सहस्रारान्ता देवा रत्नप्रभादिप्रथमपृथिवीनारकवद्बन्धमाश्रित्य द्रष्टव्याः । तद्यथा– सामान्येनैकाग्रशतं, मिथ्यादृशां शतं, सासादनानां षण्णवतिः, मिश्राणां सप्ततिः, अविरतानां द्विसप्ततिः । आनताद्या ग्रैवेयकनवकान्ता देवा अपि उद्योतनामतिर्यग्गतितिर्यगानुपूर्वीतिर्यगायुःप्रकृतिचतुष्करहिता रत्नप्रभादिनारकवदेव द्रष्टव्याः, ततः सामान्यतः सप्तनवतिं ते बध्नन्ति, मिथ्यादृशः षण्णवतिं, सासादना द्विनवतिं, मिश्रेऽविरते चोद्योतादिचतुष्कस्य प्रागेवापनीतत्वात्संपूर्ण एव रत्नप्रभादिभंगस्ततो मिश्राः सप्ततिं, अविरता द्विसप्ततिं बध्नंति । मिथ्यात्वादिगुणस्थानत्रयाभावात्

पचानुत्तरविमानदेवा एतामेवाविरतगुणस्थानसत्का द्विसप्ततिं बध्नन्तीत्यनुक्तमपि ज्ञेयमिति । उक्त देवगतौ बन्धस्वामित्व, तद्भणनाच्च गतिबन्धमार्गणा ममाप्ता । साम्प्रतमिन्द्रियेषु कायेषु च तदारभ्यते–'अपजेत्यादि' अपर्याप्ततिर्यग्वन्नवोत्तरशतमेकेन्द्रियपृथ्वीजलतरुविकलेषु द्रष्टव्यम् । अयमर्थ –विंशत्युत्तरशतमध्याज्जिननामाद्येकादशप्रकृतीर्मुक्त्वा शेष नवोत्तरशतमेकेन्द्रिया विकलेन्द्रिया पृथ्वीजलवनस्पतिकायाश्च सामान्यपदिनो मिथ्यादृशश्च बध्नन्ति ॥ ११ ॥

अथैतेषामेव सासादनगुणस्थाने बन्धमाह–

**छनवइ सासणि विणु सुहुमतेर केइ पुण बिंति चउनवइ तिरियनराऊहिं विणा तणुपज्जत्तिं न ते जंति॥१२**

टीका–प्रागुक्त नवोत्तरशत सूक्ष्मत्रिकादिप्रकृतित्रयोदशक मिथ्यात्व एव व्यवच्छिन्नबन्धमिति कृत्वा तद्विना षण्णवतिः सासादने एकेन्द्रियविकलेन्द्रियपृथ्वीजलवनस्पतिकायाना भवति । केचित्पुनराचार्या ब्रुवते चतुर्नवतिं, तिर्यग्नरायुष्काभ्या विना, यतस्त एकेन्द्रियविकलेन्द्रियादय सासादना सन्तस्तनुपर्याप्तिं न यान्त्यतस्ते तिर्यग्नरायुरबन्धका'। अय भावार्थ.– तिर्यग्नरायुषोस्तनुपर्याप्त्या पर्याप्तैरेव बध्यमानत्वात् पूर्वमतेन शरीरपर्याप्त्युत्तरकालमपि सासादनभावस्येष्टत्वादायुर्बन्धोऽभिप्रेत । इह तु प्रथममेव तन्निवृत्तेर्नेष्ट इति षण्णवति । तिर्यग्नरायुषी विना मतान्तरेण चतुर्नवति. ॥ १२ ॥

उक्त एकेन्द्रियादीना बन्ध , अथ पचेन्द्रियाणा त्रसकायिकाना च तमाह–

**ओहु पणिदितसे गइतसे जिणिक्कार नरतिगुच्च विणा । मणवयजोगे ओहो उरले नरभंगु तम्मिस्से ॥१३॥**

टीका—ओघो विंशत्युत्तरशतादिलक्षणः कर्मस्तवोक्तः पंचेन्द्रियेषु त्रसकायिकेषु चावगन्तव्यः । तद्यथा—सामान्यतो विंशत्युत्तरशतं, मिथ्यात्वे सप्तदशोत्तरशतं, सासादने एकोत्तरशतं, मिश्रे चतुःसप्ततिः, अविरते सप्तसप्ततिः, देशे सप्तषष्टिः, प्रमत्ते त्रिषष्टिः, अप्रमत्ते एकोनषष्टिरष्टपंचाशद्वा, निवृत्तिबादरे प्रथमभागेऽष्टपंचाशत्, भागपंचके षड्पंचाशत्, सप्तमभागे षड्विंशतिः, अनिवृत्तिबादरे आद्ये भागे द्वाविंशतिः, द्वितीये एकविंशतिः, तृतीये विंशतिः, चतुर्थे एकोनविंशतिः, पंचमेऽष्टादश, सूक्ष्मे सप्तदश, शेषगुणस्थानत्रये सातस्यैकस्य बन्धः, अयोगिनि बन्धाभावः । गतित्रसास्तेजोवायुकायास्तेषु जिननामाद्येकादशप्रकृतीर्नरत्रिकमुच्चैर्गोत्रं च विना विंशत्युत्तरशतं शेषं पंचोत्तरशतं बन्धे लभ्यते सासादनादिभावस्तु नैषां संभवति । यत उक्तम्—"[1]न हु किंचि लभिज्ज सुहुमतसा" सूक्ष्मत्रसास्तेजोवायुकायजीवा इति । एवमुक्त इन्द्रियेषु कायेषु च बन्धः, सांप्रतं योगेषु तं प्रतिपादयन्नाह—'मणवयजोगे' इत्यादि, सूचकत्वात्सूत्रस्य सत्यादिमनोयोगचतुष्के तत्पूर्वके सत्यादिवाग्योगचतुष्के ओघबन्धो विंशत्युत्तरशतादिलक्षणः कर्मस्तवोक्तो ज्ञेयः । तत्र सत्यादिस्वरूपं त्विदं—सत्यं यथास्ति जीवः सदसद्रूपो देहमात्रव्यापीत्यादिरूपतया यथावस्थितवस्तुतत्त्वचिन्तनपरं सत्यम् । विपरीतं त्वसत्यम् । मिश्रस्वभावं सत्यासत्यम्, यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति विकल्पनापरं । तथा यन्न सत्यं नापि मृषा तदसत्यामृषा, इह विप्रतिपत्तौ सत्यां यद्वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण विकल्प्यते, यथा अस्ति जीवः सदसद्रूप इत्यादि तत्किल सत्यं परिभाषितं । यत्पुनर्विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं वि-

१ न हि किंचिल्लभन्ते सूक्ष्मत्रसाः.

कल्प्यते, यथा नास्ति जीव एकान्तनित्यो वा इत्यादि तदसत्य । यत्पुनर्वस्तुप्रतिष्ठाशामन्तरेण स्वरूपमात्रपर्यालोचनपरं, यथा हे देवदत्त घटमानय, गा देहि मह्यमित्यादिचिन्तनपर तदसत्यामृषा, इद स्वरूपमात्रपर्यालोचनपरत्वान्न यथोक्तलक्षण सत्य भवति नापि मृषेति । इदमपि व्यवहारनयमतेन द्रष्टव्यम् । निश्चयनयमतेन तु विप्रतारणादिबुद्धिपूर्वकमसत्येऽन्तर्भवति, अन्यथा तु सत्ये । ' उरले त्ति ' मनोवाग्योगपूर्वके औदारिककाययोगे नरभग "इय चउगुणेसु वि नरा" इत्यादिना प्रागुक्तस्वरूप । यथा–ओघे विंशत्युत्तरशत, मिथ्यात्वे सप्तदशोत्तरशत, सासादने एकोत्तरशतं, मिश्रे एकोनसप्तति , अविरते एकसप्तति इत्यादि मनोरहितवाग्योगे विकलेन्द्रियभग । केवलकाययोगे त्वेकेन्द्रियभग तम्मिस्से त्ति' तन्मिश्रे औदारिकमिश्रयोगे ॥ १३ ॥

सम्प्रति बध उच्यते–

**आहारछग विणोहे चउदससउ मिच्छि जिणपणगहीण।सासणि चउनवइ विणा नरतिरिआऊ सुहुमतेर**

टीका–विंशत्युत्तरशतमाहारकादिप्रकृतिषट्क विना शेषं चतुर्दशाधिकशतमोघबन्धे प्राप्यते । अय भावार्थ –औदारिकमिश्र कार्मणेन सह, तच्चापर्याप्तावस्थाया केवलिसमुद्घातावस्थाया वा, उत्पत्तिदेशे हि पूर्वभवादनन्तरमागतो जीव प्रथमसमये कार्मणेनैव केवलेनाहारयति। तत परमौदारिकस्याप्यारब्धत्वादौदारिकेण कार्मणमिश्रेण यावच्छरीरस्य निष्पत्ति केवलिसमुद्घातावस्थाया द्वितीयषष्ठसप्तमसमयेषु कार्मणेन मिश्रमौदारिकमिति । अपर्याप्तावस्थाया च नाहारकादिषट्क बध्यते इति तन्निषेध । केवलिसमुद्घातावस्थाया पुनरेकस्य सातस्यैव बन्धोऽभिधास्यते । एतदेव चतुर्दशोत्तरशतमौदारि-

कमिश्रकाययोगी मिथ्यात्वे जिननामादिप्रकृतिपंचकहीनं शेषं नवोत्तरं शतं बध्नाति। स एव सासादने चतुर्नवतिं बध्नाति, नवोत्तरशतमध्यान्मुक्त्वा नरतिर्यगायुषी सूक्ष्मत्रिकादित्रयोदशप्रकृतीश्च । नरतिर्यगायुषोरपर्याप्तत्वेन सासादने बन्धाभावात्, सूक्ष्मत्रिकादित्रयोदशकस्य तु मिथ्यात्व एव व्यवच्छिन्नबन्धतया च ॥ १४ ॥

**अणचउवीसाइ विणा जिणपणजुय संमि जोगिणो सायं। विणु तिरिनराउ कम्मे वि एवमाहारदुगि ओहो**

टीका—प्रागुक्ता चतुर्नवतिरनन्तानुबन्ध्यादिचतुर्विंशतिप्रकृतीर्विना जिननामादिप्रकृतिपंचकयुता च पंचसप्ततिस्तामौदारिकमिश्रकाययोगी सम्यक्त्वे बध्नाति। तथा सयोगिन औदारिकमिश्रस्थाः केवलिसमुद्घाते द्वितीयषष्ठसप्तमसमयेषु सातमेवैकं बध्नन्ति। एवं गुणस्थानकचतुष्क एवौदारिकमिश्रयोगो लभ्यते नान्यत्र । अथ कार्मणयोगादिषु बन्धः प्रतिपाद्यते 'विणु तिरीत्यादि' यथौदारिकमिश्रे बन्धविधिरोघतो विशेषतश्चोक्तः, एवं कार्मणयोगेऽपि तिर्यङ्नरायुषी विना वाच्यः, कार्मणकाययोगे तिर्यङ्नरायुषोर्बन्धाभावात्। कार्मणकाययोगो ह्यपान्तरालगतावुत्पत्तिप्रथमसमये च जीवस्य मिथ्यात्वसासादनाविरतगुणस्थानकत्रयोपेतस्य लभ्यते । उक्तं च—"मिच्छे सासाणे वा अविरयसंमंमि अहव गहियंमि। जंति जिया परलोए सेसिक्कारसगुणे मुत्तुं ॥ १ ॥" तथा सयोगिनः केवलिसमुद्घाते तृतीयचतुर्थपंचमसमयेषु चेति गुणस्थानकचतुष्टय एव कार्मणकाययोगो नान्यत्र। ततो विंशत्युत्तरशतमध्यादाहारकषट्कतिर्यङ्नरायुःप्रकृतीर्मुक्त्वा शेषस्य द्वादशोत्तरशतस्य सामान्येन कार्मणकाययोगे बन्धः। तदेव द्वादशोत्तरशतं जिनादिपंचकं विना शेषं सप्तोत्तरशतं कार्मणका-

१ मिथ्यात्वे सासादने वाऽविरतसम्यक्त्वेऽथवा गृहीते। यान्ति जीवाः परलोकं शेषैकादशगुणस्थानानि मुक्त्वा. ।

ययोगे मिथ्यादृशो बध्नन्ति । तदेव सप्तोत्तरशत सूक्ष्मादित्रयोदशप्रकृतीर्मुक्त्वा शेषा चतुर्नवतिं कार्मणयोगे सासादना ब-ध्नन्ति । चतुर्नवतिरेवानन्तानुबन्ध्यादिचतुर्विंशतिप्रकृतीर्विना जिननामादिप्रकृतिपञ्चकसहिता च पञ्चसप्ततिस्ता कार्मणयो-गेऽविरता बध्नन्ति । सयोगिनस्तु कार्मणकाययोगे सातमेवैक बध्नन्ति । तथाहारककाययोगश्चतुर्दशपूर्वविद , आहारक-मिश्रकाययोगश्च तस्यैवाहारकशरीरस्य प्रारम्भसमये परित्यागसमये चौदारिकेण सह द्रष्टव्य । तत आहारकद्विके आहा-रकशरीरतन्मिश्रलक्षणे योगद्वये ओघ कर्मस्तवोक्त प्रमत्तगुणस्थानवर्ती त्रिषष्टिप्रकृतिबन्धरूप । एतत्काययोगद्वयं हि ल-ब्ध्युपजीवनात्प्रमत्तस्यैव न त्वप्रमत्तस्य ॥ १५ ॥

सुरओहो वेउव्वे तिरियनराउरहिओ य तम्मिस्से। वेयतिगाइम बियतियकसाय नव दु चउ पंच गुणे ॥१६॥

टीका–सुरौघ सामान्यदेवबन्धो वैक्रियकाययोगे द्रष्टव्य । तद्यथा–सामान्येन चतुरग्रशत, मिथ्यात्वे त्र्युत्तरशत, सा-सादने षण्णवति , मिश्रे सप्तति , अविरते द्विसप्तति । तथा तन्मिश्रे वैक्रियमिश्रे स एव सुरौघस्तिर्यग्नरायुष्करहितो वाच्य । इह देवनारका निजायु षण्मासावशेषा एवायुर्बध्नन्ति, अतो वैक्रियमिश्रयोगे उत्पत्तिप्रथमसमयादनन्तरमपर्याप्तावस्थासद्भा-विनि आयुर्द्वयबन्धाभाव । तथा चात्रौघे द्व्युत्तरशत, मिथ्यात्व एकोत्तरशत, सासादने चतुर्नवति , अविरत एकस-प्तति । वैक्रियमिश्रयोगो मिश्रता चास्यात्र कार्मणकायेनैव सह मतव्या । अयमपि च मिथ्यात्वसासादनाविरतगुणस्थान-कत्रय एव लभ्यते, नान्यत्र । यद्यपि देशविरतस्याम्बडादे प्रमत्तस्य तु विष्णुकुमारादेर्वैक्रिय कुर्वतो वैक्रियमिश्रवैक्रियस-म्भव श्रूयते, पर स्वल्पावस्थस्य वैक्रिययोगस्यात्र गृहीतत्वादथवा स्वल्पत्वादन्यतो वा कुतोऽपि हेतो पूर्वाचार्यै स नोक्त ।

एवं योगेषु बन्धस्वामित्वमुक्तमथ वेदादिषु तदभिधित्सुः प्रथमं गुणस्थानकानि तेष्वाह–'वेयतिगेत्यादि' वेदत्रिके स्त्रीवेद-पुंवेदनपुंसकवेदरूपे नव नवसंख्याकानि 'संजलणे'त्यादि अग्रेतनगाथास्थपढमेति पदस्यात्रापि संबन्धात्प्रथमानि मिथ्यात्वादीनि अनिवृत्तिबादरान्तानि गुणस्थानकानि भवन्ति, ततः परं वेदानामभावात् । एतेषु यः कर्मस्तवोक्तः सामान्यबन्धः स द्रष्टव्यः । तद्यथा–सामान्यतो नानाजीवापेक्षया १२०, मिथ्यात्वे ११७, सासादने १०१, मिश्रे ७४, अविरते ७७, देशविरते ६७, प्रमत्ते ६३, अप्रमत्ते ५९, वा ५८, निवृत्तिबादरे प्रथमभागे ५८, भागपंचके ५६, सप्तमभागे २६, अनिवृत्ते २२, एवमन्यत्रापि गुणस्थानकेषु यथासंभवं कर्मस्तवोक्तो बन्धो वाच्यः । कषायद्वारे आद्येऽनन्तानुबन्धिक्रोधमानमायालोभरूपे कषायचतुष्के द्वे प्रथमे मिथ्यात्वसासादनाख्ये गुणस्थानके, तत्र तीर्थंकरबन्धस्य सम्यक्त्वप्रत्ययत्वादाहारकद्विकबन्धस्य च संयमहेतुत्वादनन्तानुबन्धिषु तदभावात्सामान्येन ११७, मिथ्यात्वे ११७, सासादने १०१ । द्वितीयेऽप्रत्याख्यानाख्ये कषायचतुष्के चत्वारि प्रथमानि मिथ्यात्वसासादनमिश्राविरतनामकानि गुणस्थानकानि, तत्राहारकद्विकबन्धाभावेन सामान्येन ११८, मिथ्यात्वे ११७, सासादने १०१, मिश्रे ७४, अविरते ७७ । तृतीये प्रत्याख्यानावरणाख्ये कषायचतुष्के पंच आद्यानि मिथ्यात्वादीनि देशविरतांतानि गुणस्थानकानि, देशविरते सप्तषष्टिः, शेषाणि तथैव ॥ १६ ॥

संजलणतिगे नव दस लोभे चउ अजइ दु ति अनाणतिगे ।
बारस अचक्खुचक्खुसु पढमा अहक्खाय चरमचऊ ॥ १७ ॥

टीका–सज्वलनत्रिके सज्वलनक्रोधमानमायारूपे नवाद्यानि गुणस्थानकानि तत्र सामान्यबन्धानिवृत्तिबादर यावद्वेद त्रिकन्यायेन विंशत्युत्तरशतादिको बन्ध, अनिवृत्तिबादरे तु प्रथमे भागे २२, द्वितीये पुवेदरहिता २१, तृतीये सज्वलनक्रोधरहिता २०, चतुर्थे संज्वलनमानरहिता १९, पंचमे सज्वलनमायारहिता १८। संज्वलनलोभस्य तु सूक्ष्मसंपरायेऽपि भावात्तत्र दश प्रथमानि गुणस्थानानि, तत्र नव तथैव दशमे तु सूक्ष्मसपराये सप्तदशप्रकृतय'। सयमद्वारे–अयतेऽसंयते चत्वार्याद्यानि गुणस्थानानि, तत्र सामान्यतोऽविरतसम्यग्दृष्टेरपि सगृहीतत्वाज्जिननामक्षेपात्सप्तदशोत्तरशत जातमष्टादशोत्तरशत, मिथ्यात्वे ११७, सासादने १०१, मिश्रे ७४, अविरते ७७। ज्ञानद्वारे–अज्ञानत्रिके मत्यज्ञानश्रुताज्ञानविभंगरूपे द्वे मिथ्यात्वसासादने, त्रीणि वा गुणस्थानकानि मिश्रेण सह। अयमाशय–मिश्रे ज्ञानांशोऽज्ञानांशश्चास्ति, तत्र यदाऽज्ञानांशप्राधान्य विवक्ष्यते तदाऽज्ञानत्रिके गुणस्थानकद्वयमेव, ज्ञानांशप्राधान्यविवक्षाया तु तृतीय मिश्रमपि, तत्रौघे ११७, मिथ्यात्वे ११७, सासादने १०१, मिश्रे ७४। दर्शनद्वारे–चक्षुरचक्षुर्दर्शनयो प्रथमानि द्वादश गुणस्थानानि, परतस्तु चक्षुरचक्षुषो सतोरप्यनुपयोगित्वेनाव्यापारात्। तत्रौघे १२०, मिथ्यात्वे ११७, इत्यादि यावत्क्षीणमोहे सातबन्ध १। यथाख्याते चरमगुणस्थानकचतुष्क, तत्र सामान्यत' १, उपशान्तमोहे १, क्षीणमोहे १, सयोगिनि १, अयोगिनि ०॥१७॥

**मणनाणि सग जयाई समइयछेय चउ दुन्नि परिहारे। केवलिदुगि दो चरमाजयाइ नव मइसुओहि दुगे॥**

टीका–मन पर्यायज्ञाने सप्त यतादीनि प्रमत्तसयतादीनि क्षीणमोहान्तानि। तत्र सामान्यत आहारकद्विकसहिता त्रिषष्टिर्जाता पचषष्टि, प्रमत्ते ६३, इत्यादि यावत्क्षीणमोहे १ केवलसातबन्ध। सामायिके छेदोपस्थापने च चत्वारि यता-

दीनि गुणस्थानानि, तत्र सामान्यतः पंचषष्टिः, प्रमत्ते त्रिषष्टिरित्यादि प्राग्वत्। सूक्ष्मसंपरायगुणस्थानकादौ तु सूक्ष्मसंपराया-
दिचारित्राभावात्। तथा द्वे गुणस्थानके प्रमत्ताप्रमत्तरूपे परिहारविशुद्धिचारित्रे, नोत्तराणि, तस्मिंश्चारित्रे वर्तमानस्य श्रे-
ण्यारोहणप्रतिषेधात्, तत्र सामान्यतः ६५, प्रमत्ते ६३, अप्रमत्ते ५९, अष्टपंचाशद्वा। केवलद्विके केवलज्ञानकेवलदर्शन-
रूपे द्वे चरमे अन्तिमे सयोगिकेवल्ययोगिकेवल्याख्ये गुणस्थानके भवतः, अत्रौघे एकस्य सातस्य बन्धः सयोगिनि च अयो-
गिनि शून्यम्। तथा मतिश्रुतयोरवधिद्विके चावधिज्ञानावधिदर्शनलक्षणेऽयतादीनि अविरतसम्यग्दृष्ट्यादीनि क्षीणमोहप-
र्यवसानानि नव गुणस्थानकानि भवन्ति, सयोग्यादौ केवलोत्पत्त्या मत्यादेरभावात्, तत्रौघतोऽप्रमत्तादेर्मत्यादिमत
आहारकद्विकस्यापि बन्धसंभवादेकोनाशीतिः, विशेषचिन्तायामविरतादिगुणस्थानकेषु कर्मस्तवोक्तः सप्तसप्त्यादिमितो
बन्धो द्रष्टव्यः ॥ ॥ १७ ॥

**अड उवसमि चउ वेयगि खइए इक्कार मिछ तिगि देसे। सुहुमि सठाणं तेरस आहारगि नियनियगुणोहो**

टीका—इहायतादीति पदं सर्वत्र योज्यते। ततोऽयतादीन्युपशान्तमोहान्तान्यष्टौ गुणस्थानान्यौपशमिकसम्यक्त्वे भवन्ति,
तत्र सामान्यत औपशमिकसम्यक्त्वे वर्तमानानां देवमनुजायुषोर्बन्धाभावात् ७५, अविरतेऽपि ७५, देशे सुरायुरबन्धात्
६६, प्रमत्ते ६२, अप्रमत्ते ५८, इत्यादि यावदुपशान्ते १। वेदके क्षायोपशमिकापरपर्यायेऽयतादीन्यप्रमत्तान्तानि चत्वारि
गुणस्थानकानि, तत्रौघे ७९, अविरते ७७, देशे ६७, प्रमत्ते ६३, अप्रमत्ते ५९–५८, अतः परमुपशमश्रेणावौपशमिकं, क्ष-
पकश्रेणौ पुनः क्षायिकं, क्षायोपशमिकसम्यक्त्वं तूदीर्णमिथ्यात्वक्षयेऽनुदीर्णमिथ्यात्वोपशमे च भवतीति। उक्तं च—

"'मिच्छत्त जमुइण्ण त खीण अणुइय तु उवसत । मीसीभावपरिणयं वेईज्जत खओवसम ॥१॥" तथा क्षायिकसम्यक्त्वेऽयताादीन्ययोगिकेवलिपर्यवसानान्येकादशगुणस्थानकानि, तत्रौघे ७९, अविरते ७७, देशे ६७, इत्यादि यावदयोगिनि शून्यम् । क्षायिकसम्यक्त्वस्वरूप त्विदम्–"खीणे दसणमोहे तिविहम्मि वि भवनियाणभूयंमि । निप्पच्चवायमउल समत्त खाइय होइ ॥ १ ॥" तथा मिथ्यात्वत्रिके मिथ्यादृष्टिसास्वादनमिश्रलक्षणे देशे देशविरते सूक्ष्मे सूक्ष्मसंपराये स्वस्थान निजस्थानम् । अयमर्थ –मिथ्यात्वमार्गणास्थाने मिथ्यादृष्टिगुणस्थानं, सासादनमार्गणास्थाने सासादनगुणस्थान, मिश्रमार्गणास्थाने मिश्रगुणस्थान, देशसंयममार्गणास्थाने देशविरतगुणस्थान, सूक्ष्मसपरायसयमे सूक्ष्मसपरायगुणस्थान, अत्र च स्वस्वगुणस्थानीयो बन्ध , यथा मिथ्यात्वे ओघतो विशेषतश्च ११७, एव सासादने १०१, मिश्रे ७४, देशे ६७, सूक्ष्मे १७ । आहारकद्वारे त्रयोदशगुणस्थानानि मिथ्यादृष्ट्यादीनि सयोगिकेवल्यन्तानि आहारके जीवे लभ्यन्ते, अयोगी त्वनाहारकः । तत्रौघत १२०, मिथ्यात्वे ११७, इत्यादि यावत्सयोगिनि सातरूपैका प्रकृतिर्बन्धे भवति । एव वेदादिषु मार्गणास्थानेषु गुणस्थानकान्युपदर्श्य संप्रति तेषु बन्धातिदेशमाह–' नियनियगुणोहो त्ति ' निजनिजगुणौघ , एतेषु वेदादिषु यानि स्वस्वगुणस्थानानि तेष्वोघ कर्मस्तवोक्तो बन्धो द्रष्टव्य इत्यर्थ । स च यथास्थान भावित एव ॥ १९ ॥

यच्च प्रागुक्तमष्टौपशमिकसम्यक्त्वे गुणस्थानानीति, तत्र कश्चिद्विशेषमाह–

**परमुवसमि वट्टता आउ न वंधति तेण अजयगुणे । देवमणुआउहीणो देसाइसु पुण सुराउ विणा ॥ २० ॥**

---

१मिथ्यात्व यदुदीर्ण तत्क्षीणमनुदित तूपशान्तम् । मिश्रीभावपरिणत वेद्यमान क्षयोपशमम् ॥ १ ॥

टीका–सर्वत्र वेदादिषु निजनिजगुणौघो वाच्य इत्युक्तं, परमौपशमिकेऽयं विशेषः–औपशमिके वर्तमाना जीवा आयुर्न बध्नन्ति, तेनायतगुणस्थानके देवमनुजायुर्भ्यां हीन उघो वाच्यः, नरकतिर्यगायुषोः प्रागेवमिथ्यात्वसासादनयोरपनीतत्वान्न तद्धीनता । तथा देशादिषु देशविरतप्रमत्ताप्रमत्तेषु पुनरोघः सुरायुर्विना ज्ञेयः । औपशमिकसम्यक्त्वं तूपशमश्रेण्यां प्रथमसम्यक्त्वलाभे वा भवति जीवस्य । उक्तं च–"[1] उवसामगसेढिगयस्स होइ उवसामियं तु संमत्तं । जो वा अकयतिपुंजो अखवियमिच्छो लहइ संमं ॥ १ ॥" ननु क्षायोपशमिकौपशमिकसम्यक्त्वयोः कः प्रतिविशेषः ? उच्यते–क्षायोपशमिके मिथ्यात्वदलिकवेदनं विपाकतो नास्ति प्रदेशतः पुनर्विद्यते, औपशमिके तु प्रदेशतोऽपि नास्तीति विशेषः ॥ २० ॥

उक्तं वेदादिषु बन्धस्वामित्वं, अथ लेश्याद्वारमुच्यते–

**उहे अट्ठारसयं आहारदुगूण आइलेसतिगे । तं तित्थोणं मिच्छे साणाइसु सव्वहिं उहो ॥ २१ ॥**

टीका–आद्यलेश्यात्रिके कृष्णनीलकापोतलेश्यात्रये वर्तमाना जीवा उघे सामान्येन विंशत्युत्तरशतमाहारकद्विकोनं जातमष्टादशाधिकशतं तद्बध्नन्ति, आहारकद्विकस्य शुक्लेश्याभिर्बध्यमानत्वात् । तदष्टादशाधिकशतं तीर्थकरनामोनं सप्तदशोत्तरशतं मिथ्यात्वगुणस्थानके बध्नन्ति । सासादनादिषु गुणस्थानकेषु पुनः सर्वत्र लेश्यापट्केऽप्योघः सामान्यबन्धो द्रष्टव्यः । ततोऽत्र सासादनमिश्राविरतेष्वोघः कर्मस्तवोक्तः ॥ २१ ॥

**तेऊ नरयनवूणा उज्जोयचउ नरयबार विणु सुक्का । विणु नरयबार पम्हा अजिणाहारा इमा मिच्छे ॥२२॥**

---

१ उपशमश्रेणिगतस्य भवति औपशमिकं तु सम्यक्त्वम् । यद्वाऽकृतत्रिपुंजोऽक्षपितमिथ्यात्वो लभते सम्यक्त्वम् ॥ १ ॥

टीका—विंशत्युत्तरशतं नरकत्रिकादिप्रकृतिनवकोनं तेजोलेश्यायामोघत एकादशोत्तरं शतं बध्यते, कृष्णाद्यशुभलेश्याप्रत्ययत्वान्नरकत्रिकादिप्रकृतिनवकबन्धस्य । इदमेवैकादशोत्तरशतं जिननामाहारकद्विकरहितं शेषमष्टोत्तरशतं मिथ्यात्वे बध्यते । सासादनादिषु षट्सु गुणस्थानकेषु ओघ विंशत्युत्तरशतमध्यादुद्योतादिचतुष्कं नरकत्रिकादिद्वादशकं च मुक्त्वा शेषं चतुरुत्तरशतमोघतः शुक्ललेश्याया बध्यते, उद्योतादिप्रकृतीनां तिर्यग्नरकप्रायोग्यत्वेन देवनरप्रायोग्यबन्धकैः शुक्ललेश्यावद्भिरबध्यमानत्वात् । एतदेव चतुरुत्तरं शतं जिननामाहारकद्विकरहितं शेषमेकोत्तरशतं मिथ्यात्वे बध्यते । सासादने तदीयैकोत्तरशतरूपौघबन्धादुद्योतादिप्रकृतिचतुष्टयापसारेण शेषा सप्तनवतिर्बध्यते । मिश्रादिष्वेकादशगुणस्थानकेषु तदवस्थः स्वस्वगुणस्थानीयो बन्धो द्रष्टव्यः । विंशत्युत्तरशतमध्यान्नरकत्रिकादिप्रकृतिद्वादशकं विना शेषमष्टोत्तरशतं पद्मलेश्यायामोघतो बध्यते, तल्लेश्यावता सनत्कुमारादिदेवानां तिर्यक्प्रायोग्यं बध्नतामुद्योतादिप्रकृतिचतुष्कस्य बन्धसम्भवान्नात्र तद्बन्धाभावः । एतदेवाष्टोत्तरशतं जिननामाहारकद्विकरहितं शेषं पंचोत्तरशतं मिथ्यात्वे बध्यते । सासादनादिषु षट्सु गुणस्थानकेषु यथास्थितं एकोत्तरशतादिरूपः स्वस्वौघबन्धो द्रष्टव्यः । 'अजिणाहारा इमा मिच्छे त्ति' प्रथमलेश्यात्रिकस्य 'ओहे अद्वारसयमित्यादिना' निर्धारितत्वेनेमास्तेजःपद्मशुक्ललेश्या मिथ्यात्वगुणस्थानके जिननामाहारकद्विकरहिता विज्ञेया, तेजोलेश्यादिषु नरकनवकाद्यूनो यः सामान्यबन्धः प्रतिपादितः स मिथ्यात्वगुणस्थानके जिनादिप्रकृतित्रयरहितो विधेय इत्यर्थः । तथा च दर्शितमेव ॥ २२ ॥

सम्प्रति भव्यादिद्वाराण्यभिधीयन्ते—

सव्वगुणभव्वसन्निसु ओहु अभव्वा असंनि मिच्छसमा।सासणि असंनि संनि व कम्मणभंगो अणाहारे ॥२३॥

टीका–सर्वगुणस्थानकोपेते भव्ये संज्ञिनि च मार्गणास्थाने सर्वगुणस्थानकौघः कर्मस्तवोक्तः । अभव्या असंज्ञिनश्च चिन्त्यमाना मिथ्यादृष्टिगुणस्थानकसमाः । अयमर्थः–यथा मिथ्यात्वे सप्तदशोत्तरशतबन्धः कर्मस्तव उक्तस्तथाऽभव्योऽसंज्ञी च सामान्यतो मिथ्यात्वे च सप्तदशोत्तरशतं बध्नाति । सासादने पुनरसंज्ञी संज्ञिवदेकोत्तरशतबन्धक इत्यर्थः । अनाहारके तु मार्गणास्थाने कार्मणकाययोगभंगो 'विणु तिरिनराउ कम्मे वी'त्यादिना योगमार्गणास्थाने प्रतिपादितोऽवगन्तव्यः, कार्मणकाययोगस्थस्यैव संसारिणोऽनाहारकत्वात्, कार्मणभंगश्चायं विंशत्युत्तरशतमध्यादाहारकद्विकदेवायुर्नरकत्रिकतिर्यग्नरायुःप्रकृत्यष्टकं मुक्त्वा शेषस्य द्वादशोत्तरशतस्यानाहारके सामान्येन बन्धः । तथा जिननाम सुरद्विकं वैक्रियद्विकं च द्वादशोत्तरशतमध्यान्मुक्त्वा शेषस्य सप्तोत्तरशतस्यानाहारके मिथ्यादृष्टौ बन्धः । तथा सूक्ष्मादित्रयोदशप्रकृतीर्मुक्त्वा शेषायाश्चतुर्नवतेः सासादनस्थेऽनाहारके बन्धः । तथाऽनन्तानुबन्धादिचतुर्विंशतिप्रकृतीश्चतुर्नवतेर्मध्यान्मुक्त्वा शेषायाः सप्ततेर्जिननामसुरद्विकवैक्रियद्विकयुक्तायाः पंचसप्ततेरनाहारके बन्धः । तथा सयोगिनि केवलिसमुद्घाते तृतीयचतुर्थपंचमसमयेष्वनाहारक एकस्याः सातप्रकृतेर्बन्धः ॥ २३ ॥

अथ प्राग्यदुक्तं लेश्याद्वारे ' साणाइसु सव्वहिं ओहो त्ति ' सासादनादिषु गुणस्थानेषु सर्वत्र लेश्यापदे ओघो द्रष्टव्य इति, तत्र न ज्ञायत आदिशब्दात्कस्यां लेश्यायां कियंति गुणस्थानानि गृह्यन्ते इत्यतो लेश्यासु गुणस्थानकान्युपदर्शयन् प्रकरणसमर्थनां प्रकरणज्ञानोपायं चाह–

तिसु दुसु सुक्काइगुणा चउ सग तेर त्ति बंधसामित्त । देविंदसूरिलिहियं नेयं कम्मत्थयं सोउं ॥२४॥

टीका–तिसृष्वाद्यासु कृष्णनीलकापोतलेश्यासु 'चउ' इत्यादिना यथाक्रम संबन्धाच्चत्वारि मिथ्यात्वसासादनमिश्राविरतगुणरूपाण्याद्यानि गुणस्थानानि प्राप्यन्ते । एतद्गुणस्थानचतुष्के परिणामविशेषत षणामपि लेश्याना भावात् । द्वयोस्तेज पद्मलेश्ययोर्मिथ्यात्वादीनि सप्तगुणस्थानानि, तयोरप्रमत्तगुणस्थानकान्तमपि यावद्भावात् । शुक्ललेश्याया त्रयोदश मिथ्यात्वादीनि गुणस्थानानि, तस्या मिथ्यादृष्टिगुणस्थानात्प्रभृति यावत्सयोगिकेवलिगुणस्थानक तावदपि भावात् । अयोगी त्वलेश्य । इह च लेश्याना प्रत्येकमसंख्येयानि लोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि, ततो मन्दाध्यवसायस्थानापेक्षया शुक्ललेश्यादीनामपि मिथ्यादृष्ट्यादौ संभवो न विरुध्यते । तथा कृष्णादिलेश्यात्रय यदिहाविरतगुणस्थानकान्तमुक्तं तद्बृहद्बन्धस्वामित्वानुसारेण, षडशीतिके तु तस्य प्रमत्तगुणस्थानकात यावदभिहितत्वात् । तथाहि–" लेसा तिन्नि पमत्तता तेउ पम्हा उ अप्पमत्तता । सुक्का जाव सजोगी निरुद्धलेसो अजोगि त्ति ॥ १ ॥ " तत्त्वं तु श्रुतधरा विदन्ति । इति प्रतिपादित गत्यादिषु बन्धस्वामित्व, तत्प्रतिपादनाच्च समर्थितं बन्धस्वामित्वप्रकरणं । इतिशब्द परिसमाप्तौ । बन्धस्वामित्वमेतज्ज्ञेय बोद्धव्य, कर्मस्तव श्रुत्वाऽत्र बहुषु स्थानेषु तदुक्तबन्धातिदेशद्वारेण भणनात् ।

एतद्ग्रंथस्य टीकाभूत्परं क्वापि न साप्यते । स्थानस्याशून्यताहेतोरतोऽलेख्यवचूर्णिका ॥ २ ॥

॥ इति बन्धस्वामित्वावचूरि समाप्ता ॥

---

१ लेश्यास्तिस्र प्रमत्तान्ता तेज पद्म तु अप्रमत्तान्ते । शुक्ला यावत्सयोगिन निरुद्धलेश्योऽयोगीति ॥ १ ॥

# अथ चतुर्थः कर्मग्रन्थः

यज्ञापितार्थलवमाप्य दुरापमाशु श्रीगौतमप्रभृतय श्रमिनामधीशाः ।
सूक्ष्मार्थसार्थपरमार्थविदो बभूवु श्रीवर्धमानविभुरस्तु स वः शिवाय ॥ १ ॥
निजधर्माचार्येभ्यो नत्वा निष्कारणैकबन्धुभ्यः । श्रीषडशीतिकशास्त्रं विवृणोमि यथागमं किंचित्॥२॥

तत्रादावेवाभीष्टदेवतास्तुत्यादिप्रतिपादिकामिमा गाथामाह—

नमिय जिणं जियमग्गणगुणठाणुवओगजोगलेसाओ। बधप्पबहूभावे संखिज्जाई किमवि वुच्छ ॥ १ ॥

टीका—जिनं नत्वा जीवस्थानादि वक्ष्य इति सबध । तत्र नत्वा नमस्कृत्य, नमस्कारो हि चतुर्धा—द्रव्यतो नामैको न भावतो यथा पालकादीना, भावतो नामैको न द्रव्यतो यथाऽनुत्तरोपपातिसुरादीना, एको द्रव्यतोऽपि भावतोऽपि यथा शाम्बकुमारप्रभृतीना, एको न द्रव्यतो नापि भावतो यथा कपिलादीनाम् । ततो द्रव्यभावरूपेण भावनमस्कारेण नमस्कृत्य । कमित्याह—जिन रागद्वेषमोहादिदुर्वारवैरिवारजेतार वीतराग परमार्हत्यमहिमालंकृतं तीर्थकरमित्यर्थः । अनेन परमाभीष्टदेवतानमस्कारेणैकान्तिकमात्यन्तिकभावमंगलमाह, तेन च शास्त्रस्यापरिसमाप्तेर्निष्प्रत्यूहता भवतीति । क्त्वाप्रत्ययस्य चोत्तरक्रियासापेक्षत्वादुत्तरक्रियामाह—जीवमार्गणागुणस्थानादि वक्ष्ये । इह स्थानशब्दस्य प्रत्येकं योगाज्जीव-

स्थानानि, मार्गणास्थानानि, गुणस्थानानि । तत्र जीवन्ति यथायोग्यं प्राणान् धारयन्तीति जीवाः । प्राणिनः शरीरभृत
इति पर्यायाः, तेषां जीवानां स्थानानि सूक्ष्मापर्याप्तैकेन्द्रियत्वादयोऽवान्तरविशेषाः, तिष्ठन्ति जीवा एष्विति कृत्वा जीव-
स्थानानि । मार्गणं जीवादीनां पदार्थानामन्वेषणं मार्गणा, तस्याः स्थानानि आश्रया मार्गणास्थानानि वक्ष्यमाणानि गत्या-
दीनि । गुणा ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषाः, स्थानं पुनरेतेषां शुद्ध्यशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः, ति-
ष्ठन्ति गुणा अस्मिन्निति कृत्वा गुणानां स्थानानि गुणस्थानानि परमपदप्रासादशिखरारोहणसोपानकल्पानि स्वोपज्ञकर्म-
स्तवटीकायां सविस्तरमभिहितानि इहैव वा किंचिद्वक्ष्यमाणानि मिथ्यादृष्टिप्रभृतीनि चतुर्दश । 'उवओगत्ति' उपयोज-
नमुपयोगो बोधरूपो जीवव्यापारः 'भावे घञ्' (सि. हे. ५-३-१८ भावाकर्त्रोः), यद्वोपयुज्यते वस्तुपरिच्छेदं प्रति व्यापा-
र्यत इत्युपयोगः 'कर्मणि घञ्,' यदिवोपयुज्यते वस्तुपरिच्छेदं प्रति जीवोऽनेनेत्युपयोगः 'पुंनाम्नि घः' (सि. हे. ५-३-१३)
इति करणे घप्रत्ययः, सर्वत्र जीवस्वतत्त्वभूतोऽवबोध एवोपयोगो मन्तव्यः । 'योग त्ति' योजनं योगो जीवस्य वीर्यं
परिस्पन्द इति यावत्, यदिवा युज्यते धावनवल्गनादिक्रियासु व्यापार्यत इति योगः 'कर्मणि घञ्' यद्वा युज्यते संबध्यते
धावनवल्गनादिक्रियासु जीवोऽनेनेति 'पुंनाम्नि' इति करणे घप्रत्ययः । स च मनोवाक्कायलक्षणसहकारिकारणभेदात्त्रिविधो
वक्ष्यमाणरूपः । 'लेसाउ त्ति' लिश्यते श्लिष्यते कर्मणा सहात्माऽनयेति लेश्या, कृष्णादिद्रव्यसाचिव्यादात्मनः शुभा-
शुभपरिणामविशेषः । यदुक्तं–"कृष्णादिद्रव्यसाचिव्यात्परिणामोऽयमात्मनः । स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्तते ॥१॥"
इति । सा च षोढा–कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या । आसां च स्वरूपं जंबूफल-

खादकपट्पुरुषदृष्टान्तेन ग्रामघातनप्रचलितचौरषट्कदृष्टान्तेन वैवमवसेयम्–" जह जबुपायवेगो सुपक्कफलभरियनमियसाहग्गो । दिठ्ठो छहिं पुरिसेहिं ते बिंती जबु भक्खेमो ॥ १ ॥ किह पुण ते बिंतेगो आरुहणे हुज्ज जीयसदेहो । तो छिंदिऊण मूलाउ पाडिय ताई भक्खेमो ॥ २ ॥ बीयाह इहहेण किं छिन्नेण तरुणा उ अम्ह ति । साहा महल्ल ( छा ) छिंदह तइओ बेई पसाहाओ ॥ ३ ॥ गुच्छे चउत्थओ पुण पचमो बेइ गिण्हह फलाइ । छट्ठो उ बेइ पडिया एए च्चिय खायहा घित्तु ॥ ४ ॥ दिट्ठतस्सोवणओ जो बेइ तरु तु छिंद मूलाओ । सो वट्टइ किण्हाए साहमहल्लाओ नीलाए ॥ ५ ॥ हवइ पसाहा काऊ गुच्छा तेऊ फलाइ पम्हाए । पडियाइ सुक्कलेसा अहवा अन्न इमाहरणम् ॥ ६ ॥ चोरा गामवहत्थ विणिग्गया एगु बेड घाएह । ज पिच्छह त सव्व दुपयं च चउप्पय वावि ॥ ७ ॥ बीओ माणुस पुरिसे य तईओ साउहे चउत्थो उ । पच-

---

१ यथा जबूपादप एक सुपक्कफलभरितनमितशाखाग्र । दृष्ट षड्भि पुरुषैस्ते ब्रुवते जबूनि भक्षयाम ॥ १ ॥ कथ पुनस्ते ब्रुवन्ति, एक ( आह ) आरोहणे भवति जीवसदेह । ततश्छित्त्वा मूलत पातयित्वा तानि भक्षयाम ॥ २ ॥ द्वितीय आह तावता किं छिन्नेन तरुणा तु अस्माकमिति । शाखा महतीश्छिन्त तृतीयो ब्रवीति प्रशाखा ॥ ३ ॥ गुच्छाश्चतुर्थक पुन पचमो ब्रवीति गृह्णीत फलानि । षष्ठस्तु ब्रवीति पतितान्येवैतानि खादत गृहीत्वा ॥ ४ ॥ दृष्टान्तस्योपनयो योऽब्रवीत्तरु तु छिन्त मूलत । स वर्तते कृष्णाया शाखामहतीर्नीलायाम् ॥ ५ ॥ भवति प्रशाखा ( छिन्तेति ) कापोती गुच्छास्तैजसी फलानि पद्मा । पतितानि शुक्लश्लेया अथवेदमन्यदाहरणम् ॥ ६ ॥ चौरा ग्रामवधार्थं विनिर्गता एको ब्रवीति घातयत । य प्रेक्षध्व त सर्वं द्विपद च चतुष्पद वापि ॥७॥ द्वितीयो मनुष्यान् तृतीय पुरुषान् सायुधाश्चतुर्थस्तु । पचमस्तु युध्यत षष्ठ पुनस्तत्रेद भणति ॥ ८ ॥

मउं जुझंते ठणो पुण तज्ञिमं ज्ञणइ ॥ ८ ॥ इक्कं ता हरह धणं वीयं मारेह मा कुणह एयं । केवल हरह धणं ता उव-संहारो इमो तेसिं ॥ ए ॥ सवे मारेह त्ति वट्टइ सो किएहलेसपरिणामे । एवं कमेण सेसा जा चरमो सुक्कलेसाए ॥१०॥"

अस्यैव दृष्टान्तद्वयस्य संग्रहगाथा—"मूलं साहपसाहागुच्छफले छिंद पडियजरकणया । सवं माणुस पुरिसा साउह जुज्झंत धणहरणा ॥ १ ॥" आसु च लेश्यासु यो जीवो यस्यां लेश्यायां वर्तते स प्रदर्श्यते—"वेरेण निरणुकंपो अइ-चंमो डुंमुहो खरो फरुसो । किएहाइ अणझप्पो वहकरणरउं य तक्कालं ॥ १ ॥ मायाडंजे कुसलो उक्कोडालुद्ध चवलच-लचित्तो । मेहुणतिवाज्ञिरउं अलियपलावी य नीलाए ॥ २ ॥ मूढो आरंज्ञपिउं पावं न गणेइ सवकजेसु । न गणेइ हाणिवुड्ढी कोहजुउं काउलेसाए ॥ ३ ॥ दरको संवरसीलो रिजुज्ञावो दाणसीलगुणजुत्तो । धम्मंमि होइ वुद्धी अरूसणो

---

एकं तावत् धनं हरथ द्वितीयं मारयथ मा कार्ष्टैतत् । तत्केवलं धनं हरत उपसंहारस्त्वयमेपाम् ॥९॥ सर्वान्घातयतेति वर्तते कृष्ण-लेश्यापरिणामे । एवं क्रमेण शेषा यावच्चरमः शुक्लेश्यायां ॥ १० ॥ १ मूलं शाखाः प्रशाखा गुच्छान् फलानि छिन्त पतितभक्षणता । सर्वं मनुष्यान् पुरुषान् सायुधान् युध्यतः ( हन्त ) धनहरणं ॥ १ ॥ २ वैरेण निरनुकंपः अतिचंडः दुर्मुखः खरः परुषः । कृष्णायामन-ध्यात्मः वधकरणरतश्च तत्कालम् ॥ १ ॥ मायादंभे ( रंभे ) कुशल उत्कोचालुब्धश्चपलचलचित्तः । मैथुनतीव्राभिरतिः अलिकप्रलापी च नीलायाम् ॥ २ ॥ मूढ आरंभप्रियः पापं न गणयति सर्वकार्येषु । न गणयति हानिवृद्धी क्रोधयुतः कापोतलेश्यायाम् ॥ ३ ॥ दक्षः संव-रशील ऋजुभावो दानशीलगुणयुक्तः । धर्म भवति बुद्धिः अरोपणः तेजोलेश्यायाम् ॥ ४ ॥

तेउलेसाए ॥ ४ ॥ सत्ताणुकंपो य थिरो दाण खलु देइ सवजीवाण । अइकुसलबुद्धिमंतो धिइमंतो पम्हलेसाए ॥ ५ ॥ धम्ममि होइ वुद्धी पाव वज्जेइ सवकज्जेसु । आरंभेसु न रज्जइ अपक्खवाई य सुक्काए ॥ ६ ॥" ततो जीवस्थानानि च मार्गणास्थानानि च गुणस्थानानि चोपयोगश्च योगश्च लेश्याश्चेति द्वन्द्वे द्वितीया शस् । 'बध त्ति' मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तर पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मन· क्षीरनीरवद्वह्न्ययःपिण्डवद्वाऽन्योन्यानुगमाभेदात्मक सबधो बन्ध । उपलक्षणत्वादुदयोदीरणासत्ताना परिग्रह । तत्र तेषामेव कर्मपुद्गलाना यथास्वस्थितिबद्धानामपवर्तनादिकरणकृते स्वाभाविके वा स्थित्यपचये सत्युदयसमयप्राप्ताना विपाकवेदनमुदय । तेषामेव कर्मपुद्गलानामकालप्राप्ताना जीवसामर्थ्यविशेषादुदयावलिकाया प्रवेशनमुदीरणा । तेषामेव कर्मपुद्गलाना बन्धसक्रमाभ्या लब्धात्मलाभाना निर्जरणसक्रमकृतस्वरूपप्रच्युत्यभावे सति सद्भाव सत्ता । यद्वा बन्ध इति पदैकदेशेऽपि भामा सत्यभामेति न्यायेन पदप्रयोगदर्शनाद्बन्धहेतवो मिथ्यात्वाविरतिकषाययोगरूपा वक्ष्यमाणा गृह्यन्ते । 'अप्पवहू त्ति' भावप्रधानत्वान्निर्देशस्य अल्पवहुत्वं गत्यादिरूपमार्गणास्थानादीना परस्पर स्तोकभूयस्त्व । 'भाव त्ति' जीवाजीवाना तेन तेन रूपेण भवनानि परिणमनानि भावा औपशमिकादय । ततो बन्धश्चाल्पवहुत्व च भावाश्चेति द्वन्द्वे द्वितीयावहुवचन शस् । सूत्रे च 'अप्पवहू' इत्यत्र दीर्घत्व 'दीर्घह्रस्वौ मिथो वृत्तौ' ( सि. हे. ८-१-४ ) इति प्राकृतसूत्रेण । 'सखिज्जाइ त्ति' संख्या-

सत्त्वानुकपकश्च स्थिर दान ददात्येव सर्वजीवेभ्य । अतिकुशलबुद्धिमान्धृतिमान् ( च ) पद्मलेश्यायाम् ॥ ५ ॥ धर्मे भवति बुद्धि पाप वर्जयति सर्वकार्येषु । आरंभेषु न रजति अपक्षवादी ( पाती ) च शुक्लायाम् ॥ ६ ॥

यते चतुष्पल्यादिप्ररूपणया परिमीयत इति संख्येयम् । आदिशब्दादसंख्येयानन्तकपरिग्रहः। तत एवं जीवस्थानादिकमनन्तकपर्यवसानं द्वारकलापमत्र वक्ष्य इत्यनेनाभिधेयमाह । कथं वक्ष्य इत्याह–'किमवित्ति' किमपि किंचित् स्वल्पं न विस्तरवत्, दुःषमानुभावेनापचीयमानमेधायुर्बलादिगुणानामैदंयुगीनजनानां विस्तराभिधाने सत्युपकारासंभवात्, तदुपकारार्थं चैष शास्त्रारंभप्रयासः । एतेन संक्षिप्तरुचिसत्त्वानाश्रित्य प्रयोजनमाचष्टे । संबन्धस्त्वर्थापत्तिगम्यः, स चोपायोपेयलक्षणः साध्यसाधनलक्षणो गुरुपर्वक्रमलक्षणो वा स्वयमभ्यूह्यः । इह च मार्गणास्थानगुणस्थानादयः सर्वे पदार्था न जीवपदार्थमन्तरेण विचारयितुं शक्यन्त इति प्रथमं जीवस्थानग्रहणम् । जीवाश्च प्रपंचतो निरूप्यमाणा गत्यादिमार्गणास्थानैरेव निरूपयितुं शक्यन्त इति तदनन्तरं मार्गणास्थानग्रहणम् । तेषु च मार्गणास्थानेषु वर्तमाना जीवा न कदाचिदपि मिथ्यादृष्ट्याद्यन्यतमगुणस्थानकविकला भवन्तीति ज्ञापनाय मार्गणास्थानकानन्तरं गुणस्थानकग्रहणम् । अमूनि च गुणस्थानकानि परिणामशुध्ध्यशुद्धिप्रकर्षापकर्षरूपाण्युपयोगवतामेवोपपद्यन्ते नान्येषामाकाशादीनां, तेषां ज्ञानादिरूपपरिणामरहितत्वादिति प्रतिपत्त्यर्थं गुणस्थानकग्रहणानन्तरमुपयोगग्रहणम् । उपयोगवन्तश्च मनोवाक्कायचेष्टासु वर्तमाना नियमतः कर्मसंबन्धभाजो भवन्ति । तथा चागमः–"[1]जावणं एस जीवे एयइ वेयइ चलइ फंदई घट्टइ खुब्भइ तं तं भावं

---

१ "यावदेष जीव एजते व्येजते चलति स्पन्दते घट्टते क्षुभ्यति तं तं भावं परिणमते तावदष्टविधबंधको वा सप्तविधबंधको वा षड्विधबंधको वा एकविधबंधको वा नाबंधकः"

परिणमइ ताव अट्ठविहबंधए वा सत्तविहबंधए वा छविहबंधए वा एगविहबंधए वा नो ण अबंधए " इति ज्ञापनार्थमुपयोगग्रहणानन्तरं योगग्रहणम्। योगवशाच्चोपात्तस्यापि कर्मणो यावन्न कृष्णाद्यन्यतमलेश्यापरिणामो जायते, तावन्न तस्य स्थितिपाकविशेषो भवति " स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेणेति " वचनप्रामाण्यात्, ततो योगवशादुपात्तस्य कर्मणो लेश्याविशेषतः स्थितिपाकविशेषो भवतीति प्रतिपत्तये योगानन्तरं लेश्याग्रहणम्। लेश्यावन्तश्च यथायोगैर्बन्धहेतुभिः कर्मबन्धोदयोदीरणासत्ता प्रकुर्वन्तीति ज्ञापनाय लेश्यानन्तरं बन्धग्रहणम्। बन्धोदयादियुक्ताश्च जीवा मार्गणास्थानाद्याश्रित्य नियमतः परस्परमल्पे वा भवेयुर्बहवो वेति निवेदनार्थं बन्धानन्तरमल्पबहुत्वग्रहणम्। ते च जीवा मार्गणास्थानादिष्वल्पे वा बहवो वा भवन्तोऽवश्यं षण्णामौपशमिकादिभावानां केषुचिद्भावेषु वर्तन्त इति प्रकटनार्थमल्पबहुत्वानन्तरं भावग्रहणम्। औपशमिकादिभाववतां च जीवानामल्पबहुत्वं नियमतः सङ्ख्येयकेनासंख्येयकेनानन्तकेन वा निरूपणीयमिति भावग्रहणानन्तरं सङ्ख्येयकादिग्रहणमिति"। यद्यपि चेह सामान्येनोक्तं जीवस्थानादि वक्ष्ये तथाप्येवं विशेषतो द्रष्टव्यं। जीवस्थानकेषु गुणस्थानकयोगोपयोगलेश्याकर्मबन्धोदयोदीरणासत्ता वक्ष्ये, मार्गणास्थानकेषु पुनर्जीवस्थानकगुणस्थानकयोगोपयोगलेश्याल्पबहुत्वानि, गुणस्थानकेषु च जीवस्थानकयोगोपयोगलेश्याबन्धहेतुबन्धोदयोदीरणासत्ताल्पबहुत्वानि। तत्र गाथा[1]—" चउदसजियठाणेसु चउदसगुणठाणगाणि जोगा य। उवयोगलेसबंधुदउदीरणासत

१ चतुर्दशजीवस्थानेषु चतुर्दशगुणस्थानकानि योगाश्च। उपयोगलेश्याबन्धोदयोदीरणासत्ता अष्टपदानि ॥ १ ॥

अठ्ठपए ॥ १ ॥ चउदस मग्गणठाणेसु मूलपएसु बिसट्ठि इयरेसु । जियगुणजोगुवओगा लेसप्पबहुं च छठ्ठाणा ॥ २ ॥ चउदसगुणठाणेसु जियजोगुवओगलेसबंधा य । बंधुदयुदीरणाओ संतप्पबहुं च दस ठाणा ॥ ३ ॥" इति ॥ १ ॥

तत्र यथोद्देशं निर्देश इति न्यायात्प्रथमं तावज्जीवस्थानानि निरूपयन्नाह—

**इह सुहुमबायरेगिंदिबितिचउअसंनिसन्निपंचिंदी । अपजत्ता पज्जत्ता कमेण चउदस जियठाणा ॥ २ ॥**

टीका—इहास्मिञ्जगति अनेन क्रमेण चतुर्दश जीवस्थानानि प्राग्निरूपितशब्दार्थानि भवन्ति । केन क्रमेणेति चेदित्याह—सूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरसंज्ञिसंज्ञिपंचेन्द्रियाः, एते च सर्वेऽपि प्रत्येकं पर्याप्तका अपर्याप्तकाश्चेति । तत्रैकं स्पर्शनलक्षणमिन्द्रियं येषां त एकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतयः, ते च प्रत्येकं द्वेधा, सूक्ष्मा बादराश्च, सूक्ष्मनामकर्मोदयात् सूक्ष्माः सकललोकव्यापिनः, बादरनामकर्मोदयाद्बादरास्ते च लोकप्रतिनियतदेशवर्तिनः । द्वित्रिचतुरसंज्ञिसंज्ञिपंचेन्द्रिया इति, इन्द्रियशब्दस्य प्रत्येकं योगाद्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रिया असंज्ञिसंज्ञिभेदभिन्नाश्च पंचेन्द्रियाः । तत्र द्वे स्पर्शनरसनलक्षणे इन्द्रिये येषां ते द्वीन्द्रियाः कृमिपूतरकचन्दनकशंखकपर्दजलौकाप्रभृतयः । त्रीणि स्पर्शनरसनघ्राणरूपाणीन्द्रियाणि येषां ते त्रीन्द्रियाः कुंथुमत्कुणयूकागर्दभेन्द्रगोपकमत्कोटकादयः । चत्वारि स्पर्शनरसनघ्राणचक्षुर्ल-

---

१ चतुर्दशमार्गणास्थानेषु मूलपदेषु द्विषष्टिरितरेषु । जीवगुणयोगोपयोगालेश्याल्पबहुत्वं च षट् स्थानानि ॥ २ ॥ चतुर्दशगुणस्थानेषु जीवयोगोपयोगलेश्याबन्धाश्च । बन्धोदयोदीरणाः सत्तालपबहुत्वं च दश स्थानानि ॥ ३ ॥

क्षणानीन्द्रियाणि येषा ते चतुरिन्द्रिया भ्रमरमक्षिकामशकवृश्चिकादय । पच स्पर्शनरसनघ्राणचक्षु श्रोत्रलक्षणानीन्द्रियाणि येषा ते पचेन्द्रिया मत्स्यमकरजकखजसारसहसनरसुरनारकादय, ते च द्विधा सज्ञिनोऽसज्ञिनश्च, तत्र सज्ञान सज्ञा भूतजवङ्गाविजावस्वजावपर्यालोचन "उपसर्गादात" (५-३-११०) इत्यङ्प्रत्यय, सा विद्यते येषा ते सज्ञिन, विशिष्टस्मरणादिरूपमनोविज्ञानजाज इति यावत्, तद्विपरीता असज्ञिनो विशिष्टस्मरणादिरूपमनोविज्ञानविकला इत्यर्थ । एते च सूक्ष्मैकेन्द्रियादय प्रत्येक द्विधा पर्याप्तका अपर्याप्तकाश्च, पर्याप्तिर्नाम पुद्गलोपचयज पुद्गलग्रहणपरिणमनहेतु शक्तिविशेष, सा च विषयजेदात् षोढा–आहारपर्याप्ति, शरीरपर्याप्ति, इन्द्रियपर्याप्ति, उच्छ्वासपर्याप्ति, जाषापर्याप्ति, मन पर्याप्तिश्चेति। तत्र यया बाह्यमाहारमादाय खलरसरूपतया परिणमयति साहारपर्याप्ति, यया रसीजूतमाहार रसासृग्मासमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्ति, यया धातुरूपतया परिणमितमाहारमिन्द्रियरूपतया परिणमयति सेन्द्रियपर्याप्ति, यया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुचति सोच्छ्वासपर्याप्ति, यया तु जाषाप्रायोग्यवर्गणाद्रव्य गृहीत्वा जाषात्वेन परिणमय्यालम्ब्य च मुंचति सा जाषापर्याप्ति, यया पुनर्मनोयोग्यवर्गणादलिक गृहीत्वा मनस्त्वेन परिणमय्यालम्ब्य च मुचति सा मन पर्याप्ति । एताश्च यथाक्रममेकेन्द्रियाणा द्वीन्द्रियादीना सज्ञिना च चतुःपचषट्सख्या जवन्ति । यदजाणि–"आहारसरीरिंदियपज्जत्ती आणपाणजासमणे। चत्तारि पंच उप्पिय एगिंदियविगलसनीणं ॥ १ ॥" पर्याप्तयो विद्यन्ते येषा ते पर्याप्ता. "अभ्रादिभ्य."

१ आहारशरीरेंद्रियानप्राणभाषामनासि पर्याप्तय । चतस्र पच षडपि च एकेंद्रियविकलसज्ञिनाम् ॥

( सि. हे. ७-२-४६ ) इति मत्वर्थीयोऽप्रत्ययः, स्वार्थिककप्रत्ययोपादानात्पर्याप्तकाः । ये पुनः स्वयोग्यपर्याप्तिपरिसमाप्तिविकलास्तेऽपर्याप्तकाः, ते च द्विधा लब्ध्या करणैश्च, तत्र येऽपर्याप्तका एव सन्तो म्रियन्ते न पुनः स्वयोग्यपर्याप्तीः सर्वा अपि समर्थयन्ते ते लब्ध्यपर्याप्तकाः, ये पुनः करणानि शरीरेन्द्रियादीनि न तावन्निर्वर्तयन्ति अथवाऽवश्यं पुरस्तान्निर्वर्तयिष्यन्ति ते करणापर्याप्तकाः । इह चैवमागमः-"लब्ध्यपर्याप्तका अपि नियमादाहारशरीरेन्द्रियपर्याप्तिपरिसमाप्तावेव म्रियन्ते नार्वाग्, यस्मादागामिजवायुर्बध्ध्वा म्रियन्ते सर्वे एव देहिनः, तच्चाहारशरीरेन्द्रियपर्याप्तिपर्याप्तानामेव बध्यत" इति ॥ २ ॥

तदेवं निरूपितानि जीवस्थानानि, अथैतेष्वेव जीवस्थानेषु गुणस्थानानि प्रचिकटयिषुराह-

**बायरअसंनिविगले अपज्ज पढमबिय संनिअपजत्ते । अजयजुय सन्निपज्जे सवगुणा मिछ सेसेसु ॥३॥**

टीका-इह चतुर्दश गुणस्थानानि भवन्ति । तद्यथा-मिथ्यादृष्टिगुणस्थानं, सासादनसम्यग्दृष्टिगुणस्थानं, सम्यग्मिथ्यादृष्टिगुणस्थानं, अविरतसम्यग्दृष्टिगुणस्थानं, देशविरतिगुणस्थानं, प्रमत्तसंयतगुणस्थानं, अप्रमत्तसंयतगुणस्थानं, अपूर्वकरणगुणस्थानं, अनिवृत्तिबादरसंपरायगुणस्थानं, सूक्ष्मसंपरायगुणस्थानं, उपशान्तकषायवीतरागछद्मस्थगुणस्थानं, क्षीणकषायवीतरागछद्मस्थगुणस्थानं, सयोगिकेवलिगुणस्थानं, अयोगिकेवलिगुणस्थानम् । एतेषामर्थलेशोऽयम्-"जीवाइपयत्थेसु जिणोवइट्ठेसु

१ जीवादिपदार्थेषु जिनोपदिष्टेषु याऽश्रद्धा । श्रद्धापि च मिथ्या या च विपरीतप्ररूपणा ॥ १ ॥

जा अमद्दहणा । मद्दहणा त्रि य मिच्छा विवरीयपरूवणा जा य ॥१॥ ससयकरण ज पि य ज तेसु अणायरो पयत्थेसु । त पचविह मिच्छ तद्दिट्ठी मिच्छदिट्ठी य ॥ २ ॥ उवसमअद्धाए ठिओ मिच्छमपत्तो तमेव गतुमणो । सम आसायतो सासायण सो मुणेयव्वो ॥ ३ ॥ जह गुडदहीणि विसमाइभावसहियाणि हुति मीसाणि । भुजतस्स तहोभयदिट्ठीओ मीसदिट्ठीओ ॥४॥ तिविहे वि हु सम्मत्ते थोवावि न विरइ जस्स कम्मवसा । सो अविरउ त्ति भन्नइ देसे पुण देसविरईओ ॥ ५ ॥ विगहा-कसायनिद्दासद्दाइरओ भवे पमत्तु त्ति । पचसमिओ तिगुत्तो अपमत्तजई मुणेयव्वो ॥ ६ ॥ अप्पुव अप्पुवं जहुत्तर जो क-रेइ ठिइकम । रसकंमं तग्घायं सो होइ अपुव्वकरणु त्ति ॥ ७ ॥ विनिवट्टति विसुद्धि समगपइट्ठा वि जमि अन्नुन्नं । तत्तो नियट्टिठाण विवरीयमओ वि अनियट्टी ॥ ८ ॥ थूलाण लोहखडाण वेयगो बायरो मुणेयव्वो । सुहुमाण होइ सुहुमो उव-

---

१ यदपि च संशयकरण यस्तेषु पदार्थेष्वनादर । तत्पचविध मिथ्यात्व तद्दृष्टिश्च मिथ्यादृष्टि ॥२॥ उपशमाध्वनि स्थितो मिथ्यात्वमप्राप्तस्तमेव गतुमना । सम्यक्त्व आस्वादयन् स सास्वादनो ज्ञातव्य ॥३॥ यथा गुडदधिनी विषमादिभावसहिते भवतो मिश्रे । भुजानस्य तथोभयदृष्टेर्मिश्रदृष्टिक ॥४॥ त्रिविधेपि च सम्यक्त्व स्तोकापि विरतिर्न यस्य कर्मवशात् । सोऽविरत इति भण्यते देश पुनर्देशविरते ॥५॥ विकथाकषायनिद्राशब्दादिरतो भवेत्प्रमत्त इति । पचसमितस्त्रिगुप्तोऽप्रमत्तयतिर्ज्ञातव्य ॥६॥ अपूर्वमपूर्वं यथोत्तर य करोति स्थितिकाड । रसकाड तद्घात स भवत्यपूर्वकरण इति ॥ ७ ॥ विनिवर्त्तते विशुद्धि समकप्रविष्टा अपि यस्मिन्नन्योन्यम् । तस्मान्निवृत्तिस्थान विपरीतमस्मादप्यनिवृत्ति ॥ ८ ॥ स्थूलानां लोभखडानां वेदको बादरो ज्ञातव्य । सूक्ष्माणा भवति सूक्ष्म उपशातेषु तूपशान्त ॥ ९ ॥

संतेहिं तु उवसंतो ॥ ए ॥ खीणंमि मोहणिज्जे खीणकसाउ सजोग जोगि त्ति ( गत्ति )। होइ पउत्ता य तउ अपउत्ता होइ हु अजोगी ॥ १० ॥ अविरयसासणमिछा परजविया न उण सेसगुणगणा। मिछस्स तिन्नि जंगा ग्रावलियं होइ, सासाणं ॥ ११ ॥ तित्तीसयर चउत्थं पुव्वाणं कोमि जण तेरसमं। लहुपंचरकर चरिमं अंतमुहू सेसगुणगणा ॥ १२ ॥"
ततो वादराश्च बादरैकेन्द्रियाः पृथिव्यंबुवनस्पतिलक्षणाः, असंज्ञी च विशिष्टस्मरणादिरूपमनोविज्ञानविकलः, विकलाश्च विकलेन्द्रिया द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाः, ( द्वंद्वे ) वादरासंज्ञिविकलं तस्मिन् वादरासंज्ञिविकले। किं विशिष्टे ? 'अपज त्ति' अपर्याप्ते। कोऽर्थः ? अपर्याप्तबादरैकेन्द्रियेषु पृथिव्यंबुवनस्पतिषु, तथाऽपर्याप्तेऽसंज्ञिनि, तथा विकलेषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेष्वपर्याप्तेषु। किमित्याह-'पढमविय त्ति' इह 'सवगुणा' इति पदाद्गुणशब्दस्याकर्षणं, ततः प्रथमं मिथ्यादृष्टिगुणस्थानं द्वितीयं सासादनगुणस्थानं जवति। अथ तेजोवायुवर्जनं किमर्थमिति चेदुच्यते, तेजोवायूनां मध्ये सम्यक्त्वलेशवतामपि उत्पादाजावात् सम्यक्त्वं चासादयतां सासादनजावाज्युपगमात्। नन्वेकेन्द्रियाणामागमे सासादनजावो नेष्यते "उजयाजावो पुढवाइएसु सम्मत्तलद्धीए" इति परममुनिप्रणीतवचनप्रामाण्यात्, अत एवागमे एकेन्द्रिया अज्ञानिन एवोक्ताः, द्वीन्द्रियादयश्च केचिदपर्याप्तावस्थायां सासादनजावाभ्युपगमाज्ज्ञानिन उक्ताः केचिच्च

---

१ क्षीणे मोहनीये क्षीणकषायः सयोगी योगत्रयस्था भवति। प्रयुक्ता च ततोऽप्रयुक्ता भवत्येवायोगी ॥ १० ॥ अविरतसास्वादन-मिथ्यात्वानि परभविकानि न पुनः शेषगुणस्थानानि। मिथ्यात्वस्य त्रयो भंगाः षडावलिकं भवति सास्वादनम् ॥ ११ ॥ त्रयस्त्रिंशदतराणि चतुर्थं पूर्वाणां कोटिरूना त्रयोदशं। लघुपंचाक्षरं चरममंतर्मुहूर्त्तं शेषगुणस्थानानि। २ सम्यक्त्वलब्धेरुभयाभावः पृथिव्यादिकेषु।

तदभावादज्ञानिनः, यदि पुनरेकेन्द्रियाणामपि सासादनभाव स्यात्तर्हि तेऽपि द्वीन्द्रियादिवज्ज्ञानयथाप्युच्येरन्, न चोच्यन्ते, यदुक्तम्–"एगिंदिया णं भंते किं नाणी अन्नाणी ? गोयमा, नो नाणी नियमा अन्नाणी । तथा बेइंदिया णं भंते किं नाणी अन्नाणी ? गोयमा, नाणी वि अन्नाणी वि" इत्यादि । तत्कथमिहापर्याप्तबादरैकेन्द्रियेषु पृथिव्यबुवनस्पतिलक्षणेषु सासादनगुणस्थानकभाव उक्त ? सत्यमेतत्, किं तु मा त्वरिष्ठाः, सर्वमेतदग्रे प्रतिविधास्याम इति । 'संनिअपजत्ते अजयजुय त्ति' सञ्ज्ञिन्यपर्याप्ते तदेव पूर्वोक्त मिथ्यादृष्टिसासादनलक्षणगुणस्थानकद्वयमयतयुतं भवति । यमनं यत विरतिरित्यर्थ , न विद्यते यत यस्य सोऽयतोऽविरतसम्यग्दृष्टिरित्यर्थ , तेन युत सयुक्तमयतयुतम् । इदमुक्त भवति–संज्ञिन्यपर्याप्ते त्रीणि मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टिलक्षणानि गुणस्थानानि भवन्ति, न शेषाणि सम्यग्मिथ्यादृष्ट्यादीनि तेषा पर्याप्तावस्थायामेव भावात् । 'सनिपज्जे सबगुण त्ति' सञ्ज्ञिनि पर्याप्ते सर्वाण्यपि मिथ्यादृष्ट्यादीनि अयोगिपर्यन्तानि गुणस्थानकानि भवन्ति, सञ्ज्ञिन सर्वपरिणामसम्भवात् । अथ कथं सञ्ज्ञिन सयोग्ययोगिरूपगुणस्थानकद्वयसम्भव ? तद्भावे तस्यामनस्कतया सञ्ज्ञित्वायोगात् ? । न, तदानीमपि हि तस्य द्रव्यमन सबन्धोऽस्ति, समनस्काश्चाविशेषेण सञ्ज्ञिनो व्यवह्रियन्ते, ततो न तस्य भगवत सञ्ज्ञिताव्याघात. । यदुक्त सप्ततिकाचूर्णौ–"मणकरणं केवलिणो वि अत्थि, तेण सनिणो भन्नंति, मनोविन्नाणं पडुच्च ते सनिणो न भवति त्ति" । 'मिच्छु सेसेसु त्ति' मिथ्यात्वं शेषेषु भणितावशिष्टेषु पर्याप्तापर्या-

१ भदंतैकेन्द्रिया किं ज्ञानिनोऽज्ञानिन ? गौतम न ज्ञानिनो नियमादज्ञानिन । भदन्त द्वीन्द्रिया । किं ज्ञानिनोऽज्ञानिन ! गौतम ज्ञानिनोऽप्यज्ञानिनोऽपि । २ मन करणं केवलिनोऽप्यस्ति तेन सञ्ज्ञिनो भण्यते । मनोविज्ञान प्रतीत्य ते न सञ्ज्ञिन स्यु ।

ससूक्ष्मपर्याप्तबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपंचेन्द्रियलक्षणेषु सप्तसु जीवस्थानेषु मिथ्यादृष्टिगुणस्थानमेव भवति न सासादनमपि। यतः परभवादागच्छतामेव घंटालालान्यायेन सम्यक्त्वलेशमास्वादयतामुत्पत्तिकाल एवापर्याप्तावस्थायां जन्तूनां लभ्यते न पर्याप्तावस्थायां, अतः पर्याप्तसूक्ष्मबादरद्वित्रिचतुरसंज्ञिपंचेन्द्रियाणां तदभावः, अपर्याप्तसूक्ष्मैकेन्द्रियेऽपि न सासादनसंभवः, सासादनस्य मनाक् शुभपरिणामरूपत्वात्, महासंक्लिष्टपरिणामस्य च सूक्ष्मैकेन्द्रियमध्येउत्पादाभिधानादिति ॥ ३ ॥

तदेवं निरूपितानि जीवस्थानकेषु गुणस्थानकानि, सांप्रतं योगा वक्तुमवसरप्राप्तास्ते च पंचदश, तद्यथा—सत्यवाग्योगोऽसत्यवाग्योगः सत्यमृषावाग्योगोऽसत्यामृषावाग्योगः, तत्स्वरूपं चेदम्—"सच्चा हिया सतामिह संतो मुणयो गुणा पयत्था वा। तव्विवरीया मोसा मीसा जा तदुभय सहावा ॥ १ ॥ अणहिगया जा तीसु वि सद्दुच्चिय केवलो असच्चमुसा"। एवं मनोयोगोऽपि चतुर्धा द्रष्टव्यः। काययोगः सप्तधा—औदारिकं, औदारिकमिश्रं, वैक्रियं, वैक्रियमिश्रं, आहारकं, आहारकमिश्रं, कार्मणं च। तत्रौदारिककाययोगस्तिर्यङ्मनुष्ययोः, तयोरेवापर्याप्तयोरौदारिकमिश्रकाययोगः, वैक्रियकाययोगो देवनारकयोस्तिर्यङ्मनुष्ययोर्वा वैक्रियलब्धिमतोः, वैक्रियमिश्रकाययोगोऽपर्याप्तयोर्देवनारकयोस्तिर्यङ्मनुष्ययोर्वा वैक्रियस्यारंभकाले परित्यागकाले च, आहारकं चतुर्दशपूर्वविदः, आहारकमिश्रकाययोग आहारकस्य प्रारंभसमये परि-

---

१ सतां हिता सत्येह संतो मुनयो गुणाः पदार्था वा। तद्विपरीता मृषा मिश्राया तदुभयस्वभावा। १। या तिसृष्वपि अनधिगतस्वभावा केवलः शब्द एव (सा) असत्यमृषा।

त्यागकाले च, कार्मणकाययोगोऽष्टप्रकारकर्मविकाररूपशरीरचेष्टास्वरूपोऽन्तरालगतावुत्पत्तिप्रथमसमये केवलिसमुद्घातावस्थायां च। तानेतान् योगाञ्जीवस्थानकेषु व्याचिख्यासुराह–

**अपजत्तछक्कि कम्मुरलमीसजोगा अपज्जसन्नीसु। ते सविउव्वमीस एसु तणुपज्जेसु उरलमन्ने ॥ ४ ॥**

टीका–अपर्याप्ताना सूक्ष्मबादरद्वित्रिचतुरसञ्ज्ञिपञ्चेन्द्रियाणां षट्कं अपर्याप्तषट्कं तस्मिन्नपर्याप्तषट्के सञ्ज्ञिपञ्चेन्द्रियापर्याप्तवर्जितेषु षट्सु अपर्याप्तेषु योगौ भवतः। द्विवचनस्य बहुवचनं प्राकृतत्वात् यथा 'हत्था पाया' इत्यादौ। कौ योगावित्याह–कार्मणौदारिकमिश्रौ, तत्र कार्मणकाययोगोऽपान्तरालगतावुत्पत्तिप्रथमसमये च, शेषकाले त्वौदारिकमिश्रकाययोगः। 'अपज्जसन्नीसु ते सविउव्वमीस त्ति' अपर्याप्तसंज्ञिषु संज्ञ्यपर्याप्तजीवेषु तौ पूर्वोक्तौ कार्मणौदारिकमिश्रकाययोगौ भवतः। किं केवलौ? नेत्याह–सह वैक्रियमिश्रेण वर्तेते इति सवैक्रियमिश्रौ। तथा चापर्याप्तसंज्ञिनि त्रयो योगा भवन्ति कार्मणकाययोग औदारिकमिश्रकाययोगो वैक्रियमिश्रकाययोगश्च। तत्र कार्मणकाययोगोऽपान्तरालगतावुत्पत्तिप्रथमसमये च। शेषकाले तु तिर्यङ्मनुष्ययोरौदारिकमिश्रकाययोगः। सञ्ज्ञिनोऽपर्याप्तस्य देवनारकेषु पुनरुत्पद्यमानस्य वैक्रियमिश्रकाययोगो द्रष्टव्यो न शेषस्य, असम्भवात्। मिश्रता चात्र कार्मणेन सह द्रष्टव्या। अत्रैव मतान्तरमुपदर्शयन्नाह–एषु पूर्वनिर्दिष्टेषु शेषपर्याप्त्यपेक्षयाऽपर्याप्तेषु तनुपर्याप्त्या पर्याप्तेषु शरीरपर्याप्तेष्वित्यर्थः, औदारिकमौदारिककाययोगमन्ये केचिदाचार्याः शीलाङ्कादयः प्रतिपादयन्तीति शेषः। शरीरपर्याप्त्या हि परिसमाप्तिवत्या किल तेषां शरीरं परिपूर्णं निष्पन्नमिति कृत्वा।

---

१ हस्तौ पादौ।

तथा च तद्ग्रन्थः—“औदारिककाययोगस्तिर्यङ्मनुष्ययोः शरीरपर्याप्तेरूर्ध्वं तदारतस्तु मिश्र इति ”। नन्वनया युक्त्या संज्ञिनोऽपर्याप्तस्य देवनारकेषूत्पद्यमानस्य तनुपर्याप्त्या पर्याप्तस्य वैक्रियमपि शरीरमुत्पद्यत एव किमिह तन्नोक्तमिति ? उच्यते, उपलक्षणत्वादेतदपि द्रष्टव्यमित्यदोषः। यद्वा इहापर्याप्ता लब्ध्यपर्याप्तका एवान्तर्मुहूर्तायुषो द्रष्टव्यास्ते च तिर्यङ्मनुष्या एव घटन्ते, तेषामेवान्तर्मुहूर्तायुष्कत्वसंभवात्, न देवनारकास्तेषां जघन्यतोऽपि दशवर्षसहस्रायुष्कत्वात्। लब्ध्यपर्याप्तका अपि च जघन्यतोऽपीन्द्रियपर्याप्तौ परिसमाप्तायामेव म्रियन्ते, नार्वागित्युक्तमागमाभिप्रायेण। ततस्तेषां लब्ध्यपर्याप्तकानां शरीरपर्याप्त्या पर्याप्तानामौदारिकमेव शरीरमुत्पद्यते न वैक्रियमित्यदोषः। किं चान्यमतकथनेनायमभिप्रायः सूच्यते—यद्यपि तेषां शरीरपर्याप्तिः समजनिष्ट तथापीन्द्रियोच्छ्वासादीनामद्याप्यनिष्पन्नत्वेन शरीरस्यासंपूर्णत्वादत एव कार्मणस्याप्यद्यापि व्याप्रियमाणत्वादौदारिकमिश्रमेव तेषां युक्त्या घटमानमिति ॥ ४ ॥

**सव्वे संनिपज्जत्ते उरलं सुहुमे सभास(सु) तं चउसु। बायरि सविउव्विदुगं पजसंनिसु बार उवओगा ॥५॥**

टीका—सर्वे पंचदशापि योगा भवन्ति। तथाहि—चतुर्धा मनोयोगः, चतुर्धा वाग्योगः, सप्तधा काययोगः। क्वेत्याह—संज्ञिपर्याप्ते। संज्ञी चासौ पर्याप्तश्च संज्ञिपर्याप्तस्तस्मिन् संज्ञिपर्याप्ते। नन्वौदारिकमिश्रवैक्रियमिश्रकार्मणकाययोगाः कथं संज्ञिपर्याप्तस्य घटन्ते तेषामपर्याप्तावस्थाभावित्वात्? उच्यते—वैक्रियमिश्रं संयतादेर्वैक्रियप्रारम्भमाणस्य प्राप्यते, औदारिकमिश्रकार्मणकाययोगौ तु केवलिनः समुद्घातावस्थायाम्। यदाह भगवानुमास्वातिवाचकवरः—“औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः। मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ १ ॥ कार्मणशरीरयोगी चतुर्थके पंचमे तृतीये

चेति । ' पर्याप्तसूक्ष्मैकेन्द्रिये औदारिककाययोगो भवति । पर्याप्तशब्दश्च 'सव्वे संनिपज्जत्ते' इति पदात् डमरुकमणिन्यायेन सर्वत्र योज्य । 'चउसु त्ति' चतुर्षु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासज्ञिपंचेन्द्रियेषु पर्याप्तेषु तदेवौदारिक भवति । किं केवल ? नेत्याह–सभाप सह भाषयाऽसत्यामृपास्वरूपया "विगलेसुं असच्चमोस त्ति" वचनात् वर्तत इति सभाप, कोऽर्थ ? विकलत्रिकासज्ञिपचेन्द्रियेषु पर्याप्तेषु औदारिककाययोगासत्यामृपाभापालक्षणौ द्वौ योगावित्यर्थ । तदित्यनुवर्तते तदौदारिक सह वैक्रियद्विकेन वैक्रियवैक्रियमिश्रलक्षणेन वर्तत इति सवैक्रियद्विक बादरैकेन्द्रियपर्याप्ते भवति । अयमर्थ –बादरैकेन्द्रियपर्याप्ते औदारिककाययोगवैक्रियकाययोगवैक्रियमिश्रकाययोगलक्षणास्त्रयो योगा भवन्ति । तत्रौदारिककाययोग पृथिव्यप्तेजोवनस्पतीनां, वैक्रियद्विकं तु वायुकायस्येति ।

प्ररूपिता जीवस्थानेषु योगा , साम्प्रतमुपयोगा· प्ररूपणावसर प्राप्तास्ते च द्वादश, तद्यथा–मतिज्ञानश्रुतज्ञानावधिज्ञानमन पर्यवज्ञानकेवलज्ञानलक्षणानि पच ज्ञानानि, मत्यज्ञानश्रुताज्ञानविभगरूपाणि त्रीण्यज्ञानानि, चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनरूपाणि चत्वारि दर्शनानीत्येतानुपयोगान् जीवस्थानकेषु दिदर्शयिपुराह–'पजसनिसु बार उवओग त्ति' पजशब्देन पर्याप्त उच्यते, तत पर्याप्ताश्च ते सज्ञिनश्च पर्याप्तसज्ञिनस्तेषु पर्याप्तसज्ञिषु द्वादशसख्या उपयोगा भवन्ति । ते च क्रमेणैव न तु युगपत्, उपयोगाना तथा जीवस्वभावतो यौगपद्यासभवात् । उक्त च–"समए दो णुवओगा"

---

१ विकलेषु असत्यामृपा इति । २ समये द्वावुपयोगौ न ।

इति । श्रीभद्रबाहुस्वामिपादा अप्याहुः–"[1]नाणंमि दंसणंमि य एत्तो एगयरयंमि उवउत्ता । सव्वस्स केवलिस्स वि जुगवं दो नत्थि उवओगा ॥ १ ॥" इति ॥ ५ ॥

**पज्जचउरिंदियसंनिसु दुदंस दुअनाण दससु चक्खु विणा । संनिअपज्जे मणनाणचक्खुकेवलदुगविहूणा ॥ ६ ॥**

टीका–चतुरिन्द्रियाश्चासंज्ञिनश्च चतुरिन्द्रियासंज्ञिनः पर्याप्ताश्च ते चतुरिन्द्रियासंज्ञिनश्च, तेषु पर्याप्तचतुरिन्द्रियासंज्ञिषु चत्वार उपयोगा भवन्ति । के इत्याह–'दुदंस दुअनाण त्ति' दर्शौ दर्शनं, द्वयोर्दर्शयोः समाहारो द्विदर्शं चक्षुर्दर्शनाचक्षुर्दर्शनलक्षणं । द्वयोरज्ञानयोः समाहारो द्व्यज्ञानं मत्यज्ञानश्रुताज्ञानरूपम् । अयमर्थः–पर्याप्तचतुरिन्द्रियेषु पर्याप्तासंज्ञिपंचेन्द्रियेषु च मत्यज्ञानश्रुताज्ञानचक्षुर्दर्शनाचक्षुर्दर्शनलक्षणाश्चत्वार उपयोगा भवन्ति । दशसु जीवस्थानकेषु पर्याप्तापर्याप्तसूक्ष्मबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियापर्याप्तचतुरिन्द्रियासंज्ञिपंचेन्द्रियलक्षणेषु पूर्वोक्ताश्चत्वार उपयोगाश्चक्षुर्दर्शनं विना भवन्ति । अयमर्थः–पूर्वोक्तदशजीवस्थानकेषु चक्षुर्दर्शनवर्जा अचक्षुर्दर्शनमत्यज्ञानश्रुताज्ञानलक्षणास्त्रय उपयोगा भवन्ति । ननु स्पर्शनेन्द्रियावरणक्षयोपशमसंभवाद्भवतु मतिरेकेन्द्रियाणां, यत्तु श्रुतं तत्कथं संजाघटीति, भाषालब्धिश्रोत्रेन्द्रियलब्धिमतो हि तदुपपद्यते नान्यस्य, तदुक्तम्–"[2]भावसुयं भासासोयलद्धिणो जुज्जए न इयरस्स । भासाभिमुहस्स सुयं सोऊण व जं हविज्जाहि ॥ १ ॥" इति ? उच्यते–इह तावदेकेन्द्रियाणामाहारादिसंज्ञा विद्यन्ते, तथा सूत्रेऽभिधा-

---

१ ज्ञाने दर्शने चानयोरेकतरस्मिन्नुपयुक्ताः । सर्वस्य केवलिनोऽपि युगपद्द्वौ न स्त उपयोगौ । २ भाषाश्रोत्रलब्धिकस्य भावश्रुतं युज्यते नेतरस्य । भाषाभिमुखस्य श्रुतं श्रुत्वा वा यद्भवेत् ।

नात्, सज्ञा चाभिलाष उच्यते । यदवादि परोपकारभूरिभि श्रीहरिभद्रसूरिभिर्मूलावश्यकटीकाया–"आहारसज्ञा आहाराभिलाष क्षुद्वेदनीयप्रभव खल्वात्मपरिणामविशेष इति" । अभिलाषश्च ममैवरूप वस्तु पुष्टिकारि तद्यदी-दमवाप्यते तत समीचीन भवतीत्येव शब्दार्थोल्लेखानुविद्ध स्वपुष्टिनिमित्तभूतप्रतिनियतवस्तुप्राप्त्यध्यवसायरूप, स च श्रुतमेव शब्दार्थालोचनानुसारित्वात् श्रुतस्यैवैतल्लक्षणत्वात् । यदवादिषुर्दलितप्रवादिकुवादा श्रीजिनभद्रगणिक्षमा-श्रमणपादा –"इदियमणोनिमित्त ज विन्नाण सुयाणुसारेण । निययत्थुत्तिसमत्थ त भावसुय मई सेसं ॥ १ ॥ 'सुयाणुसा-रेण ति' शब्दार्थालोचनानुसारेण । केवलमेकेन्द्रियाणामव्यक्त एव कश्चनाप्यनिर्वचनीय शब्दार्थोल्लेखो द्रष्टव्य । अन्य-थाहारादिसज्ञाऽनुपपत्ते । यद्यप्युक्त–भाषालब्धिश्रोत्रेन्द्रियलब्धिविकलत्वादेकेन्द्रियाणा श्रुतमनुपपन्नमिति, तदप्यसमी-क्षिताभिधान, तथाहि–बकुलादे स्पर्शनेन्द्रियातिरिक्तद्रव्येन्द्रियलब्धिविकलत्वेऽपि किमपि सूक्ष्म भावेन्द्रियपंचकविज्ञान-मभ्युपगम्यते "पचिंदियेउव्वि बउलो नरुव्व सव्वविसउवलंभाउ" इत्यादिवचनप्रामाण्यात् । तथा भाषाश्रोत्रेन्द्रियलब्धि-विकलत्वेऽपि तेषा किमपि सूक्ष्म श्रुतमपि भविष्यति, अन्यथाहारादिसज्ञाऽनुपपत्ते । यदाहु प्रशस्यभाष्यसस्यकाश्यपी-कल्पा श्रीजिनभद्रगणिक्षमाश्रमणा –"जहँ सुहुम भाविदियनाण दव्विदियाण विरहे वि । दव्वसुयाभावंमि वि भावसुय पत्थिवाईण ॥ १ ॥ इति" सज्ञी चासौ अपर्याप्तश्च सज्ञ्यपर्याप्तस्तस्मिन् सज्ञ्यपर्याप्ते मन पर्यवज्ञानचक्षुर्दर्शनकेवलज्ञानकेव-

---

१ इन्द्रियमनोनिमित्त यद्विज्ञान श्रुतानुसारेण । नियतार्थोक्तिसमर्थं तद्भावश्रुत मति शेषम् । २ पचेन्द्रियो बकुलोऽपि नर इव सर्वविषयोपलभात् । ३ यथा द्रव्येन्द्रियाणा विरहेपि सूक्ष्म भावेन्द्रियज्ञान ( तथा ) द्रव्यश्रुताभावेपि पृथिव्यादिजीवाना भावश्रुत ।

लदर्शनलक्षणकेवलद्विकविहीनाः शेषा मतिज्ञानश्रुतज्ञानावधिज्ञानमत्यज्ञानश्रुताज्ञानविभंगज्ञानाचक्षुर्दर्शनावधिदर्शनरू-
पा अष्टावुपयोगा भवन्ति ॥ ६ ॥

उक्ता जीवस्थानेषूपयोगाः, सांप्रतं जीवस्थानेष्वेव लेश्याः प्रतिपिपादयिषुराह–

**संनिदुगि छ लेस अपजबायरे पढम चउ ति सेसेसु । सत्तठ बंधुदीरण संतुदया अठ तेरससु ॥ ७ ॥**

टीका–संज्ञिनो द्विकमपर्याप्तपर्याप्तलक्षणं संज्ञिद्विकं तस्मिन् संज्ञिन्यपर्याप्ते संज्ञिनि पर्याप्ते चेत्यर्थः । षड् लेश्याः कृष्ण-
नीलकापोततेजःपद्मशुक्ललक्षणा भवन्ति । अपर्याप्तबादरे प्रथमाश्चतस्रः कृष्णनीलकापोततेजोरूपा भवन्ति । तेजोलेश्या
कथमस्मिन्नवाप्यत इति चेदुच्यते–यदा "पुढवी आउ वणस्सइ गब्भे पज्जत्तसंखजीवा(वे)सु । सग्गचुआणं वासो सेसा
पडिसेहिया ठाणा ॥ १ ॥" इति वचनात् कश्चनापि देवः स्वर्गलोकाच्च्युतः सन् बादरैकेन्द्रियतया भूदगतरुषु मध्ये समु-
त्पद्यते तदा तस्य घंटालालान्यायेन सा प्राप्यत इत्यदोषः । 'ति सेसेसु त्ति' प्रथमा इत्यनुवर्तते प्रथमास्तिस्रः कृष्णनील-
कापोतलक्षणाः शेषेषु प्रागुक्तापर्याप्तपर्याप्तसंज्ञिपंचेन्द्रियापर्याप्तबादरैकेन्द्रियवर्जितेषु अपर्याप्तपर्याप्तसूक्ष्मैकेन्द्रियद्वीन्द्रिय-
त्रीन्द्रियचतुरिन्द्रियासंज्ञिपंचेन्द्रियपर्याप्तबादरैकेन्द्रियलक्षणेष्वेकादशसु जीवस्थानेषु भवन्ति ता नान्याः, तेषां सदैवाशु-
भपरिणामत्वात्, शुभपरिणामरूपाश्च तेजोलेश्यादयः । तदेवं जीवस्थानकेषु लेश्या अभिधाय सांप्रतमेतेष्वेव बन्धोदयो-
दीरणासत्ताख्यं स्थानचतुष्टयमभिधित्सुराह–'सत्तठ बंधु' इत्यादि, सप्त वाऽष्टौ वा सप्ताष्टाः "सुज्वार्थे संख्या संख्येये

१ पृथ्व्यब्वनस्पतिगर्भपर्याप्तसंख्यातवर्षजीवयोनिषुः ( जीवितेषु ) । स्वर्गच्युतानां वासः शेषाणि स्थानानि प्रतिषिद्धानि ।

सत्यया बहुव्रीहि " ( सि हे ३-१-१९ ) इति सूत्रेण बहुव्रीहिसमासो यथा चित्रा इत्यादौ । बन्धश्चोदीरणा च बन्धोदीरणे सप्ताष्टाना बन्धोदीरणे सप्ताष्टबन्धोदीरणे त्रयोदशसु जीवस्थानेषु सञ्ज्ञिपर्याप्तवर्जितेषु शेषेषु भवतः। एतदुक्त भवति-अपर्याप्तसूक्ष्मैकेन्द्रियपर्याप्तसूक्ष्मैकेन्द्रियापर्याप्तबादरैकेन्द्रियपर्याप्तबादरैकेन्द्रियापर्याप्तद्वीन्द्रियपर्याप्तद्वीन्द्रियापर्याप्तत्रीन्द्रियपर्याप्तत्रीन्द्रियापर्याप्तचतुरिन्द्रियपर्याप्तचतुरिन्द्रियापर्याप्तासञ्ज्ञिपंचेन्द्रियपर्याप्तासञ्ज्ञिपचेन्द्रियापर्याप्तसंज्ञिपचेन्द्रियरूपेषु त्रयोदशसु सप्तानामष्टाना वा बन्ध सप्तानामष्टाना वोदीरणा । तथाहि-यदाऽनुभूयमानभवायुपस्त्रिभागनवभागादिरूपे शेषे सति परभवायुर्बध्यते तदाऽष्टानामपि कर्मणा बन्ध , शेषकाल त्वायुषो बन्धाभावात् सप्तानामेव बन्ध' । तथा यदाऽनुभूयमानभवायुरुदयावलिकाशेष भवति तदा सप्तानामुदीरणा, अनुभूयमानभवायुषोऽनुदीरणात्, आवलिकाशेषस्योदीरणानर्हत्वात्, उदीरणा हि उदयावलिकाबहिर्वर्तिनीभ्य स्थितिभ्य [1]सकाशात् कषायसहितेनासहितेन वा योगकरणेन दलिकमाकृष्योदयसमयप्राप्तदलिकेन सहानुभवनम् । तथा चोक्त कर्मप्रकृतिचूर्णौ-"उदयावलियाबाहिरिल्लठिईहितो कसायसहियासहिएण जोगकरणेण दलियमाकड्ढिय उदयपत्तदलिएण सम अणुभवणमुदीरणा" । तत कथमावलिकागतस्योदीरणा भवति ? । न च परभवायुषस्तदोदीरणासम्भवः, तस्योदयाभावात्, अनुदितस्य चोदीरणानर्हत्वात् । शेषकाल त्वष्टानामुदीरणा । सत्चोदयश्च प्राकृतत्वात् संतोदया अष्टानामेव कर्मणा त्रयोदशसु जीवस्थानकेषु पूर्वेषु भवत' । तथाहि-एतेषु त्रयोदशसु जीवस्थानकेषु सर्वकालमष्टानामपि सत्ता, यतोऽष्टानामपि कर्मणा सत्ता उपशान्तमोहगुणस्था-

१ उदयावलिका बहि स्थितिभ्य कषायसहितासहितेन योगकरणेन दलिकमाकृष्य उदयप्राप्तदलिकेन सम अनुभवनमुदीरणा ।

नकं यावदनुवर्तते। एते च जीवा उत्कर्षतो यथासंभवमविरतसम्यग्दृष्टिगुणस्थानकवर्तिन एवेति। एवमुदयोऽप्येतेषु जीवस्थानेष्वष्टानामेव कर्मणां द्रष्टव्यः। तथाहि—सूक्ष्मसंपरायगुणस्थानकं यावदष्टानामपि कर्मणामुदयोऽवाप्यते, एतेषु जीवस्थानकेषूत्कर्षतोऽपि यथासंभवमविरतसम्यग्दृष्टिगुणस्थानकसंभव इति ॥ ७ ॥

**सत्तछ्ठेगबंधा संतुदया सत्त अठ चत्तारि। सत्त ठ छ पंच डुगं उदीरणा संनिपज्जत्ते ॥ ८ ॥**

टीका—संज्ञी चासौ पर्याप्तश्च संज्ञिपर्याप्तस्तस्मिन् संज्ञिपर्याप्ते चत्वारो बन्धा भवन्ति। तद्यथा—सप्तानां प्रकृतीनां बन्ध एकः, अष्टानां प्रकृतीनां बन्धो द्वितीयः, षणां प्रकृतीनां बन्धस्तृतीयः, एकस्याः प्रकृतेर्बन्धश्चतुर्थो बन्धः। तत्रायुर्वर्जानां सप्तानां कर्मप्रकृतीनां बन्धो जघन्येनान्तर्मुहूर्तं यावदुत्कर्षेण च त्रयस्त्रिंशत्सागरोपमाणि षण्मासोनान्यन्तर्मुहूर्तोनपूर्वकोटित्रिभागाभ्यधिकानि। तथायुर्बन्धकाले तासामष्टानां बन्धो जघन्योत्कर्षेणान्तर्मुहूर्तप्रमाणः, आयुषि बध्यमानेऽष्टानां प्रकृतीनां बन्धः प्राप्यते, आयुषश्च बन्धोऽन्तर्मुहूर्तमेव कालं भवति, न ततोऽप्यधिकम्। तथैता एवाष्टावायुर्मोहनीयवर्जाः षट्, एतासां च जघन्येनैकं समयं बन्धः। तथाहि—ज्ञानावरणदर्शनावरणवेदनीयनामगोत्रांतरायरूपाणां षणां प्रकृतीनां बन्धः सूक्ष्मसंपरायगुणस्थाने, तत्र चोपशमश्रेण्यां कश्चिदेकं समयं स्थित्वा द्वितीयसमये भवक्षयेण दिवं गतः सन्नविरतो भवति, अविरतत्वे चावश्यं सप्तप्रकृतीनां बन्धक इति षणां बन्धो जघन्येनैकं समयं यावदुत्कर्षेण त्वन्तर्मुहूर्तं, सूक्ष्मसंपरायगुणस्थानस्यान्तर्मुहूर्तकत्वात्। तथा सप्तानां प्रकृतीनां बन्धव्यवच्छेदे सत्येकस्याः सातवेदनीयरूपायाः प्रकृतेर्बन्धः, स च जघन्येनैकं समयं, एकसमयता चोपशमश्रेण्यामुपशान्तमोहगुणस्थाने प्राग्वद्भावनीया, उत्कर्षेण पुनर्देशोनां

पूर्वकोटिं यावत् । स चोत्कर्षत कस्य वेदितव्य इति चेदुच्यते–यो गर्भवासे माससप्तकमुषित्वानन्तर शीघ्रमेव योनिनि-ष्क्रमेण जन्मना जातो वर्षाष्टकाच्चोर्ध्व सयमं प्रतिपन्न', प्रतिपत्त्यनन्तर च क्षपकश्रेणिमारुह्योत्पादितकेवलज्ञानदर्शन., तस्य सयोगिकेवलिनो वेदितव्य' । अथ चात्र तात्पर्यार्थ –मिथ्यादृष्ट्याद्यप्रमत्तान्तेषु सप्तानामष्टाना वा बन्ध , आयुर्ब-न्धाभावात् अपूर्वकरणानिवृत्तिबादरयोश्च सप्ताना बन्ध , सूक्ष्मसपराये षण्णा बन्ध', उपशान्तमोहादिष्वेकस्या प्रकृते-र्बन्धः । तथा सत्तोदयश्च प्राकृतत्वात् सन्तोदया, तत सङ्क्षिप्यांत्रे सत्तामाश्रित्य त्रीणि स्थानानि । तद्यथा–सप्त अष्ट चत्वारि । एवमुदयमप्याश्रित्य त्रीणि स्थानानि तद्यथा–सप्त अष्ट चत्वारि । तत्र सर्वप्रकृतिसमुदयोऽष्टौ, एतासा चाष्टाना सत्ताऽभव्यानधिकृत्यानाद्यपर्यवसाना, भव्यानधिकृत्यानादिसपर्यवसाना । तथा मोहे क्षीणे सप्ताना सत्ता, सा च जघन्योत्कर्षेणान्तर्मुहूर्तप्रमाणा, सा हि क्षीणमोहगुणस्थाने, तस्य च कालमानमन्तर्मुहूर्तमिति । घातिकर्मचतुष्टयक्षयेण चतसृणा सत्ता, सा च जघन्येनान्तर्मुहूर्तप्रमाणा, उत्कर्षेण पुनर्देशोनपूर्वकोटिमाना । तथा सर्वप्रकृतिसमुदयोऽष्टौ, तासा चोदयोऽभव्यानाश्रित्यानाद्यपर्यवसानो भव्यानाश्रित्यानादिसपर्यवसान । उपशान्तमोहगुणस्थानकात् प्रतिपतितानाश्रित्य पुन सादिसपर्यवसानः, स च जघन्येनान्तर्मुहूर्तप्रमाण । उपशमश्रेणीत पतितस्य पुनरप्यन्तर्मुहूर्तेन कस्याप्युपशमश्रेणि-प्रतिपत्ति ( रे' ), उत्कर्षेण तु देशोनोऽपार्धपुद्गलपरावर्त' । तथा ता एवाष्टौ मोहनीयवर्जा सप्त तासामुदयो जघन्ये-नैक समय । तथाहि–मोहवर्जसप्ताना प्रकृतीनामुदय उपशान्तमोहे क्षीणमोहे वा प्राप्यते, तत्र कश्चिदुपशान्तगुणस्थानके एकं समय स्थित्वा द्वितीये समये च भवक्षयेण दिव गच्छन्नविरतो भवति, अविरतत्वे चावश्यमष्टाना प्रकृतीनामुदय'-

दय इति । तथा संज्ञिपर्याप्ते उदीरणास्थानानि पंच, तद्यथा—सप्त अष्ट षट् पंच द्वे इति । तत्र यदाऽनुभूयमानभवायुरावलिकावशेषं न भवति तदाऽष्टानां प्रकृतीनामुदीरणा । तत्र मिथ्यादृष्टिगुणस्थानकात्प्रभृति यावत्प्रमत्तसंयतगुणस्थानकं तावत्सप्ताना-मष्टानां वोदीरणा, सम्यग्मिथ्यादृष्टिगुणस्थानके तु सदैवाष्टानामेवोदीरणा, आयुष आवलिकाशेषमिश्रगुणस्थानस्यैवाभा-वात् । तथाऽप्रमत्तगुणस्थानात्प्रभृति यावत्सूक्ष्मसंपरायगुणस्थानकस्यावलिकाशेषो न भवति, तावद्वेदनीयायुर्वर्जानां षण्णां प्रकृतीनामुदीरणा, तदानीमतिविशुद्धत्वेन वेदनीयायुरुदीरणायोग्याध्यवसायस्थानाभावात्, आवलिकावशेषे तु मोहनी-यस्याप्यावलिकाप्रविष्टत्वेनोदीरणाया असंभवाज्ज्ञानावरणदर्शनावरणनामगोत्रान्तरायाणामेवोदीरणा । एतेषामेव चोप-शान्तमोहगुणस्थानकेऽप्युदीरणा, क्षीणमोहगुणस्थानकेऽप्येतेषामेव यावदावलिकामात्रमवशेषो न भवति । आवलिकाव-शेषे तु ज्ञानावरणदर्शनावरणान्तरायाणामप्यावलिकाप्रविष्टत्वान्नोदीरणेति द्वयोरेव नामगोत्रयोरुदीरणा, एवं सयोगिके-

वलिगुणस्थानेऽपि । अयोगिकेवलिगुणस्थानके तु वर्तमानो जीव सर्वथानुदीरक एव । ननु तदानीमप्येष सयोगिकेवलि-गुणस्थानक इव जवोपग्राहिकर्मचतुष्टयोदयवान् वर्तते तत कथ तदापि तयोर्नामगोत्रयोरुदीरको न जवति ? नैष दोष , उदये सत्यपि योगसव्यपेक्षत्वाडुदीरणाया , तदानीं च तस्य योगासजवादिति ॥ ७ ॥

तदेवंजीवस्थानकेषुगुणस्थानकाद्यजिधायसाप्रतमार्गणास्थानेषुजीवस्थानकादिविवक्षुस्तान्येवतावन्निदर्शयन्नाह(न्निर्दिशन्नाह)

"गइइंदिए य काए जोए वेए कसायनाणेसु । संजमदंसणलेसा जवसम्मे सन्निश्राहारे ॥ ए ॥

टीका–गम्यते तथाविधकर्मसचिवैर्जीवै प्राप्यत इति गतिर्नारकत्वादिपर्यायपरिणति॰ । इन्दनादिन्द्र आत्मा ज्ञानैश्वर्य-योगात् तस्येदमिन्द्रिय "इन्द्रियमिति" ( ७-१-१७४ ) सूत्रेणाजीष्टरूपनिष्पत्ति । ततो गतिश्चेन्द्रिय च गतीन्द्रियं तस्मिन् गतीन्द्रिये । एवमन्यत्रापि द्वद्व कार्य॰ । 'च ' समुच्चये । चीयते यथायोग्यमौदारिकादिमार्गणागणैरुपचय नीयत इति काय "चिति देहावासोपसमाधाने कश्चादेः" ( ५ ३-७ए ) इति घञ् प्रत्ययश्चकारस्य ( च ) ककार । युज्यते धावनवल्गनादिचेष्टास्वात्मानेनेति "पुंनाम्नि" इति घे योग । वेद्यतेऽनुजूयत इन्द्रियोद्भूत सुखमनेनेति वेद । " कष शिष जष ऊषेत्यादिदंरूकधातु " कष्यन्ते हिस्यन्ते परस्परमस्मिन् प्राणिन इति कष॰ ससार , कषमयन्ते गच्छन्त्येजिर्ज-न्तव इति कषाया॰, यद्वा कषस्यायो लाजो येज्यस्ते कषाया । ज्ञातिर्ज्ञान, यद्वा ज्ञायते परिच्छिद्यते वस्त्वनेनेति ज्ञानं सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोध इत्यर्थ । सयमन सम्यगुपरमण सावद्ययोगादिति सयम , यद्वा सयम्यते नियम्यत आत्मा पापव्यापारसजारादनेनेति सयम॰ "संनिव्युपाद्यम " (५-३ २५) इति सूत्रेणाल् प्रत्यय , यदि

संयमश्चारित्रम्। दृश्यते वि-
वा शोभना यमाः प्राणातिपातानृतभाषणादत्तादानाब्रह्मपरिग्रहविरमणलक्षणा अस्मिन्निति संयमश्चारित्रम्। दृश्यते वि-
लोक्यते वस्त्वनेनेति दर्शनं, यद्वा दृष्टिर्दर्शनं सामान्यविशेषात्मके वस्तुनि सामान्यात्मको बोध इत्यर्थः। लिश्यते श्लि-
ष्यते कर्मणा सहात्माऽनयेति लेश्या। भवति परमपदयोग्यतामासादयतीति भव्यः सिद्धिगमनयोग्यः "भव्यगेयजन्यर-
म्यापात्याप्लाव्यं न वेति" ( ५-१-७ ) कर्तरि यप्रत्ययः सूत्रे च यकारलोपः प्राकृतत्वात्। 'सम्म त्ति' सम्यक्शब्दः प्रशं-
सार्थोऽविरुद्धार्थो वा सम्यग्जीवस्तद्भावः सम्यक्त्वं प्रशस्तो मोक्षाविरोधी वा प्रशमसंवेगादिलक्षण आत्मधर्म इति यावत्।
यदाहुः श्रीभद्रबाहुस्वामिपादाः–"सेयं सम्मत्ते पसत्थ संमत्त मोहणीयकम्माणुवेयणोवसमखयसमुत्थो (त्थे) पसमसंवेगाइलिंगे
सुहे आय परिणामे ॥" इत्यादि। संज्ञानं संज्ञा भूतभवद्भाविभावस्वभावपर्यालोचनं सा विद्यते येषां ते संज्ञिनः "ब्रह्मा-
दिभ्यस्तौ" ( ७-२-५ ) इतीन्प्रत्ययः, विशिष्टस्मरणादिरूपमनोविज्ञानसहितेन्द्रियपंचकसमन्विता इत्यर्थः। ओज आ-
हारलोमाहारकवलाहाराणामन्यतममाहारयति गृह्णातीत्याहारः "अच्" ( ५-१-४९ ) इत्यच् ( प्रत्ययः ) आहारक इत्य-
र्थः। ओजआहारादीनां लक्षणमिदम्–"सरिरेणोयाहारो[3] तयाइ फासेण लोम आहारो। पक्खेवाहारो पुण कवलिओ
होइ नायव्वो ॥ १ ॥" इति ॥ ९ ॥

१ तच्च सम्यक्त्वं प्रशस्तसम्यक्त्वमोहनीयकर्माणुवेदनोपशमक्षयोत्थः प्रशमसंवेगादिलिंगः शुभ आत्मपरिणामः २ अतिप्रबलोयं लेखकदोषो यन्नोपलभ्यतेऽदः किंतु व्रीह्यादिभ्य इति। तत्त्वतस्तु शिखादिभ्य इन्नित्यनेनैवेन् (७-२-४)। ३ शरीरेणौजआहारस्त्वचा-स्पर्शेन लोमाहारः। प्रक्षेपाहारः पुनः कवलिको भवति ज्ञातव्यः।

उक्तानि मूलजतानि चतुर्दश मार्गणास्थानानि, इदानीमेतेषामेवोत्तरभेदानाह–

सुरनरतिरिनिरयगई इगबियतियचउपणिंदि छक्काया ।
भूजलजलणानिलवणतसा य मणवयणतणुजोगा ॥ १० ॥

टीका–इह गतिशब्दः प्रत्येकं सबध्यते । ततः सुरगतिः, नरगतिः, तिर्यग्गतिः, नरकगतिः । तत्र सुष्ठु राजन्त इति सुराः, यदि वा सुष्ठु रान्ति ददति प्रणतानामभीप्सितमर्थं लवणाधिपसुस्थित इव लवणजलधौ मार्गं जनार्दनस्येति सुराः, यद्वा 'सुरत् ऐश्वर्यदीप्त्योः' सुरन्ति विशिष्टमैश्वर्यमनुभवन्ति दिव्याभरणभजारसमृद्ध्या सहजनिजशरीरकान्त्या च दीप्यन्त इति सुराः सुरेषु विषये गतिः सुरगतिः । नृणन्ति विवेकमासाद्य नयधर्मपरा भवन्तीति नरा मनुष्यास्तेषु विषये गतिर्नरगतिः । 'तिरि त्ति' प्राकृतत्वात्तिरोऽञ्चन्ति गच्छन्ति तिर्यञ्चः, व्युत्पत्तिनिमित्तं चैतत् प्रवृत्तिनिमित्तं तिर्यग्गतिनाम, एवं चैकेन्द्रियादयः, ततस्तिर्यक्षु विषये गतिस्तिर्यग्गतिः । नरानुपलक्षणत्वात्तिरश्चोऽपि प्रभूतपापकारिणः कायन्तीत्याह्वयन्तीवेति नरका नरकावासास्तत्रोत्पन्ना जन्तवोऽपि नरकाः, नरको वा विद्यते येषां ते "अभ्रादिभ्यः" इत्यप्रत्यये नरकास्तेषु विषये गतिर्नरकगतिः । इहापीन्द्रियशब्दस्य प्रत्येकं सबन्धादेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपचेन्द्रिया इति । षट्कायाः, भूः पृथ्वी, जलमापः, ज्वलनं तेजः, अनिलो वायुः, 'वण त्ति' वनस्पतिः, त्रसा द्वीन्द्रियादयः, ततः प्रत्येकं कायशब्दस्य योगात् पृथिव्येव कायः शरीरं यस्य स पृथिवीकायः, एवमप्कायः, तेजस्कायः, वायुकायः, वनस्पतिकायः, त्रसकाय इति । 'च' समुच्चये । योगशब्दस्य प्रत्येकं सबन्धात्त्रयो योगाः, तद्यथा–मनोयोगः, वचनयोगः, तनुयोगः ।

तत्र तनुयोगेन मनःप्रायोग्यवर्गणाभ्यो गृहीत्वा मनोयोगेन मनस्त्वेन परिणमितानि वस्तुचिन्ताप्रवर्तकानि द्रव्याणि मन इत्युच्यन्ते तेन मनसा सहकारिकारणभूतेन योगो मनोयोगः, मनोविषयो वा योगो मनोयोगः । उच्यत इति वचनं भाषापरिणामापन्नपुद्गलद्रव्यसमूह इत्यर्थः, तेन वचनेन सहकारिकारणभूतेन योगो वचनयोगः, वचनविषयो वा योगो वचनयोगः । तनोति विस्तारयत्यात्मप्रदेशानस्यामिति तनुरौदारिकादिशरीरं तया सहकारिकारणभूतया योगस्तनुयोगः, तनुविषयो वा योगस्तनुयोगः ॥ १० ॥

**वेय नरित्थिनपुंसा कसाय कोहमयमायलोभत्ति। मइसुयवहिमणकेवलविहंगमइसुअनाणसागारा ११**

टीका–वेदशब्दस्य प्रत्येकं संबन्धात्त्रयो वेदाः, नरवेदः, स्त्रीवेदः, नपुंसकवेदः । तत्र नरस्य पुरुषस्य स्त्रियं प्रति अभिलाषो नरवेदः, स्त्रियो योषितः पुरुषं प्रत्यभिलाषः स्त्रीवेदः, नपुंसकस्य षंढस्य स्त्रीपुरुषौ प्रत्यभिलाषो नपुंसकवेदः । कषायाश्चत्वारः–क्रोधकषायः, 'मद त्ति' मदो मानोऽहंकारो गर्व इत्यर्थः मानकषायः, मायाकषायः, लोभकषायः, इतिशब्दः कषायाणामनन्तानुबन्ध्यादिबहुभेदसूचनार्थः, सूत्रे च 'मायलोभ त्ति' ह्रस्वत्वं प्राकृतत्वात् । 'मइसुयवहीत्यादि' इहावधीत्यत्राकारलोपाज्ज्ञानशब्दस्य च प्रत्येकं संबन्धादेवं प्रयोगः–मतिज्ञानं, श्रुतज्ञानं, अवधिज्ञानं, मनःपर्यवज्ञानं, केवलज्ञानं, तथा विभंगमत्यज्ञानश्रुताज्ञानानि । एतानि पंच ज्ञानानि त्रीण्यज्ञानानि साकाराणि वर्तन्त इति वाक्यार्थः । भावार्थस्त्वयम्–"बुधिं मनिं च ज्ञाने" मननं मतिः, यद्वा मन्यत इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनयेति मतिः योग्यदेशावस्थितवस्तुविषय इन्द्रियमनोनिमित्तोऽवगमविशेषः, मतिश्च सा ज्ञानं च मतिज्ञानम् । श्रवणं श्रुतमभिलापप्लावितार्थ-

ग्रहणहेतुरुपलब्धिविशेषः, एवमाकारं वस्तु घटशब्दाभिलाप्यं जलधारणाद्यर्थक्रियासमर्थमित्यादिरूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेषः, श्रुतं च तज्ज्ञानं च श्रुतज्ञानम्। अवधानमवधिरिन्द्रियाद्यनपेक्षमात्मनः साक्षादर्थग्रहणं, अथवा अवशब्दोऽधःशब्दार्थः अव अधोऽधो विस्तृतं वस्तु धीयते परिच्छिद्यतेऽनेनेत्यवधिः, यद्वा अवधिर्मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः, अवधिश्च तज्ज्ञानं चावधिज्ञानम्। परि सर्वतोभावे, अवनमवः, "तुदादिभ्योऽनकौ"वित्यधिकारे"ऽकितौ चे"त्यनेनौणादिकोऽकारप्रत्ययः, अवनं गमनं वेदनमिति पर्यायाः, परि अवः पर्यवः, मनसि मनसो वा पर्यवो मनःपर्यवः सर्वतस्तत्परिच्छेद इत्यर्थः, मनःपर्यवश्च तज्ज्ञानं च मनःपर्यवज्ञानं। यद्वा मनःपर्यायज्ञानं, तत्र संज्ञिभिर्जीवैः काययोगेन गृहीतानि मनःप्रायोग्यवर्गणाद्रव्याणि चिन्तनीयवस्तुचिन्तनव्यापृतेन मनोयोगेन मनस्त्वेन परिणमय्यालम्ब्यमानानि मनांसीत्युच्यन्ते, तेषां मनसां पर्यायाश्चिन्तनानुगताः परिणामा मनःपर्यायाः, तेषु तेषां वा सम्बन्धिज्ञानं मनःपर्यायज्ञानं। यद्वात्मभिर्वस्तुचिन्तने व्यापारितानि मनांसि पर्येति अवगच्छतीति मनःपर्यायः "कर्मणोऽण्" ( ५-३-१४ ) इत्यण्प्रत्ययः, मनःपर्यायश्च तज्ज्ञानं च मनःपर्यायज्ञानम्। केवलमेकं मत्यादिरहितत्वात् "नट्ठंमि उ छाउमत्थिए नाणे"[1] इति परममुनिप्रणीतवचनप्रामाण्यात्, शुद्धं वा केवलं तदावरणमलकलङ्कपङ्कापगमात्, सकलं वा केवलं तत्प्रथमतयैव निःशेषतदावरणविगमतः संपूर्णोत्पत्तेः, असाधारणं वा केवलमनन्यसदृशत्वात्, अनन्तं वा केवलं ज्ञेयानन्तत्वात् अपर्यवसितानन्त-

१ नष्टे तु छाद्मस्थिके ज्ञाने ।

कालावस्थायित्वाद्वा, निर्व्याघातं वा केवलं लोकेऽलोके वा क्वापि व्याघाताभावात्, केवलं च तज्ज्ञानं च केवलज्ञानं यथावस्थितसमस्तभूतभवद्भाविभावभासिज्ञानमिति भावना । तथा मतिश्रुतावधिज्ञानान्येव मिथ्यात्वपंककलुषिततया यथाक्रमं मत्यज्ञानश्रुताज्ञानविभंगज्ञानव्यपदेशभांजि भवन्ति । उक्तं च—"आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसंयुक्तमिति" । 'विभंग त्ति' विपरीतो भंगः परिच्छित्तिप्रकारो यस्मिंस्तद्विभंगं विपर्यस्तमवधिज्ञानं विभंगज्ञानमुच्यते इत्यर्थः । सहाकारेण जातिवस्तुप्रतिनियतग्रहणपरिणामरूपेण "आगारो उ विसेसो"[1] इति वचनाद्विशेषेण वर्तन्त इति साकाराणि । अयमर्थः—वक्ष्यमाणानि चत्वारि दर्शनान्यनाकाराणि, अमूनि च पंच ज्ञानानि साकाराणि । तथाहि—सामान्यविशेषात्मकं हि सकलं ज्ञेयं वस्तु, कथमिति चेदुच्यते, दूरादेव हि शालतमालतालबकुलाशोकचंपककदंबजंबुनिंबादिविशिष्टव्यक्तिरूपतयानवधारितं तरुनिकरमवलोकयतः सामान्येन वृक्षमात्रप्रतीतिजनकं यदपरिस्फुटं किमपि रूपं चकास्ति तत्सामान्यरूपमनाकारं दर्शनमुच्यते, "निर्विशेषं विशेषाणामग्रहो दर्शनमुच्यते" इति वचनप्रामाण्यात् । यत्पुनस्तस्यैव निकटीभूतस्य तालतमालशालादिव्यक्तिरूपतयावधारितं तमेव महीरुहसमूहमुत्पश्यतो विशिष्टव्यक्तिप्रतीतिजनकं परिस्फुटं रूपमाभाति तद्विशेषरूपं साकारं ज्ञानमप्रमेयप्रभावपरमेश्वरप्रवचनप्रवीणचेतसः प्रतिपादयन्ति, सह विशिष्टाकारेण वर्तत इति कृत्वा । तदेवं प्रतिप्राणिप्रसिद्धप्रमाणाबाधितप्रतीतिवशात् सर्वमपि वस्तुजातं सामान्यविशेषरूपद्वयात्मकं भावनीयमिति ॥ ११ ॥

१ आकारस्तु विशेषः ।

सामाइय छेय परिहार सुहूम अहखाय देस जय अजया ।
चक्खु अचक्खु उही केवलदसण अणागारा ॥ १२ ॥

टीका—समाना[१] ज्ञानदर्शनचारित्राणामायो लाभ समाय समाय एव सामायिकं विनयादेराकृतिगणत्वादिकणप्रत्यय (७ २-१६९)। यद्वा समो रागद्वेषविप्रमुक्तो य सर्वभूतान्यात्मवत्पश्यति, आयो लाभ प्राप्तिरिति पर्याया, समस्याय समाय । समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शनचरणपर्यायैर्भवाटवीभ्रमणसङ्क्लेशविच्छेदकैर्निरुपमसुखहेतुभिरध कृतचिन्तामणिकामधेनुकल्पद्रुमोपमैर्युज्यते, समाय एव सामायिक=मूलगुणानामाधारभूत सर्वसावद्यविरतिरूप चारित्र । यदाह वाचकमुख्य'—"सामायिक गुणानामाधार खमिव सर्वभावानाम् । न हि सामायिकहीनाश्चरणादिगुणान्विता येन ॥ १ ॥ तस्माज्जगाद भगवान् सामायिकमेव निरुपमोपायम् । शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥ २ ॥" यद्यपि च सर्वमपि चारित्रमविशेषत सामायिकं तथापि छेदादिविशेषैर्विशेष्यमाणमर्थत शब्दान्तरतश्च नानात्व भजते । प्रथम पुनरविशेषणात् सामान्यशब्द एवावतिष्ठते "सामायिकमिति" । तच्च द्विधा—इत्वर यावत्कथिक च । तत्रेत्वर भाविव्यपदेशान्तरत्वात् स्वल्पकाल, तच्च प्रथमचरमतीर्थकरतीर्थे भरतैरवतेषु यावदद्यापि शैक्षकस्य महाव्रतानि नारोप्यन्ते तावद्विज्ञेय । आत्मन कथा यावद्यदास्ते तद्यावत्कथ यावज्जीवमित्यर्थ, यावत्कथमेव यावत्कथिक, एतच्च भरतैरवतेषु प्रथमचरमवर्जमध्यमद्वाविंशतितीर्थकरतीर्थान्तर्गतसाधूना महाविदेहतीर्थकरमुनीना चावसेय, तेषामुपस्थापनाया अभावात् । 'छेय त्ति'

छेदोपस्थापना, तत्र पूर्वपर्यायस्य छेदेनोपस्थापना महाव्रतेष्वारोपणं यत्र चारित्रे तच्छेदोपस्थापनं, भरतैरवतप्रथमचरमतीर्थंकरतीर्थ एव नान्यत्र । तच्च द्विधा सातिचारं निरतिचारं च, तत्रानतिचारमित्वरसामायिकस्य शैक्षकस्य यदारोप्यते, तीर्थान्तरं वा संक्रामतः साधोर्यथा श्रीपार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थं संक्रामतः पंचयामधर्मप्रतिपत्तौ, सातिचारं पुनर्यन्मूलगुणघातिनः पुनर्व्रतोच्चारणम् । 'परिहारे त्ति' परिहरणं परिहारस्तपोविशेषस्तेन विशुद्धिर्यस्मिंश्चारित्रे तत्परिहारविशुद्धिकं, तच्च द्विधा निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानका विवक्षितचारित्रसेवकाः, निर्विष्टकायिका आसेवितविवक्षितचारित्रकायिकाः, तदव्यतिरेकाच्चारित्रमप्येवमुच्यते । इह नवको गणः, तत्रैको वाचनाचार्यश्चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिणः । निर्विशमानकानां चायं तपोविशेषः "परिहारियाण उ तवो जहन्न मज्झो तहेव उक्कोसो । सीउण्हवासकाले भणिउ धीरेहिं पत्तेयं ॥ १ ॥ तत्थ जहन्नो गिम्हे चउत्थ छट्ठं तु होइ मज्झिम उ । अट्ठममिह उक्कोसो इत्तो सिसिरे पवक्खामि ॥ २ ॥ सिसिरे उ जहन्नाई छट्ठाई दसम चरिमगो होई । वासासु अट्ठमाई बारसपज्जंतगो नेउ ॥ ३ ॥ पारणगे आयामं पंचसु गहो दोसु(स)भिग्गहो भिक्खे । कप्पट्ठिया वि पइदिण करेंति एमेव आयामं ॥ ४ ॥ एवं छम्मास तवं चरिउं परिहारिआ अणुचरंति । अणुचरगे परिहारिय पयट्ठिए जाव छम्मासा ॥५॥ कप्पट्ठिउ वि एवं

---

१ परिहारिकाणां तु तपः जघन्यं मध्यमं तथैवोत्कृष्टं । शीतोष्णवर्षाकाले भणितं धीरैः प्रत्येकम् ॥ १ ॥ तत्र जघन्यं ग्रीष्मे चतुर्थं षष्ठं तु भवति मध्यमं । अष्टमं तु उत्कृष्टमितः शिशिरे प्रवक्ष्यामि ॥ २ ॥ शिशिरे तु जघन्यादि षष्ठादिदशमचरमकं भवति । वर्षासु अष्टमादि द्वादशपर्यंतकं ज्ञेयं ॥ ३ ॥ पारणके आचाम्लं भिक्षायां च पंचानां ग्रहः द्वयोरभिग्रहः। कल्पस्थिता अपि प्रतिदिनं कुर्वन्ति एवमेवाचामाम्लं ॥४॥ एवं षण्मासान् तपश्चरित्वा परिहारिका अनुचरन्ति । अनुचरकाः परिहारिकपदस्थिता यावत्षण्मासान् ॥५॥ कल्पस्थितो-

न्मासतव करेइ सेसाउ । अणुपरिहारिगन्नाव वयति कप्पठियत्त च ॥ ६ ॥ एव सो अठारसमासपमाणो उ वन्निउ कप्पो । सखेवउ विसेसो विसेससुत्ताउ नायवो ॥ ७ ॥ कप्पसमत्तीऽ तय जिणकप्प वा उविंति गछ वा । पडिवज्जमाणगा पुण जिणस्सगासे पवज्जति ॥ ८ ॥ तित्थयरसमीवासेवगस्स पासे व न उण अन्नस्स । एएसि ज चरण परिहारविसुद्धिग त तु ॥ ए ॥" अथैते परिहारविशुद्धिका कस्मिन् क्षेत्रे काले वा जवन्ति ? उच्यते–ऽह क्षेत्रादिनिरूपणार्थं विंशतिद्वाराणि । तद्यथा–क्षेत्रद्वार, कालद्वार, चारित्रद्वार, तीर्थद्वार, पर्यायद्वार, आगमद्वार, वेदद्वार, कल्पद्वार, लिंगद्वार, लेश्याद्वार, ध्यानद्वार, गणद्वार, अजिग्रहद्वार, प्रव्रज्याद्वार, मुरुापनद्वार, प्रायश्चित्तविधिद्वार, कारणद्वार, नि प्रतिकर्मद्वार, जिक्षाद्वार, वन्धद्वार । तत्र क्षेत्रे–द्विधा मार्गणा जन्मत सन्नावतश्च, यत्र क्षेत्रे जातस्तत्र जन्मतो मार्गणा यत्र च कल्पे स्थितो वर्तते तत्र सन्नावत । उक्त च–"खित्ते डुदेहमग्गण जम्मणउ चेव सतिन्नावे य । जम्मणउ जहि जाउ सतीन्नावो य जहिं कप्पो ॥ १ ॥ तत्र जन्मत सन्नावतश्च पचसु जरतेषु पचस्वैरवतेषु न तु महाविदेहेषु । न चैतेषु सहरण-

---

ष्येव षण्मासास्तप करोति शेषाश्च । अनुपरिहारिकभाव व्रजन्ति कल्पस्थिततरं च॥६॥ एव एषोष्टादशमासप्रमाणस्तु वर्णित कल्प । सक्षेपतो विशेषो विशेषसूत्राज्ज्ञातव्य ॥ ७ ॥ कल्पसमाप्तौ त ( परिहार ) जिनकल्प वोपयति गच्छ वा । प्रतिपद्यमानका पुनर्जिनसकाशात्प्रपद्यते ॥ ८ ॥ तीर्थंकरसमीपासेवकस्य पार्श्वे न पुनरन्यस्य । एतेषा यच्चरण परिहारविशुद्धिक तत्तु ॥ ९ ॥

१ क्षेत्रे द्विधेह मार्गणा जन्मतश्चैव सद्भावतश्च । जन्मतो यत्र जात सद्भावश्च यत्र कल्प ॥ १ ॥

मस्ति येन जिनकल्पिका इव संहरणतः सर्वासु कर्मभूमिष्वकर्मभूमिषु वा प्राप्येरन् । उक्तं च–"[1]खेत्ते भरहेरवएसु हुंति संहरणवज्जिया नियमा" । कालद्वारे–अवसर्पिण्यां तृतीये चतुर्थे वारके जन्म सद्भावः पंचमेऽपि, उत्सर्पिण्यां द्वितीये तृतीये चतुर्थे वा जन्म. सद्भावः पुनस्तृतीये चतुर्थे वा । उक्तं च–[2]ओसप्पिणीए दोसुं जम्मणओ तीसु संतिभावेणं । उसप्पिणि विवरीओ जम्मणओ संतिभावेणं ॥ १ ॥ नोत्सर्पिण्यवसर्पिणीरूपे चतुर्थारकप्रतिभागे काले न संभवन्ति महाविदेहक्षेत्रे तेषामसंभवात् । चारित्रद्वारे–संयमद्वारेण मार्गणा तत्र सामायिकस्य छेदोपस्थापनस्य च चारित्रस्य यानि जघन्यानि संयमस्थानानि तानि परस्परं तुल्यानि, समानपरिणामत्वात्, ततोऽसंख्येयलोकाकाशप्रदेशप्रमाणानि संयमस्थानान्यतिक्रम्योर्ध्वं यानि संयमस्थानानि तानि परिहारविशुद्धियोग्यानि, तान्यपि च केवलिप्रज्ञया परिभाव्यमानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि, तानि प्रथमद्वितीयचारित्राविरोधीनि तेष्वपि संभवात् । तत ऊर्ध्वं यानि संख्यातीतानि संयमस्थानानि तानि सूक्ष्मसंपराययथाख्यातचारित्रयोग्यानि । उक्तं च–[3]तुल्ला जहन्नठाणे संजमठाणाइ पढमबिइयाणं । तत्तो असंखलोए गंतुं परिहारियट्ठाणा ॥ १ ॥ ते वि असंखा लोगा अविरुद्धा चेव पढमबीयाणं । उवरिंपि तो असंखा संजमठाणाउ दुण्हं पि ॥ २ ॥" तत्र परिहारविशुद्धिककल्पप्रतिपत्तिः स्वकीयेष्वेव संयमस्थानेषु वर्तमानस्य भवति न शेषेषु ।

---

१ क्षेत्रे भरतैरवतेषु संहरणवर्जिता नियमाद्भवंति । २ अवसर्पिण्यां द्वयोर्जन्मतस्तिसृषु सद्भावतः । उत्सर्पिण्यां विपरीतं जन्मतः सद्भावतः । ३ जघन्यस्थाने प्रथमद्वितीययोस्तुल्यानि संयमस्थानानि । ततोऽसंख्यातलोकान्गत्वा परिहारिकस्थानानि । तान्यपि असंख्यातलोकमानानि प्रथमद्वितीययोरविरुद्धान्येव । उपर्यपि ततोऽसंख्यातानि संयमस्थानानि द्वयोरपि । २ ।

यदा त्वतीतनयमधिकृत्य पूर्वप्रतिपन्नो विवक्ष्यते तदा शेषेष्वपि संयमस्थानेषु भवति, परिहारविशुद्धिककल्पसमाप्त्यनन्तरमन्येष्वपि च चारित्रेषु सम्भवात्, तेष्वपि च वर्तमानस्यातीतनयमपेक्ष्य पूर्वप्रतिपन्नत्वात्। उक्तं च-"सं ठाणे पडिवत्ती-अन्नेसु वि हुज्ज पुव्वपडिवन्नो। तेसु वि वट्टंतो सो तीयनयं पप्प वुच्चइ उ ॥ १ ॥" तीर्थद्वारे-परिहारविशुद्धिको नियमतः तीर्थे प्रवर्तमान एव सति भवति, न तूच्छेदेऽनुत्पत्त्या वा तदभावे जातिस्मरणादिना। उक्तं च-"तित्थे त्ति नियमओ च्चिय होइ स तित्थम्मि न उण तदभावे। विगए णुप्पन्ने वा जाईसरणाइएहिं तु॥ १ ॥" पर्यायद्वारे-पर्यायो द्विधा गृहस्थपर्यायो यतिपर्यायश्च,एकैकोऽपि द्विधा जघन्य उत्कृष्टश्च(जघन्यश्चोत्कृष्टतश्च)।तत्र गृहस्थपर्यायो जघन्य एकोनत्रिंशद्वर्षाणि यतिपर्यायो विंशतिः, द्वावपि चोत्कृष्टतो देशोनपूर्वकोटीप्रमाणौ। उक्तं च-"एयस्स एस नेओ गिहिपरियाओ जहन्नि गुणतीसा। जइपरियाओ वीसा दोसु वि उक्कोसदेसूणा ॥ १ ॥" आगमद्वारे-अपूर्वागमं स नाधीते, यस्मात्त कल्पमधिकृत्य प्रगृहीतोचितयोगाराधनत एव स कृतकृत्यतां भजते, पूर्वाधीतं तु विस्रोतसिकाक्षयनिमित्तं नित्यमेवैकाग्रमनाः सम्यक् प्रायोऽनुस्मरति। उक्तं च-"अप्पुव्वं नाहिज्जइ आगममेसो पडुच्च तं कप्पं। जमुचियपगहियजोगाराहणओ चेव कयकिच्चो ॥ १ ॥ पुव्वाहीयं

---

१ स्वस्थाने प्रतिपत्तिरन्येष्वपि भवेत्पूर्वप्रतिपन्नः। तेष्वपि वर्त्तमानः सोऽतीतनयं प्राप्य (आश्रित्य) उच्यते एव। २ तीर्थे इति नियम एव स तीर्थे भवति न पुनस्तदभावे। विगतेऽनुत्पन्ने वा जातिस्मरणादिके। ३ एतस्यैष ज्ञातव्यो गृहस्थत्वपर्यायो जघन्यत एकोनत्रिंशत्। यतिपर्यायो विंशतिर्द्वयोरपि देशोना पूर्वकोटिरुत्कृष्टा। ४ अपूर्वं नाधीते आगममेष प्रतीत्य तं कल्पं। यदुचितप्रगृहीतयोगाराधनत एव कृतकृत्यः ॥ १ ॥

तु तयं पायं अणुसरइ निच्चमेवेसो । एगग्गमणो सम्मं विसोयसिगाइखयहेऊ ॥ २ ॥” वेदद्वारे–प्रवृत्तिकाले वेदः पुरुष-
वेदो वा नपुंसकवेदो वा भवेत्, न स्त्रीवेदः स्त्रियाः परिहारविशुद्धिककल्पप्रतिपत्त्यसंभवात् । अतीतनयमधिकृत्य पुनः
पूर्वप्रतिपन्नश्चिन्त्यमानः सवेदो वा भवेदवेदो वा, तत्र सवेदः श्रेणिप्रतिपत्त्यभावे उपशमश्रेणिप्रतिपत्तौ वा, क्षपकश्रेणि-
प्रतिपत्तौ त्ववेद इति । उक्तं च–“वेदो पवित्तिकाले इत्थीवज्जो उ होइ एगयरो। पुव्वपडिवन्नओ पुण होज्ज सवेओ अवेओ वा
॥ १ ॥” कल्पद्वारे–स्थितकल्प एवायं, नास्थितकल्पे “ठिइकप्पंमि वि नियमा” इति वचनात् । तत्राचेलक्यादिषु
दशस्वपि स्थानेषु ये स्थिताः साधवस्तत्कल्पः स्थितकल्प उच्यते, ये पुनश्चतुर्षु शय्यातरपिंडादिष्ववस्थितेषु कल्पेषु
स्थिताः शेषेषु चाचेलक्यादिषु षट्स्ववस्थितास्तत्कल्पोऽस्थितकल्पः । उक्तं च–“ठिय अट्ठिओ य कप्पो आचेलक्काइएसु
ठाणेसु । सव्वेसु ठिया पढमो चउ ठिय छसु अठिया बीओ ॥ १ ॥” आचेलक्यादीनि च दशस्थानान्यमूनि–“आचेलक्कु-
देसियसिज्जायररायपिंडकिइकम्मे । वयजिट्ठपडिक्कमणे मासं पज्जोसवणकप्पे ॥ १ ॥ चत्वारश्चावस्थिताः कल्पा इमे—

---

पूर्वाधीतं च तं ( आगमं ) अनुस्मरति प्रायो नित्यमेव । एकाग्रमनाः सम्यक् विश्रोतसिकादिक्षयाय ॥ २ ॥ १ वेदः प्रवृत्तिकाले स्त्रीवर्ज्यस्तु भवति एकतरः । पूर्वप्रतिपन्नकः पुनर्भवेत्सवेदोऽवेदो वा ॥ १ ॥ २ स्थितकल्प एव नियमात् । ३ स्थितोऽस्थितश्च कल्पः आचेलक्यादिषु सर्वेषु स्थानेषु स्थिताः प्रथमः । चतुर्षु स्थिताः षट्स्वस्थिता द्वितीयः ॥ १ ॥ ४ आचेलक्यौद्देशिकशय्या-तरराजपिंडकृतिकर्माणि । व्रतज्येष्ठप्रतिक्रमणानि मासकल्पः पर्युषणाकल्पः ॥ १ ॥

"सिंज्ञायरपिरुमि चाउज्जामे य पुरिसजेट्ठे य । कियकम्मस्स य करणे चत्तारि अवट्ठिया कप्पा ॥ १ ॥" लिगद्वारे—नियमतो द्विविधेऽपि लिगे जवति । तद्यथा—ऽव्यलिंगे जावलिगे च । एकेनापि विना विवक्षितकल्पोचितसामाचार्ययोगात् । लेश्याद्वारे—तेज प्रजृतिकासूत्तरासु तिसृषु विशुद्धसु लेश्यासु परिहारविशुद्धिकं कल्प प्रतिपद्यते, पूर्वप्रतिपन्न पुन सर्वा ( पूर्वा ) स्वपि कयचिन्नवति, तत्रापीतरास्वविशुद्धलेश्यासु नात्यन्तसक्लिष्टासु वर्तते, तथाजूतासु वर्तमानो न प्रजूत कालमवतिष्ठते, कि तु स्तोक, यत स्ववीर्यवशाज्झटित्येव ताज्यो व्यावर्तते । अथ प्रथमत एव कस्मात्प्रवर्तते ? उच्यते कर्मवशात् । उक्त च—"लेसासु विसुद्धासु पडिवज्जइ तीसु नवरं सेसासु । पुवपडिवन्नर्ज पुण हुज्जा सवासु वि कहचि ॥ १ ॥ नच्चतसकिलिठ्ठासु थोवकाल व हदि इयरेसु । चित्ता कम्माण गई तहा विवरीय फल देइ ॥ २ ॥" ध्यानद्वारे—धर्मध्यानेन प्रवर्तमानेन परिहारविशुद्धिक कल्प प्रतिपद्यते । पूर्वप्रतिपन्न पुनरार्तरौऽयोरपि जवति केवल प्रायेण निरनुबन्ध । उक्त च—" झाणमि वि धम्मेण पडिवज्जइ सो पवड्ढमाणेण । इयरेसु वि झाणेसु पुवपवन्नो न पडिसिद्धो ॥ १ ॥ एव अकुसलजोगे उद्दामे तिव्वकम्मपरिणामा । रुद्दट्टेसु वि जावो इमस्स पाय निरणुबंधो ॥ २ ॥"

१ शय्यातरपिंडे चतुर्यामे पुरुषज्येष्ठे च । कृतिकर्मणश्च करणे चत्वारोऽवस्थिता कल्पा ॥ १ ॥ २ तिसृषु विशुद्धासु लेश्यासु प्रतिपद्यते न पुन शेषासु । पूर्वप्रतिपन्नक पुनर्भवेत् सर्वास्वपि कथञ्चित् ॥ १ ॥ नात्यन्तसक्लिष्टासु स्तोककाल च हदीतरासु । चित्रा कर्मणा गति तथा विपरीत फल ददाति ॥ २ ॥ ३ ध्यानेऽपि प्रवर्धमानेन धर्म्येण ध्यानेन प्रतिपद्यते स । इतरेष्वपि ध्यानेषु न प्रतिषिद्ध पूर्वप्रपन्न । एव अकुशलयोगे उद्दामे तीव्रकर्मविपाकात् । रौद्रार्त्तयोरपि भावोऽस्य प्रायो निरनुबंध ॥ २ ॥

गणद्वारे–जघन्यतस्त्रयो गणाः प्रतिपद्यन्ते, उत्कर्षतः शतसंख्याः । पूर्वप्रतिपन्ना जघन्यत उत्कर्षतो वा शतशः । पुरुषग-
णनया जघन्यतः प्रतिपद्यमानाः सप्तविंशतिः, उत्कर्षतः सहस्रं । पूर्वप्रतिपन्नाः पुनर्जघन्यतः शतशः, उत्कर्षतः सहस्रशः ।
आह च–“[1]गणओ तिन्नेव गणा जहन्नपडिवत्ति सयस उक्कोसा । उक्कोसजहन्नेणं सयसुच्चिय पुव्वपडिवन्ना ॥ १ ॥ सत्ता-
वीस जहन्ना सहस्समुक्कोसओ य पडिवत्ती । सयसो सहस्ससो वा पडिवन्नजहन्नउक्कोसा ॥ २ ॥” अन्यच्च यदा पूर्व-
प्रतिपन्नः कल्पमध्यादेको निर्गच्छति अन्यः प्रविशति, तदोनप्रक्षेपे प्रतिपत्तौ कदाचिदेकोऽपि भवति पृथक्त्वं वा । उक्तं
च–“[2]पडिवज्जमाणभइया इक्को वि य हुज्ज ऊणपक्खेवे । पुव्वपडिवन्नया वि य भइया एक्को पुहत्तं वा ॥ १ ॥” अभिग्रह-
द्वारे–अभिग्रहाश्चतुर्विधाः, तद्यथा–द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहा भावाभिग्रहाश्च विचित्रा भवन्ति ।
तत्र परिहारविशुद्धिकस्येमेऽभिग्रहा न भवन्ति, यस्मादेतस्य कल्प एव यथोदितरूपोऽभिग्रहो वर्तते । उक्तं च–“[3]दव्वाई
य अभिग्गह विचित्तरूवा न हुंति पुण केई । एयस्स जाव कप्पो कप्पुच्चिय भिग्गहो जेण ॥ १ ॥ एयंमि गोयराई नियया
नियमेण निरववाया य । तप्पालणं चिय परं एयस्स विसुद्धिठाणं तु ॥ २ ॥” प्रव्रज्याद्वारे–नासावन्यं प्रव्राजयति-

---

१ गणतस्त्रय एव गणा जघन्ये प्रतिपत्तौ शतश उत्कृष्टायां । पूर्वप्रतिपन्ना उत्कृष्टजघन्ययोः शतश एव ॥ १ ॥ सप्तविंशतिर्जघन्ये
सहस्रमुत्कृष्टे च प्रतिपत्तौ । शतशः सहस्रशश्च प्रतिपन्ना जघन्योत्कृष्टतः ॥ २ ॥ २ प्रतिपद्यमानभजना ( विकल्पः ) ऊनप्रक्षेपे एकोपि
भवेत् । पूर्वप्रतिपन्नका अपि च भक्ता एकः पृथक्त्वं वा । ३ केचिदपि विचित्ररूपा द्रव्यादिका अभिग्रहा न भवंति । एतस्य यावत्कल्पं
येन कल्प एवाभिग्रहः ॥ १ ॥ एतस्मिन्गोचरादयो नियता नियमान्निरपवादाश्च । तत्पालनमेव परं विशुद्धिस्थानं त्वेतस्य ॥ २ ॥

कल्पस्थितिरेवेति कृत्वा । उक्तं च-"पंचाएड न एसो अन्न कप्पट्ठिइत्तिकाऊण" उपदेशं पुनर्यथाशक्ति प्रयच्छति । मुडापनद्वारेऽपि नामान्यं मुण्डापयति । अथ प्रव्रज्यानन्तरं नियमतो मुण्डनमिति प्रव्रज्याग्रहणेनैव तद्गृहीतमिति किमर्थं पृथग्द्वार ? तदयुक्त, प्रव्रज्यानन्तरं नियमतो मुण्डनस्यासंभवात्, अयोग्यस्य कथंचिद्दत्तायामपि प्रव्रज्याया पुनरयोग्यता-परिज्ञाने मुण्डनायोगादत पृथगिद द्वारमिति । प्रायश्चित्तविधिद्वारे मनसापि सूक्ष्ममप्यतिचारमापन्नस्य नियमतश्चतुर्गुरुक प्रायश्चित्तमस्य, यत एष कल्प एकाग्रताप्रधानस्ततस्तद्भंगे गुरुतरो दोष इति । कारणद्वारे कारण नामालंबन तत्पुन' सुपरि-शुद्ध ज्ञानादिक तच्चास्य न विद्यते येन तदाश्रित्यापवादपदसेविता स्यात् एष हि सर्वत्र निरपेक्ष' क्लिष्टकर्मक्षयनिमित्त प्रारब्धमेव स्व कल्प यथोक्तविधिना समापयन्महात्मा वर्तते । उक्तं च-"कारणमालंबणमो त पुण नाणाइयं सुपरिसुद्ध । एयस्स त न विज्जइ उचिय तवसाहणोपाय ॥ १ ॥ सव्वत्थ य निरविक्खो आढत्तियं सदढ समाणतो । वट्टइ एस महप्पा किलिट्ठकम्मक्खयनिमित्त ॥ २ ॥" निष्प्रतिकर्मताद्वारे-एष महात्मा निष्प्रतिकर्मशरीरोऽक्षिमलादिकमपि कदाचिन्नाप-नयति, न च प्राणान्तिकेऽपि व्यसने समापतिते द्वितीयपद सेवते । उक्तं च-"निप्पडिकम्मसरीरो अच्छिमलाई वि

१ कल्पस्थितिरितिकृत्वैषोऽन्य न प्रव्राजयति । २ कारणमालंबन तत्पुन सुपरिशुद्ध ज्ञानादिकम् । एतस्य तन्न विद्यते उचित तप साधन प्राय (नोपाय) ॥१॥ सर्वत्र च निरपेक्ष आदृत स्व दृढ समापयन् । वर्त्तते एष महात्मा क्लिष्टकर्मक्षयनिमित्तम् ॥२॥ ३ सदा निष्प्रतिकर्मशरीरोक्षिमलाद्यपि नापनयति । प्राणातिकेऽपि च महाव्यसने न वर्त्तते द्वितीये ॥ १ ॥ अल्पबहुत्वालोचनविषयातीतस्त्वेष भव तीति । अथवा शुभभावादेतदेवैतस्य बहुकमेव ॥ २ ॥ — ३५५१८ १५२

नावणेइ सया। पाणंतिए वि य महावसणंमि न वट्टए बीए ॥ १ ॥ अप्पबहुत्तालोयणविसयाईओ उ होइ एस त्ति। अहवा सुहभावाओ बहुगंपेयं चिय इमस्स ॥ २ ॥" भिक्षाद्वारे–भिक्षाविहारक्रमश्चास्य तृतीयस्यां पौरुष्यां भवति शेषासु च पौरुषीषु कायोत्सर्गः, निद्रापि चास्याल्पा द्रष्टव्या, यदि पुनः कथमपि जंघाबलमस्य परिक्षीणं भवति तथाप्येकोऽविहरन्नपि महाभागो न द्वितीयपदमापद्यते, किं तु तत्रैव यथाकल्पमात्मीययोगान् विदधाति। उक्तं च–"[१]तईयाए पोरिसीए भिक्खाकालो विहारकालो उ। सेसासु य उस्सग्गो पायं अप्पा य निद्दा वि ॥ १ ॥ जंघाबलंमि खीणे अविहरमाणो वि न बीयमावज्जे। तत्थेव अहाकप्पं कुणइ उ जोगं महाभागो ॥ २ ॥" एते च परिहारविशुद्धिका द्विविधास्तद्यथा–इत्वरा यावत्कथिकाश्च। तत्र ये कल्पसमाप्त्यनन्तरमेव कल्पं गच्छं वा समुपयास्यन्ति त इत्वराः, ये पुनः कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्पं प्रतिपत्स्यन्ते ते यावत्कथिकाः। उक्तं च–"[२]इत्तरिय थेरकप्पे जिणकप्पे आवकहिय त्ति"। अत्र स्थविरकल्पग्रहणमुपलक्षणं स्वे कल्पे वेति द्रष्टव्यम्। तत्रेत्वराणां कल्पप्रभावाद्देवमनुष्यतिर्यग्योनिककृता उपसर्गाः सद्यो घातिन आतंका अतीव विषह्याश्च वेदना न प्रादुःषन्ति, यावत्कथिकानां संभवेयुरपि। ते हि जिनकल्पं प्रतिपत्स्यमाना जिनकल्पभावमनुविदधति, जिनकल्पिकानां चोपसर्गादयः संभवन्तीति। उक्तं च–"[३]इत्तरियाणुवसग्गा

---

१ तृतीयस्यां पौरुष्यां भिक्षाकालो विहारकालश्च। शेषासु च प्राय उत्सर्गोल्पा च निद्रापि ॥ १ ॥ क्षीणे जंघाबलेऽविहरन्नपि द्वितीयं ( अपवादपदं ) नापद्यते। तत्रैव यथाकल्पं करोति योगं तु महाभागः ॥ २ ॥ २ इत्वराः स्थविरकल्पे जिनकल्पे यावत्कथिकाः। ३ इत्वरिकाणामुपसर्गा आतङ्का वेदनाश्च न भवन्ति। यावत्कथिकानां भक्ताः।

आयका वेयणा य न हवन्ति । आवकहियाए जइया" इति । तथा 'सुहुम त्ति' सूक्ष्मसपराय, सपर्येति पर्यटति ससारमनेनेति सपराय क्रोधादिकषाय, सूक्ष्मो लोभाशमात्रावशेषतया सपरायो यत्र तत्सूक्ष्मसपरायम् । इदमपि सक्लिश्यमानकविशुद्ध्यमानकभेद द्विधा । तत्र श्रेणि प्रच्यवमानस्य सक्लिश्यमानकं, श्रेणिमारोहतो विशुद्ध्यमानकमिति । 'अहक्खाय त्ति' अथशब्दोऽत्र याथातथ्ये, आङ् अभिविधौ, आ समन्ताद्याथातथ्येन ख्यातमथाख्यात, कषायोदयाभावतो निरतिचारत्वात्पारमार्थिकरूपेण ख्यातमथाख्यातम् । यद्वा यथा सर्वस्मिञ्जीवलोके ख्यात प्रसिद्धमकषाय भवति चारित्रमिति यत्तद्यथाख्यातम् । 'देसजय त्ति' देशे सकल्पनिरपराधत्रसवधविषये यत यमन सयमो यस्य स देशयत सम्यग्दर्शनयुत एकाणुव्रतादिधारी, अनुमतिमात्रश्रावक इत्यर्थ । यदाह श्रीशिवशर्मसूरिवर कर्मप्रकृतौ–"एगवयाइ चरमो अणुमइमित्त त्ति देसजई" । 'अजय त्ति' न विद्यते यत विरत विरतिर्यस्य सोऽयत सर्वथा विरतिहीन । तथा दर्शनशब्दस्य प्रत्येक सबन्धाच्चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनरूपाणि चत्वारि दर्शनानि । तत्र चक्षुषा दर्शन वस्तुसामान्याशात्मक ग्रहण चक्षुर्दर्शन, अचक्षुषा चक्षुर्वर्जशेषेन्द्रियचतुष्टयेन मनसा च यद्दर्शनः सामान्याशात्मक ग्रहणं तदचक्षुर्दर्शन, अवधिना रूपिद्रव्यमर्यादया दर्शन सामान्याशग्रहणमवधिदर्शन, केवलेन संपूर्णवस्तुतत्त्वग्राहकबोधविशेषरूपेण यद्दर्शन सामान्याशग्रहण तत्केवलदर्शनमिति । किरूपाण्येतानि दर्शनान्यत आह–अनाकाराणि सामान्याकारयुक्तत्वे सत्यपि न विद्यते विशिष्टो व्यक्त आकारो येषु तान्यनाकाराणि । भावार्थ प्रागेवोक्त इति ॥ १२ ॥

१ एकव्रतादिचरम अनुमतिमात्र इति देशयति ।

किण्हा नीला काऊ तेऊ पम्हा य सुक्क भव्वियरा । वेयग खइगुवसम मिच्छ मीस सासाण संनियरे ॥२३॥

टीका—इह षोढा लेश्या—कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या 'चः' समुच्चये व्यवहितसंबन्धश्च, स च शुक्ललेश्या चेत्यत्र योज्यः । भव्यो मुक्तिगमनार्हः, इतरोऽभव्यः कदाचनापि सिद्धिगमनानर्हः । 'वेयग त्ति' वेदकं सम्यक्त्वपुद्गलवेदनात्क्षायोपशमिकमित्यर्थः । तत्रोदीर्णस्य मिथ्यात्वस्य क्षयेणानुदीर्णस्य चोपशमेन विष्कम्भितोदयस्वरूपेण यन्निर्वृत्तं तत्क्षायोपशमिकम् । उक्तं च—"मिच्छत्तं जमुइन्नं तं खीणं अणुदियं च उवसंतं । मीसीभावपरिणयं वेइज्जंतं खओवसमं ॥ १ ॥" तथा 'खइग त्ति' क्षयेणात्यन्तोच्छेदेन त्रिविधस्यापि दर्शनमोहनीयस्य निर्वृत्तं क्षायिकं, तच्च क्षपकश्रेण्यामेव भवति—"पढमकसाए समयं खवेइ अंतोमुहुत्तमित्तेणं । तत्तु च्चिय मिच्छत्तं तओ य मीसं तओ संमं ॥ १ ॥ बद्धाऊ पडिवन्नो पढमकसायक्खए जइ मरिज्जा । तो मिच्छत्तोदयओ चिणिज्ज भुज्जो न खीणंमि ॥ २ ॥ तंमि मओ जाइ दिवं तप्परिणामो य सत्तए खीणे । उवरयपरिणामो पुण पच्छा नाणामइगइओ ॥ ३ ॥ खीणंमि दंसणतिए किं होइ

---

१ यन्मिथ्यात्वमुदीर्णं तत्क्षीणमनुदितं चोपशान्तं । मिश्रभावपरिणतं वेद्यमानं क्षायोपशमिकम् ॥ १ ॥ २ अंतर्मुहूर्तमात्रेण समकं प्रथमकषायान्क्षपयति । तत एव मिथ्यात्वं, ततश्च मिश्रं ततः सम्यक्त्वं ॥ १ ॥ बद्धायुः प्रतिपन्नः प्रथमकषायक्षये यदि म्रियेत । ततो मिथ्यात्वोदयतश्चिनुयाद्भूयो न क्षीणे ॥ २ ॥ तस्मिन्मृतो याति दिवं तत्परिणामश्च सप्तके क्षीणे । उपरतपरिणामः पुनः पश्चान्नानामतिगतिकः ॥ ३ ॥ क्षीणे दर्शनत्रिके किं भवति ? ततस्त्रिदर्शनातीतः । भण्यते सम्यग्दृष्टिः सम्यक्त्वक्षये कुतः सम्यक्त्वं ॥ ४ ॥

तउं तिदसणाईउं । जन्नइ सम्मद्दिठी सम्मत्तखए कउं सम्म ॥ ४ ॥ निर्वलियमयणकुद्दवरूव मिच्छत्तमेव सम्मत्त । खीण न उ जो जावो सद्दहणा लक्खणो तस्स ॥ ५ ॥ सो तस्स विसुद्धयरो जायइ सम्मत्तपुग्गलक्खयउं । दिठि व सण्ह सुद्धब्भपडल विगमे मणूसस्स ॥ ६ ॥ जह सुद्धजलाणुगय वत्थं सुद्ध जलक्खए सुतरं । सम्मत्तसुद्धपुग्गलपरिक्खए दंसण एयं ॥ ७ ॥ तमि य तइयचउत्थे जवमि सिज्झति खइयसम्मत्ते । सुरनरयजुगलिसु गई इम तु जिणकालियनराण ॥ ८ ॥ पडिवत्तीए अविरयदेसपमत्तापमत्तविरयाण । अन्नयरो पडिवज्जइ सुक्कझाणोवगयचित्तो ॥ ए ॥ " तत्रोदीर्णस्य मिथ्यात्वस्य क्षये सति अनुदीर्णस्योपशमो विपाकप्रदेशवेदनरूपस्य द्विविधस्याप्युदयस्य विष्कम्भण तेन निर्वृत्तमौपशमिक, तच्च द्विधा ग्रन्थिभेदसंभवमुपशमश्रेणिसम्भव च । तत्र ग्रन्थिभेदसम्भवमेव—इह गम्भीरापारसंसारसागरमध्यमध्यासीनो जन्तुर्मिथ्या त्वप्रत्ययमनन्तान् पुद्गलपरावर्तानन्तेषु खलङ्क्षाण्यनुभूय कथमपि तथाभव्यत्वपरिपाकवशतो गिरिसरिदुपलघोलनाकल्पे-नानाभोगनिर्वर्तितयथाप्रवृत्तिकरणेन "करण परिणामोऽत्रेति" वचनादध्यवसायविशेषरूपेणायुर्वर्जानि ज्ञानावरणीयादि-

---

१ निर्वलितमदनकोद्रवरूप मिथ्यात्वमेव सम्यक्त्व ( सम्यक्त्वमोहनीय ) । क्षीण न तु तस्य य श्रद्धालक्षणो भावो य ( स ) ॥ ५ ॥ स तस्य विशुद्धतरो जायते सम्यक्त्वपुद्गलक्षयत । श्लक्ष्णशुद्धाभ्रपटलक्षये दृष्टिरिव मनुष्यस्य ॥ ६ ॥ यथा शुद्धजलानुगत वस्त्र शुद्ध जलक्षये सुतराम् । सम्यक्त्वशुद्धपुद्गलक्षये दर्शनमेतत् ॥ ७ ॥ तस्मिंश्च क्षायिकसम्यक्त्वे ( सति ) तृतीये चतुर्थे वा भवे सिध्यति । सुरनारकयुगलिकेषु गतिरेतच्च जिनकालिकनराणाम् ॥ ८ ॥ प्रतिपत्तौ अविरतदेशप्रमत्ताप्रमत्तविरताना । अन्यतर शुक्लध्यानोपगतचित्त प्रतिपद्यते ॥ ९ ॥

कर्माणि सर्वाण्यपि पल्योपमासंख्येयभागन्यूनैकसागरोपमकोटाकोटीस्थितिकानि करोति, अत्र चान्तरे जीवस्य कर्मजनितो घनरागद्वेषपरिणामरूपः कर्कशनिबिडचिरप्ररूढगुपिलवक्रग्रन्थिवद्दुर्भेदोऽभिन्नपूर्वो ग्रन्थिर्भवति। तदुक्तम्—"तीएं वि थोवमित्ते खविए इत्थंतरंमि जीवस्स। हवइ हु अभिन्नपुव्वो गंठी एवं जिणा बिंति॥ १॥ गंठित्ति सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व। जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो॥ २॥" इति। इमं च ग्रन्थिं यावदभव्या अपि यथाप्रवृत्तिकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति। उक्तं चावश्यकटीकायां—"अभव्यस्यापि कस्यचिद्यथाप्रवृत्तिकरणतो ग्रन्थिमासाद्यार्हदादिविभूतिदर्शनतः प्रयोजनान्तरतो वा प्रवर्तमानस्य श्रुतसामायिकलाभो भवति न शेषलाभ इति"। एतदनन्तरं कश्चिदेव महात्मा समासन्नपरमनिर्वृतिसुखः समुल्लसितप्रचुरदुर्निवारवीर्यप्रसरो निशितकुठारधारयेव परमविशुद्ध्या यथोक्तस्वरूपस्य ग्रन्थेर्भेदं विधाय मिथ्यात्वस्थितेरन्तर्मुहूर्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणलक्षणविशुद्धिजनितसामर्थ्योऽन्तर्मुहूर्तकालप्रमाणं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति। अत्र यथाप्रवृत्तिकरणापूर्वकरणानिवृत्तिकरणानामयं क्रमः—"जा गंठी ता पढमं गंठिं समइच्छओ भवे बीयं। अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे॥ १॥" 'गंठिं समइच्छओ त्ति' ग्रन्थिं समतिक्रामतो भिन्दानस्येति 'सम्मत्तपुरक्खडे त्ति' सम्यक्त्वं पुरस्कृतं येन

---

१ तस्या अपि स्तोकमात्रे क्षपितेऽत्रान्तरे जीवेन। अभिन्नपूर्वो ग्रंथिर्भवत्येवं जिना ब्रुवते॥ १॥ ग्रंथिरिति सुदुर्भेदः कर्कशघनरूढगूढग्रंथिरिव। जीवस्य कर्मजनितो घनरागद्वेषपरिणामः॥ २॥ २ यावद्ग्रंथिस्तावत्प्रथमं ग्रंथिं समतिक्रामतो भवेद्द्वितीयं। अनिवृत्तिकरणं पुनः पुरस्कृतसम्यक्त्वे जीवे॥ १॥

तस्मिन्नासन्नसम्यक्त्वे जीवेऽनिवृत्तिकरणं भवतीत्यर्थ । एतस्मिंश्चान्तरकरणे कृते सति तस्य मिथ्यात्वकर्मणः स्थितिद्वय भवति । अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्तप्रमाणा, तस्मादेवान्तरकरणादुपरितनी शेषा द्वितीया स्थिति । स्थापना । तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव । अन्तर्मुहूर्तेन पुनस्तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकसम्यक्त्वमवाप्नोति, मिथ्यादलिकवेदनाभावात् । यथा हि वनदावानल पूर्वदग्धेन्धनमूषरं वा देशमवाप्य विध्यायति तथा मिथ्यात्ववेदनवनदवोऽप्यन्तरकरणमवाप्य विध्यायति । तथा च सति तस्यौपशमिकसम्यक्त्वलाभ । यदाहु श्रीपूज्यपादा –"ऊसरदेस दड्ढिल्लय च विज्झाइ वणदवो पप्प । इय मिच्छस्स अणुदए उवसमसम्म लहइ जीवो ॥ १ ॥" इति । व्यावर्णित ग्रन्थिभेदसम्भवमौपशमिकसम्यक्त्व, अथोपशमश्रेणिसम्भवमौपशमिकसम्यक्त्व त्रिभुवनजनप्रथितप्रवचनोपनिषद्वेदिश्रीजिनभद्रगणिक्षमाश्रमणप्रणीतगाथाभिरेव भाव्यते–"उवसामगसेढीए पट्ठवओ अप्पमत्तविरओ त्ति । पज्जवसाणे सो वा होइ पमत्तो अविरओ वा ॥ १ ॥ अन्ने भणति अविरयदेसपमत्तापमत्तविरयाण । अन्नयरो पडिवज्जइ दसणसमयमि उ नियट्टी ॥ २ ॥ सजलणाईण समो जुत्तो सजोयणादओ जे उ । ते पुव्वि चिय समिया

---

१ ऊषरदेश दग्ध च विध्यायति वनदव प्राप्य । इति मिथ्यात्वस्यानुदये औपशमिकसम्यक्त्व लभते जीव ॥ १ ॥ २ उपशामकश्रेण्या प्रस्थापकोऽप्रमत्तविरत इति । पर्यवसाने स वा भवति प्रमत्तो ऽविरतो वा ॥ १ ॥ अन्ये भणतेऽविरतदेशप्रमत्ताप्रमत्तविरताना । अन्यतर प्रतिपद्यते शमितदर्शनश्च निवृत्ति ( दर्शनसमये तु निवृत्ति ) ॥ २ ॥ सज्वलादीना शमो युक्तो ( यत ) ये तु सयोजनादय । ते पूर्वमेव ननु आदिसम्यक्त्वलाभे शमिता ॥ ३ ॥

नणु संमत्ताइलाभंमि ॥ ३ ॥ आचार्याः । आसि खओवसमोसिं समोहुणा भणइ को विसेसोसिं । नणु खीणंमि उइन्ने सेसोवसमे खओवसमे ॥ ४ ॥ सो चेव नणूवसमो उइए खीणंमि सेसए समिए । सुहुमोदयया मीसे नतूवसमिए विसेसोयं ॥ ५ ॥ वेएइ संतकम्मं खओवसमिएसु नाणुभागं सो । उवसंतकसाओ पुण वेएइ न संतकम्मं पि ॥ ६ ॥ संजोयणाइयाणं नणूदओ संजयस्स पकिसिद्धो । सच्चमिह सोणुभागं पडुच्च न पएसकम्मं तु ॥ ७ ॥ भणियं च सुए जीवो वेएइ नवाणुभागकम्मं तु । जं पुण पएसकम्मं नियमा वेएइ तं सव्वं ॥ ८ ॥ नाणुदियं निज्जरए नासंतमुदेइ जं तओ कम्मं । सव्वं पएसकम्मं वेएउं मुच्चए सव्वो ॥ ९ ॥ किह दंसणाइघाओ न होइ संजोयणाइवेयणओ । मंदाणुभावयाए जहाणुभावंमि वि कहिंचि ॥ १० ॥ निच्चमुइन्नं पि जहा सयलचउनाणिणो तदावरणं । न वि घाय (इ) मंदयाए पएसकम्मं तहा नेयं ॥ ११ ॥ ” ‘मिच्छ त्ति’ मिथ्यात्वमदेवदेवबुद्ध्यगुरुगुरुबुद्ध्यतत्त्वतत्त्वबुद्धिलक्षणं ‘मीस त्ति’ इहानन्तराभिहितविधिना

---

१ एषां क्षयोपशम आसीत् अधुना शमो भण्यते कोनयोर्विशेषः । ननूदीर्णे क्षीणे शेषोपशमे क्षयोपशमः ॥ ४ ॥ ननूपशमः स एव उदिते क्षीणे शेषे शमिते । सूक्ष्मोदयत मिश्रे न त्वौपशमिकेऽयं विशेषः ॥ ५ ॥ क्षायोपशमिके सत्कर्म वेदयति नानुभागं सः । उपशान्तकषायः पुनर्न वेदयति सत्कर्मापि ॥ ६ ॥ ननु संयोजनादीनामुदयः संयतस्य प्रतिषिद्धः । सत्यं सोनुभागं प्रतीत्येह न प्रदेशकर्म तु ॥ ७ ॥ भणितं च श्रुतेऽनुभागकर्म तु जीवो वेदयति वा न । यत्पुनः प्रदेशकर्म तत्सर्वं नियमाद्वेदयति ॥ ८ ॥ नानुदितं निर्जीर्यते नासदुदेति यत्ततः सर्वं कर्म प्रदेशकर्म वेदयित्वैवमुच्यते सर्वः ॥ ९ ॥ कथं दर्शनादिघातो न संयोजनादिवेदनाद्भवति । मंदानुभावतया यथा कस्मिंश्चिदनुभावे ॥ १० ॥ नित्यमुदीर्णमपि यथा सकलचतुर्ज्ञानिनस्तदावरणं । नापि घातयति मंदत्वात् प्रदेशकर्मापि तथा ज्ञेयं ॥ ११ ॥

लब्धेनौपशमिकसम्यक्त्वेन ग्रन्थिसज्जवेनौषधविशेषकल्पेन मदनकोद्रवस्थानीयं मिथ्यात्वमोहनीयं कर्म विशोधयित्वा त्रिधा करोति। तथा हि–शुद्धमर्धविशुद्धमविशुद्धं चेति। स्थापना। तत्र त्रयाणां पुञ्जानां मध्ये योऽसावर्धविशुद्धः पुञ्जः स मिश्र उच्यते सम्यग्मिथ्यात्वमित्यर्थः। एतदुदयात् किल प्राणी जिनप्रणीतं तत्त्वं न सम्यक् श्रद्दधाति नापि निन्दति। उक्तं च बृहच्छतकबृहच्चूर्णौ–"जहा नालिकेरदीववासिस्स अइछुहियस्स वि पुरिसस्स इत्थ उयणाइए अणेगहा वि ढोइए तस्स आहारस्स उवरिं न रुई न य निंदा जेण कारणेण सो उयणाइउ आहारो न कयाइ दिट्ठो नावि सुउ, एवं संमामिच्छदिट्ठिस्स वि जीवाइपयत्थाण उवरि न रुई न य निंदा" इत्यादि। तथा 'सासाण त्ति' सासादनं तत्र आयमौपशमिकसम्यक्त्वलक्षणं सादयत्यपनयत्यासादनमनन्तानुबन्धिकषायवेदनम्। अत्र "पृषोदरादित्वाद्यशब्दलोपः (३–२–१५५)"। "रम्यादिभ्यः कर्तर्यनट्प्रत्ययः (५–३–१२६)"। सति ह्यस्मिन् परमानन्दरूपानन्तसुखदो निःश्रेयसतरुबीजभूतो ग्रन्थिभेदजवौपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेणोत्कर्षतः षड्भिरावलिकाभिरपगच्छतीति। ततः सहासादनेन वर्तत इति सासादनम्। यद्वा सास्वादनं तत्र सम्यक्त्वलक्षणरसास्वादनेन वर्तत इति सास्वादनम्। यथा हि भुक्तक्षीराम्नविषयव्यलीकचित्तपुरुषस्तद्वमनकाले क्षीराम्नरसमास्वादयति तथात्रापि गुणस्थाने मिथ्यात्वाभिमुखतया सम्यक्त्वस्यो-

१ अत्र यथा नालिकेरद्वीपवासिनः अतिक्षुधितस्यापि पुरुषस्यौदनादिके ढौकितेऽपि अनेकधा तस्याहारस्योपरि न च रुचिर्न च निंदा। येन कारणेन स ओदनादिक आहारो न कदाचिद्दृष्टो नवा श्रुतः। एवं सम्यग्मिथ्यादृशोपि जीवादिपदार्थानामुपरि न च रुचिर्न च निंदा।

सम्यक्त्वमुद्वमतस्तद्रसास्वादो भवतीतीदं सास्वादनमुच्यत इति । तथा 'सन्नि त्ति' विशिष्ट-
परि व्यलीकचित्तस्य पुरुषस्य सर्वोऽप्येकेन्द्रियादिः ॥ १३ ॥
स्मरणादिरूपमनोविज्ञानभाक् संज्ञी, इतरोऽसंज्ञी

**आहारेयर भेया, सुरनरयविभंगमइसुओहिदुगे । सम्मत्ततिगे पम्हासुक्कासन्नीसु सन्निदुगं ॥ १४ ॥**

'भेय त्ति'
टीका–ओजोलोमप्रक्षेपाहाराणामन्यतममाहारमाहारयतीत्याहारकः । इतरोऽनाहारको विग्रहगत्यादिगतः । भेदा भवन्तीति शेषः, सर्वेऽपि द्विषष्टिभेदाः, तथा हि–गति-
चतुर्दशमौलमार्गणास्थानानामिमेऽवान्तराश्चतुरादिसंख्या
श्चतुर्धा, इन्द्रियं पंचधा, कायः षोढा, योगस्त्रिधा, वेदस्त्रिधा, कषायश्चतुर्धा, ज्ञानपंचकमज्ञानत्रिकमिति ज्ञानमष्टधा,
संयमपंचकं देशसंयमासंयमसहितं सप्तधा, दर्शनं चतुर्धा, लेश्या षोढा, भव्योऽभव्यश्चेति भव्यमार्गणास्थानं द्विधा,
सम्यक्त्वत्रयमिथ्यात्वमिश्रसासादनभेदात् सम्यक्त्वमार्गणास्थानं षोढा, संज्ञिमार्गणास्थानं सप्रतिपक्षं द्वेधा, आहारकमा-
र्गणास्थानं सप्रतिपक्षं द्वेधा । सर्वेऽप्येत एकत्र मील्यन्ते तत उत्तरभेदा द्वाषष्टिरिति । अत्र गाथा–"चउ पण छ तिय
तिय चउ अड सग चउ छच्च दु छग दो दुन्नि । गइयाइमग्गणाणं इय उत्तरभेय वासट्ठी ॥ १ ॥" इत्येवमुक्ता गत्या-
दिमार्गणास्थानानामवान्तरभेदाः । सांप्रतमेतेष्वेव जीवस्थानानि चिन्तयन्नाह–'सुरनरयविभंग' इत्यादि सुरगतौ नरक-
गतौ च संज्ञिद्विकं पर्याप्तापर्याप्तलक्षणं भवति । अपर्याप्तश्चेह करणापर्याप्तो गृह्यते न लब्ध्यपर्याप्तः, तस्य देवनरकगत्यो-
रुत्पादाभावात् । तथा विभंगे विभंगज्ञाने, मतौ मतिज्ञाने, श्रुते श्रुतज्ञाने, 'ओहिदुगित्ति' अवधिद्विकेऽवधिज्ञानाव-

१ चत्वारः पंच षट् त्रयस्त्रयश्चत्वारोष्ट सप्त चत्वारः षट् द्वौ षट् द्वौ द्वौ । गत्यादिमार्गणानां द्वाषष्टिरित्युत्तरभेदाः ।

धिदर्शनलक्षणे, सम्यक्त्वत्रिके क्षायोपशमिकक्षायिकौपशमिकलक्षणे, पद्मलेश्याया, शुक्ललेश्याया, सज्ञिनि च, सज्ञिद्विकमपर्याप्तपर्याप्तलक्षण भवति, न शेषाणि जीवस्थानानि तेषु मिथ्यात्वादिकारणतो मतिज्ञानादीनामसम्भवात् । अत एव च हेतोरिहापर्याप्तक करणापर्याप्तको गृह्यते, न लब्ध्यपर्याप्तक., तस्य मिथ्यादृष्टित्वादशुभलेश्याकत्वाच्चेति । आह—क्षायिकक्षायोपशमिकौपशमिकेषु कथ सज्ञ्यपर्याप्तको लभ्यते ? उच्यते— इह य. कश्चित् पूर्वबद्धायुष्क क्षपकश्रेणिमारभ्यानन्तानुबन्ध्यादिसप्तकक्षयं कृत्वा क्षायिकसम्यक्त्वमुत्पाद्य गतिचतुष्टयस्यान्यतरस्या गतावुत्पद्यते तदा सोऽपर्याप्तः क्षायिकसम्यक्त्वे प्राप्यते, क्षायोपशमिकसम्यक्त्वयुक्तश्च देवादिभवेभ्योऽनन्तरमिहोत्पद्यमानस्तीर्थकरादिरपर्याप्त सुप्रतीत एव। औपशमिकसम्यक्त्व पुनरपर्याप्तावस्थायामनुत्तरसुरस्य द्रष्टव्यम् । इहौपशमिकसम्यक्त्वमपर्याप्तस्य केचिन्नेच्छन्ति, तथा च ते प्राहु —"न तावदस्यामेवापर्याप्तावस्थायामिद सम्यक्त्वमुपजायते, तदानीं तस्य तथाविधविशुद्ध्यभावात् । अथैतत्तदानीं मोत्पादि, यत्तु पारभविक तद्भवतु, केन विनिवार्यत इति मन्येथास्तदपि न युक्तियुक्तमुत्पश्याम , यतो यो मिथ्यादृष्टिस्तत्प्रथमतया सम्यक्त्वमौपशमिकमवाप्नोति स तावत्तद्भावमापन्न सन् काल न करोत्येव । यदुक्तमागमे—"अणबंधोदयमाउगबंध काल च सासणो कुणई । उवसमसम्मद्दिट्ठी चउण्हमिक्क पि नो कुणई ॥ १ ॥ " उपशमश्रेणेर्मृत्वानुत्तरसुरेषूत्पन्नस्यापर्याप्तकस्यैतल्लभ्यते इति चेन्नन्वेतदपि न बहु मन्यामहे, तस्य प्रथमसमय एव सम्यक्त्वपुञ्जो-

१ अनन्तानुबन्धिबन्धोदय आयुर्बंध कालं च सासादन करोति । औपशमिकसम्यग्दृष्टिस्तु चतुर्णामेकमपि न करोति ॥ १ ॥

दयात् क्षायोपशमिकं सम्यक्त्वं भवति न त्वौपशमिकम् । उक्तं च शतकबृहच्चूर्णौ—"जो उवसमसम्मदिट्ठी उवसमसेढीए कालं करेइ सो पढमसमए चेव सम्मत्तपुंजं उदयावलियाए छोढूण सम्मत्तपुग्गले वेएइ, तेण न उवसमसम्मदिट्ठी अपज्जत्तगो लब्भइ" इत्यादि । तस्मात्पर्याप्तसंज्ञिलक्षणमेकमेव जीवस्थानकमत्र प्राप्यत इति स्थितम् । अपरे पुनराहुः—"भवत्येवापर्याप्तावस्थायामप्यौपशमिकं सम्यक्त्वं, सप्ततिचूर्ण्यादिषु तथाभिधानात् । सप्ततिचूर्णौ हि गुणस्थानकेषु नामकर्मणो बन्धोदयादिमार्गणावसरेऽविरतसम्यग्दृष्टेरुदयस्थानचिन्तायां पंचविंशत्युदयः सप्तविंशत्युदयश्च देवनारकानधिकृत्योक्तः, तत्र नारकाः क्षायिकवेदकसम्यग्दृष्टयः, देवास्तु त्रिविधसम्यग्दृष्टयोऽपि । तथा च तद्ग्रन्थः—"पणवीससत्तावीसोदया देवनेरइए पडुच्च नेरइगो । खइगवेयगसम्मदिट्ठी देवो तिविहसम्मदिट्ठी त्ति" पंचविंशत्युदयश्च शरीरपर्याप्तिं निर्वर्तयतः । तथाहि—निर्माणस्थिरास्थिरगुरुलघुशुभाशुभतैजसकार्मणवर्णगन्धरसस्पर्शचतुष्कदेवगतिदेवानुपूर्वीपंचेन्द्रियजातित्रसबादरपर्याप्तकं सुभगदुर्भगयोरेकतरमादेयानादेययोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरमित्येकविंशतिः, ततः शरीरपर्याप्त्या पर्याप्तस्य शेषपर्याप्तिभिरपर्याप्तस्य वैक्रियद्विकोपघातप्रत्येकसमचतुरस्रलक्षणप्रकृतिपंचकक्षेपे देवानुपूर्व्यपनयने च पंचविंशतिर्भवति । ततः शरीरपर्याप्त्या पर्याप्तस्य शेषपर्याप्तिभिः पुनरपर्याप्तस्य पराघातप्र-

१ य उपशमसम्यग्दृष्टिरुपशमश्रेणौ कालं करोति स प्रथमसमय एव सम्यक्त्वपुंजं उदयावलिकायां क्षिप्त्वा सम्यक्त्वपुद्गलान् वेदयति तेन नोपशमसम्यग्दृष्टिरपर्याप्तको लभ्यते । २ पंचविंशतिसप्तविंशत्युदयौ देवनैरयिकान्प्रतीत्य । नैरयिकः क्षायिकवेदकसम्यग्दृष्टिर्देवस्त्रिविधसम्यग्दृष्टिरपि ॥ १ ॥

शस्तविहायोगतिक्षेपे सप्तविंशतिर्भवति । ततोऽपर्याप्तावस्थायामपीह देवस्यौपशमिकं सम्यक्त्वमुक्तम्" । तथा पचसंग्रहेऽपि मार्गणास्थानकेषु जीवस्थानकचिन्तायामौपशमिकसम्यक्त्वे "उवसमसममि दो सन्नी" इत्यनेन ग्रन्थेन संज्ञिद्विकमुक्तम् । तत सप्ततिचूर्ण्यभिप्रायेण पचसंग्रहाभिप्रायेण चास्माभिरपि औपशमिकसम्यक्त्वे संज्ञिद्विकमुक्त, तत्त्व तु केवलिनो विशिष्टबहुश्रुता वा विदन्तीति ॥ १४ ॥

**तमसन्निअपज्जजुयं नरे सबायरअपज्ज तेऊए। थावर इगिंदि पढमा चउ बार असन्नि दु दु विगले१५॥**

टीका–तत्पूर्वोक्तं संज्ञिद्विकमपर्याप्तासंज्ञियुतं नरे नरेषु लभ्यते । जातावेकवचनम् । अयमर्थ –इह द्वये मनुष्या , गर्भव्युत्क्रान्तिका समूर्छिमाश्च । तत्र ये गर्भव्युत्क्रान्तिकास्तेषु यथोक्त संज्ञिद्विक लभ्यते । ये तु वान्तपित्तादिषु समूर्छन्ति तेऽन्तर्मुहूर्तायुषोऽसंज्ञिनो लब्ध्यपर्याप्तकाश्च द्रष्टव्या । यदाहु श्रीमदार्यश्यामपादा प्रज्ञापनायाम्–"कहिणं भंते समुच्छिममणुस्सा समुच्छंति ? गोयमा ! अतो मणुस्सखेत्तस्स पणयालीसाए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पन्नाए अतरदीवेसु गब्भवक्कंतियमणुस्साण चेव उच्चारेसु वा पासवणेसु

१ उपशमसम्यक्त्वे द्वौ संज्ञिनौ । २ क्व भदंत समूर्छिममनुष्या समूर्छन्ति ! गौतम अत्र अतर्मनुष्यक्षेत्रस्य पचचत्वारिंशद्योजनलक्षेषु अर्धतृतीयद्वीपसमुद्रयो पचदशसु कर्मभूमिषु त्रिंशत्यकर्मभूमिषु षट्पचाशत्यतर्द्वीपेषु गर्भव्युत्क्रान्तिकमनुष्याणामेव उच्चारे प्रश्रवणे श्लेष्मणि सिंघाणे वान्ते पित्ते शुक्रे शोणिते शुक्रपुद्गलपरिशाटे विगतजीवकलेवरे स्त्रीपुरुषसयोगे नगरनिर्धमने सर्वेष्वेवाशुचिस्थानेषु संमूर्छिममनुष्या समूर्छंति । अगुलासख्यभागमात्रयावगाहनया । असज्ञिनो मिथ्यादृष्टयोऽज्ञानिन । सर्वाभि पर्याप्तिभिरपर्याप्तका अतर्मुहूर्त्तायुष्का एव काल कुर्वन्ति ।

वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा सुकेसु वा सोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोगेसु वा नगरनिद्धमणेसु वा सवेसु चेव असुइट्ठाणेसु इत्थ णं संमुच्छिममणुस्सा संमुच्छंति अंगुलस्स असंखभागमित्ताए ओगाहणाए असन्नी मिच्छद्दिट्ठी अन्नाणी सबाहिं पजत्तीहिं अपजत्ता अंतमुहुत्ताउया चेव कालं करंति त्ति"। तान् संमूर्छिममनुष्यानाश्रित्य तृतीयमप्यसंज्ञ्यपर्याप्तलक्षणं जीवस्थानं प्राप्यत इति। 'सबायरअपज्ज तेऊए' इति–तदेवेत्यनुवर्तते, तदेव पूर्वोक्तं संज्ञिद्विकं सह बादरापर्याप्तेन वर्तत इति सबादरापर्याप्तं तेजोलेश्यायां लभ्यते। एतदुक्तं भवति–तेजोलेश्यायां त्रीणि जीवस्थानानि भवन्ति संज्ञ्यपर्याप्तः संज्ञिपर्याप्तः बादरैकेन्द्रियापर्याप्तश्च। बादरोऽपर्याप्तः कथमवाप्यत इति चेदुच्यते–इह भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवाः पृथिवीजलवनस्पतिषु मध्ये उत्पद्यन्ते। यदाह दुःषमान्धकारनिमग्नजिनप्रवचनप्रदीपो भगवान् जिनभद्रगणिक्षमाश्रमणः–"[1]पुढवीआउवणस्सइ गब्भे। पज्जत्त संखजीवेसु। सग्गचुयाणं वासो, सेसा पडिसेहिया ठाणा॥ १॥" ते च तेजोलेश्यावन्तः, यदभाणि–"[2]किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया। जोइससोहम्मीसाण तेऊलेसा मुणेयबा॥ १॥" यल्लेश्यश्च म्रियते तल्लेश्य एवाग्रेऽपि समुत्पद्यते "[3]जल्लेसे मरइ तल्लेसे उववज्जइ" इति वचनात्। अतो बादरापर्याप्तावस्थायां कियत्कालं तेजोलेश्याऽवाप्यत इति सिद्धं जीवस्थानकत्रयं तेजोलेश्यायामिति। कायद्वारे स्थावरेषु पृथिव्यप्तेजोवायुवनस्पतिलक्षणेषु। इन्द्रियद्वारे

---

१ पृथिव्यब्वनस्पतिषु गर्भे पर्याप्ते संख्यातजीवितेषु स्वर्गच्युतानां वासः शेषाणि स्थानानि प्रतिषिद्धानि। २ कृष्णनीलकापोततेजोलेश्याका भवनव्यंतराः। ज्योतिष्कसौधर्मेशानाश्च तेजोलेश्याका ज्ञातव्याः। ३ यल्लेश्यो म्रियते तल्लेश्य उत्पद्यते।

एकेन्द्रिये च प्रथमानि चत्वारि जीवस्थानानि सूक्ष्मैकेन्द्रियापर्याप्तसूक्ष्मैकेन्द्रियपर्याप्तबादरैकेन्द्रियापर्याप्तबादरैकेन्द्रियपर्याप्त-लक्षणानि भवन्ति । असञ्ज्ञिनि सञ्ज्ञिव्यतिरिक्ते 'काकाक्षिगोलकन्यायेन' प्रथमशब्दस्य सबन्धात् प्रथमान्यादिमानि द्वादश जीवस्थानानि पर्याप्तापर्याप्तसूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरसञ्ज्ञिपचेन्द्रियलक्षणानि भवन्ति । सर्वेषामपि विशिष्टमनोविकलतया सञ्ज्ञिप्रतिपक्षत्वाविशेषात्, सञ्ज्ञिप्रतिपक्षस्य चासञ्ज्ञित्वेन व्यवहारात् । 'दुदु विगल त्ति' विकलेषु द्वीन्द्रियत्रीन्द्रियचतुरि-न्द्रियेषु द्वे द्वे जीवस्थानके भवत । तत्र द्वीन्द्रियेषु द्वीन्द्रियोऽपर्याप्त पर्याप्त इति द्वे, त्रीन्द्रियेषु त्रीन्द्रियोऽपर्याप्त-पर्याप्त इति द्वे, चतुरिन्द्रियेषु चतुरिन्द्रियोऽपर्याप्त पर्याप्त इति द्वे ॥ १५ ॥

**दस चरम तसे अजयाहारगतिरितणुकसायदुअन्नाणे । पढमतिलेसाभवियरअचक्खुनपुमिच्छि सव्वे वि १६**

टीका–त्रसे त्रसकाये चरमाण्यन्तिमानि पर्याप्तापर्याप्तद्वित्रिचतुरसंज्ञिसञ्ज्ञिपचेन्द्रियलक्षणानि दश जीवस्थानानि भवन्ति द्वीन्द्रियादीनामेव त्रसत्वात् । अयतेऽविरते सर्वाण्यपि जीवस्थानानि भवन्ति । तथाहारके, 'तिरि त्ति' तिर्य-ग्गतौ, तनुयोगे काययोगे, कषायचतुष्टये, द्वयोरज्ञानयोर्मत्यज्ञानश्रुताज्ञानरूपयोः, प्रथमत्रिलेश्यासु कृष्णलेश्यानीललेश्या-कापोतलेश्यालक्षणासु, भव्ये, इतरस्मिन्नभव्ये, 'अचक्खु त्ति' अचक्षुर्दर्शने, 'नपु त्ति' नपुसकवेदे, 'मिच्छ त्ति' मिथ्यात्वे, सर्वाण्यपि चतुर्दशापि जीवस्थानानि भवन्ति, सर्वजीवस्थानकव्यापकत्वादयतादीनामिति ॥ १६ ॥

**पजसन्नी केवलदुगे संजयमणनाणदेसमणमीसे । पण चरम पज्ज वयणे तिय छ व पज्जियर चक्खुंमि॥१७॥**

टीका–'पजसन्नी त्ति' पर्याप्तसंज्ञिलक्षणमेव जीवस्थानं भवति। क्केत्याह–केवलद्विके केवलज्ञानकेवलदर्शनलक्षणे। संयमेषु सामायिकछेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातरूपपंचप्रकारसंयमवत्सु । 'मणनाण त्ति' मनःपर्यायज्ञाने, 'देस त्ति' देशयते देशविरते श्रावक इत्यर्थः, 'मण त्ति' मनोयोगे, 'मीस त्ति' मिश्रे सम्यग्मिथ्यादृष्टौ । तत्र केवलद्विके, संयमेषु, मनःपर्यायज्ञाने, देशविरते च संज्ञिपर्याप्तलक्षणं जीवस्थानकं विना नान्यज्जीवस्थानकं संभवति, तत्र सर्वविरतिदेशविरत्योरभावात्। मनोयोगेऽप्येतदन्तरेणान्यज्जीवस्थानकं न घटते, तत्र मनःसद्भावायोगात्। मिश्रे पुनः पर्याप्तसंज्ञिव्यतिरेकेण शेषं जीवस्थानकं तथाविधपरिणामाभावादेव न संभवतीति। तथा पंच जीवस्थानानि चरमाण्यन्तिमानि पर्याप्तानि पर्याप्तद्वीन्द्रियपर्याप्तत्रीन्द्रियपर्याप्तचतुरिन्द्रियपर्याप्तासंज्ञिपंचेन्द्रियपर्याप्तसंज्ञिपंचेन्द्रियलक्षणानि 'वयणे त्ति' वचनयोगे वाग्योगे भवन्ति, न शेषाणि, तेषु वाग्योगासंभवात्। 'तिय छ व पज्जियर चक्खुंमि त्ति' चक्षुर्दर्शने त्रीणि जीवस्थानानि पर्याप्तचतुरिन्द्रियपर्याप्तासंज्ञिपंचेन्द्रियपर्याप्तसंज्ञिपंचेन्द्रियरूपाणि, नान्यानि, तेषु चक्षुष एवाभावात्। अत्रैव मतान्तरेण विकल्पमाह–षड् वा जीवस्थानानि चक्षुर्दर्शने भवन्ति। कथमित्याह–'पज्जियर त्ति' पूर्वप्रदर्शितपर्याप्तत्रिकं सेतरमपर्याप्तसहितं षड् भवन्ति। इदमुक्तं भवति–अपर्याप्तपर्याप्तचतुरिन्द्रियासंज्ञिपंचेन्द्रियसंज्ञिपंचेन्द्रियरूपाणि षड् जीवस्थानानि चक्षुर्दर्शने भवन्ति, चतुरिन्द्रियादीनामिन्द्रियपर्याप्त्या पर्याप्तानां शेषपर्याप्त्यपेक्षयाऽपर्याप्तानामपि आचार्यान्तरैश्चक्षुर्दर्शनाभ्युपगमात्। यदुक्तं पंचसंग्रहमूलटीकायाम्–"करणपर्याप्तेषु चतुरिन्द्रियादिषु इन्द्रियपर्याप्तौ सत्यां चक्षुर्दर्शनं भवतीति" ॥ १७ ॥

थीनरपणिंदि चरमा चउ,अणहारे दु सनि छ अपज्जा। ते सुहुमअपज्ज विणा सासणि इत्तो गुणे वुच्छं ।१७।

टीका–स्त्रीवेदे नरवेदे पंचेन्द्रिये च चरमाण्यन्तिमानि पर्याप्तापर्याप्तासञ्ज्ञिसञ्ज्ञिपचेन्द्रियलक्षणानि चत्वारि जीवस्थानानि जवन्ति। यद्यपि च सिद्धान्तेऽसञ्ज्ञी पर्याप्तोऽपर्याप्तो वा सर्वथा नपुसक एवोक्त', तथा चोक्त श्रीजगवत्याम्–"तेणं जते असन्निपचेंदियतिरिक्कजोणिया किं इत्थिवेयगा पुरिसवेयगा नपुसगवेयगा ? गोयमा ! नो इत्थिवेयगा नो पुरिसवेयगा नपुसगवेयग त्ति"। तथापीह स्त्रीपुसलिंगाकारमात्रमगीकृत्य स्त्रीवेदे नरवेदे चासंज्ञी निर्दिष्ट इत्यदोप। उक्त च पचसग्रहमूलटीकायाम्–"यद्यपि चासंज्ञिपर्याप्तापर्याप्तौ नपुसकौ तथापि स्त्रीपुंसलिंगाकारमात्रमंगीकृत्य स्त्रीपुंसावुक्ताविति"। अपर्याप्तकश्चेह करणापर्याप्तको गृह्यते, न लब्ध्यपर्याप्तक, लब्ध्यपर्याप्तकस्य सर्वस्य नपुंसकत्वात्। अनाहारके 'दु सनि छ अपज त्ति' द्विविध संज्ञी पर्याप्तापर्याप्तलक्षणः, षट्पर्याप्ताश्चेत्यष्टौ जीवस्थानानि जवन्ति। अयमर्थ–अपर्याप्तसूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरसञ्ज्ञिसञ्ज्ञिपचेन्द्रियलक्षणानि सप्त जीवस्थानान्यनाहारके विग्रहगतावेकं द्वौ त्रीन् वा समयान् यावदाहारासजवात्सजवन्ति "विग्गहगइमावन्ना केवलिणो समुहया अजोगी य। सिद्धा य अणाहारा,सेसा आहारगा जीवा ॥ १ ॥" इति वचनात्। सञ्ज्ञिपर्याप्तलक्षण जीवस्थानकमनाहारके केवलिसमुद्घातावस्थाया तृतीयचतुर्थपंचमसमयेषु लभ्यते। उक्त च–"कार्मणशरीरयोगी तृतीयके पचमे चतुर्थे च। समयत्रये

१ ते भदन्त असञ्ज्ञिपचेंद्रियतिर्यग्योनिका किं स्त्रीवेदा पुरुषवेदा नपुसकवेदा गौतम ! न स्त्रीवेदा न पुरुषवेदा नपुसकवेदा इति। २ विग्रहगतिप्राप्ता समुद्घता केवलिनोऽयोगिनश्च। सिद्धाश्चानाहारा शेषा आहारका जीवा ॥ १ ॥

च तस्मिन् नवत्यनाहारको नियमात् ॥ १ ॥ " 'ते सुहुमअपज्ज विणा सासणि त्ति' सास्वादने सम्यक्त्वे तान्येव पूर्वो-क्तानि षट् अपर्याप्तपर्याप्तसंज्ञिविकलक्षणान्यष्टौ जीवस्थानानि सूक्ष्मापर्याप्तं विना सप्त नवन्ति । एतडुक्तं नवति–अपर्याप्त-बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपंचेन्द्रियसंज्ञिपंचेन्द्रियपर्याप्तल(चेंद्रियपर्याप्तसंज्ञिपंचेंद्रियल)क्षणानि सप्त जीवस्थानकानि सास्वादने सम्यक्त्वे नवन्तीति। यत्तु सूक्ष्मैकेन्द्रियापर्याप्तलक्षणं जीवस्थानं तत्सास्वादने सम्यक्त्वे न घटामि-यर्ति,सास्वादनसम्यक्त्वस्य मनाक् शुन्नपरिणामरूपत्वात् । महासंक्लिष्टपरिणामस्य च सूक्ष्मैकेन्द्रियमध्ये उत्पादाज्निधानात् । सूत्रे सर्वत्र लिंगव्यत्ययः प्राकृतत्वात्, प्राकृते हि लिंगं व्यन्निचार्यपि । यदाह पाणिनिः स्वप्राकृतलक्षणे "लिंगं व्य-न्निचार्यपीति"। उक्तानि मार्गणास्थानकेषु जीवस्थानकानि । इत ऊर्ध्वमेतेष्वेव मार्गणास्थानकेषु 'गुण त्ति' गुणस्थानकानि वक्ष्ये प्रतिपादयिष्य इति ॥ १८ ॥

अथ यथाप्रतिज्ञातमेव निर्वाहयन्नाह–

**पण तिरि चउ सुरनरए नरसंनिपणिंदिन्नवतसि सव्वे। इग विगलनूदगवणे डु डु एगं गइतसअन्नवे १९॥**

टीका–पंच गुणस्थानकानि मिथ्यादृष्टिसास्वादनमिश्राविरतसम्यग्दृष्टिदेशविरतिलक्षणानि 'तिरि त्ति' तिर्यग्गतौ नवन्ति । चतुःशब्दस्य प्रत्येकं योगात् सुरे सुरगतौ चत्वारि प्रथमगुणस्थानकानि, नरके नरकगतौ चत्वारि प्रथमगुण-स्थानानि नवन्ति, न देशविरतादीनि, तेषु नवस्वनावतो देशतोऽपि विरतेरन्नावादिति । नरे नरगतौ, संज्ञिनि विशि-ष्टमनोविज्ञानन्नाजि, पंचेन्द्रिये, नव्ये, त्रसे त्रसकाये च सर्वाण्यपि चतुर्दशापि गुणस्थानकानि नवन्ति । एतेषु मिथ्या-

दृष्ट्यादीनामयोगिकेवल्यवसानानां सर्वजातानामपि सत्त्वात्। 'इग त्ति' एकेन्द्रियेषु सामान्यत, 'विगल त्ति' विकलेन्द्रियेषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु, भुवि पृथ्वीकाये, उदकेऽप्काये, वने वनस्पतिकाये 'दु दु त्ति' द्वे द्वे आद्ये मिथ्यात्वसासादनलक्षणे भवत। तत्र मिथ्यात्वमविशेषेण सर्वेषु द्रष्टव्य, सासादन तु तेजोवायुवर्जबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियपृथिव्यबुवनस्पतिषु लब्ध्या पर्याप्तकेषु करणेन त्वपर्याप्तकेषु, न सर्वेष्विति। तथैक मिथ्यात्वलक्षण गुणस्थानक भवति, केष्वित्याह–गत्या गमनेन त्रसा', न तु नामकर्मोदयात् ( गमनेन न तु त्रसनामकर्मोदयात्), गतित्रसास्तेषु, सासादनभावोपगतस्य तेषु मध्य उत्पादाभावात्। अभव्येषु च इति ॥ १९ ॥

वेय तिकसाय नव दस लोभे चउ अजय दु ति अनाणतिगे।
बारस अचक्खुचक्खुसु पढमा अहखाइ चरम चउ ॥ २० ॥

टीका–वेदे वेदत्रये, त्रयाणां कषायाणां समाहारस्त्रिकषाय क्रोधमानमायालक्षण तस्मिंस्त्रिकषाये 'पढमि त्ति' प्रथमानीति पद क्रमरूकमणिन्यायेन सर्वत्र योज्यम्। ततो वेदे स्त्रीपुनपुंसकलक्षणे कषायत्रये च प्रथमानि मिथ्यादृष्ट्यादीनि अनिवृत्तिबादरपर्यन्तानि नव गुणस्थानकानि भवन्ति, न शेषाणि, अनिवृत्तिबादरगुणस्थान एव वेदत्रिकस्य कषायत्रिकस्य (च) उपशान्तत्वेन क्षीणत्वेन वा शेषेषु गुणस्थानेषु तदसंभवात्। लोभे लोभकषाये दश गुणस्थानानि, तत्र नव पूर्वोक्तानि दशम तु सूक्ष्मसंपरायलक्षणम्, तत्र किट्टीकृतसूक्ष्मलोभकषायदलिकस्य वेद्यमानत्वात्। चत्वारि प्रथमानि अयते विर-

तिहीन इत्यर्थः, कोऽर्थः ? विरतिहीने मिथ्यात्वसास्वादनमिश्राविरतसम्यग्दृष्टिलक्षणानि चत्वारि गुणस्थानानि भवन्तीति । 'दु ति अन्नाणतिगे त्ति' अज्ञानत्रिके मत्यज्ञानश्रुताज्ञानविभंगज्ञानलक्षणे प्रथमे द्वे गुणस्थानके मिथ्यादृष्टिसास्वादनरूपे भवतः, न मिश्रमपि । यतो यद्यपि मिश्रगुणस्थानके यथास्थितवस्तुतत्त्वनिर्णयो नास्ति तथापि न तान्यज्ञानान्येव सम्यग्ज्ञानलेशव्यामिश्रत्वात्, अत एव न मिश्रगुणस्थानकमभिधीयते । उक्तं च-"मिथ्यात्वाधिकस्य मिश्रदृष्टेरज्ञानबाहुल्यं सम्यक्त्वाधिकस्य पुनः सम्यग्ज्ञानबाहुल्यमिति" ज्ञानलेशसद्भावतो न मिश्रगुणस्थानकमज्ञानत्रिके लभ्यते इत्येके प्रतिपादयन्ति, तन्मतमधिकृत्यास्माभिरपि 'द्वे' इत्युक्तम् । अन्ये पुनराहुः-"अज्ञानत्रिके त्रीणि गुणस्थानानि, तद्यथा, मिथ्यात्वं सास्वादनं सम्यग्मिथ्यादृष्टिश्च । यद्यपि "मिस्संमि वामिस्सा" इति वचनाज्ज्ञानव्यामिश्राण्यज्ञानानि प्राप्यन्ते, न शुद्धाज्ञानानि तथापि तान्यज्ञानान्येव, शुद्धसम्यक्त्वमूलत्वेनात्र ज्ञानस्य प्रसिद्धत्वात्, अन्यथा हि यद्यशुद्धसम्यक्त्वस्यापि ज्ञानमभ्युपगम्यते तदा सास्वादनस्यापि ज्ञानाभ्युपगमः स्यात्, न चैतदस्ति, तस्याज्ञानित्वेनानन्तरमेवेह प्रतिपादितत्वात्, तस्मादज्ञानत्रिके प्रथमं गुणस्थानकत्रयमवाप्यत इति" । तन्मतमाश्रित्यास्माभिरपि 'त्रिकं' इत्युक्तं, तत्त्वं तु केवलिनो विशिष्टश्रुतविदो वा विदन्तीति । द्वादश प्रथमानि गुणस्थानकानि अचक्षुर्दर्शने चक्षुर्दर्शने च भवन्ति, यतो मिथ्यादृष्टिप्रभृतिक्षीणमोहपर्यन्तेषु गुणस्थानकेष्वचक्षुर्दर्शनचक्षुर्दर्शनसंभवात् । यथाख्याते चारित्रे चरमाण्यन्तिमान्युपशान्तमोहक्षीणमोहसयोगिकेवल्ययोगिकेवलिलक्षणानि चत्वारि गुणस्थानानि भवन्ति, एषु कषायाभावादिति ॥ २० ॥

---

१ मिश्रे व्यामिश्राणि ।

मणनाणि सग जयाई सामइयछेय चउ दुन्नि परिहारे ।
केवलदुगि दो चरमाजयाइ नव मइ सु ओहिदुगे ॥ २१ ॥

टीका–मनोज्ञाने मनःपर्यवज्ञाने 'सग त्ति' सप्त गुणस्थानकानि भवन्ति । कानीत्याह–यतादीनि, तत्र "यमू उपरमे" यमनं यतः सम्यक् सावद्याद्उपरमणमित्यर्थः, यतः विद्यते यस्य स यतः प्रमत्तयतिः, यतः आदौ येषां तानि यतादीनि प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहलक्षणानीति । सामायिके छेदोपस्थापने च चत्वारि यतादीनि गुणस्थानानि प्रमत्ताप्रमत्तनिवृत्तिबादरानिवृत्तिबादराणीत्यर्थः । द्वे गुणस्थानके प्रमत्ताप्रमत्तरूपे परिहारविशुद्धिकचारित्र इत्यर्थः, नोत्तराणि तस्मिश्चारित्रे वर्तमानस्य श्रेण्यारोहणप्रतिषेधात् । केवलद्विके केवलज्ञानकेवलदर्शनरूपे द्वे गुणस्थाने भवतः, के इत्याह–चरमेऽन्तिमे सयोगिकेवलिगुणस्थानकायोगिकेवलिगुणस्थानके इति । 'अजयाइ नव मइसुओहिदुगे त्ति' अयतोऽविरतः स आदौ येषां तान्ययतादीन्यविरतसम्यग्दृष्ट्यादीनि क्षीणमोहपर्यवसानानि नव गुणस्थानानि भवन्ति । मतौ मतिज्ञाने, श्रुते श्रुतज्ञाने, अवधिद्विकेऽवधिज्ञानावधिदर्शनलक्षणे, न शेषाणि । तथा हि–न मतिज्ञानश्रुतज्ञानावधिज्ञानानि मिथ्यादृष्टिसासादनमिश्रेषु भवन्ति, तद्भावे ज्ञानत्वस्यैवायोगात्, यत्तु अवधिदर्शनं तत्कुतश्चिदभिप्रायाद्विशिष्ट श्रुतविदो मिथ्यादृष्ट्यादीनां नेच्छन्ति, तन्मतमाश्रित्यास्माभिरपि तत्तेषां न भणितम् । अथ च सूत्रे मिथ्यादृष्ट्यादीनामप्यवधिदर्शनं प्रतिपाद्यते, यदाह भवनवशविनम्रसुरासुरनरकिन्नरविद्याधरपरिहृढमाणिक्यमुकुटकोटीविटकनिघृष्टचरणार

विन्दयुगलः श्रीसुधर्मस्वामी पंचमांगे—"ओहिदंसणअणागारोवउत्ताणं जंते किं नाणी अन्नाणी ? गोयमा नाणी वि अन्नाणी वि, जइ नाणी ते अत्थेगइया तिनाणी अत्थेगइया चउनाणी, जे तिनाणी ते आन्निणिबोहियनाणी सुअनाणी ओहिनाणी, जे चउनाणी ते आन्निणिबोहियनाणी सुयनाणी ओहिनाणी मणपज्जवनाणी, जे अन्नाणि ते नियमा मइअन्नाणी सुयअन्नाणी विन्नंगनाणी इति" । अत्र हि येऽज्ञानिनस्ते मिथ्यादृष्टय एवेति मिथ्यादृष्ट्यादीनामप्यवधिदर्शनं साक्षादत्र सूत्रे प्रतिपादितं । स एव विन्नंगज्ञानी यदा सासादनन्नावे मिश्रन्नावे वा वर्तते तत्रापि तदानीमवधिदर्शनं प्राप्यत इति । यत्पुनः सयोग्ययोगिकेवलिगुणस्थानकद्विकं तत्र मतिज्ञानादि न संन्नवत्येव, तत्क्षयच्छेदेनैव केवलज्ञानस्य प्रादुर्जावात् "नठंमि उ गउमत्थिए नाणे" इति वचनप्रामाण्यादिति ॥ २१ ॥

अड उवसमि, चउ वेयगि, खइगे इक्कार, मिछ तिगि, देसे ।
सुहुमे य स(ग)ठाणं, तेरस जोगे, आहार, सुक्काए, ॥ २२ ॥

टीका—काकाक्षिगोलकन्यायादिहायतादीनि ( इति ) पदं सर्वत्र योज्यते, ततोऽयतादीन्युपशान्तमोहान्तान्यष्टौ गुण-

---

१ अवधिदर्शनानाकारोपयुक्ता भदन्त किज्ञानिनोऽज्ञानिनः । गौतम ज्ञानिनोप्यज्ञानिनोपि । यदि ते ज्ञानिनः अस्त्येके त्रिज्ञानिनोऽस्त्येकका‌श्चतुर्ज्ञानिनः । ये त्रिज्ञानिनस्ते नियमेन मतिज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनः । ये चतुर्ज्ञानिनस्ते आभिनिबोधिकज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यायज्ञानिनश्च । ये चाज्ञानिनस्ते नियमान्मत्यज्ञानिनः श्रुताज्ञानिनो विभंगज्ञानिनश्च ॥ २ ॥ नष्टे छाद्मस्थिके ज्ञाने ।

स्थानान्यौपशमिकसम्यक्त्वे भवन्ति । अयतादीन्यप्रमत्तान्तानि चत्वारि वेदके क्षायोपशमिकापरपर्याये गुणस्थानकानि भवन्ति । क्षायिकसम्यक्त्वेऽयतादीन्ययोगिकेवलिपर्यवसानान्येकादश गुणस्थानकानि भवन्ति । तथा मिथ्यात्वत्रिके मिथ्यादृष्टिसासादनमिश्रलक्षणे, देशे देशविरते, सूक्ष्मे सूक्ष्मसपराये, च समुच्चये स्वस्थान निजस्थानम् । इदमुक्त भवति– मिथ्यात्वमार्गणास्थाने मिथ्यादृष्टिगुणस्थानं, सासादनमार्गणास्थाने सासादन गुणस्थानं, मिश्रमार्गणास्थाने मिश्र गुणस्थान, देशसयममार्गणास्थाने देशविरतगुणस्थान, सूक्ष्मसपरायसंयममार्गणास्थाने सूक्ष्मसंपरायगुणस्थानम् । तथा योगे मनोवाकायलक्षणेऽयोगिकेवलिवर्जितानि शेषाणि त्रयोदश गुणस्थानानि भवन्ति, सर्वेष्वप्येतेषु यथायोग योगत्रयस्यापि सम्भवात् । तथाहारकेषु आद्यानि त्रयोदश गुणस्थानानि भवन्ति, सर्वेष्वप्येतेषु ओजोलोमप्रक्षेपाहाराणामन्यतमस्याहारस्य यथायोगं संभवात् । तथा 'सुक्काए त्ति' शुक्ललेश्यायां प्रथमानि त्रयोदश गुणस्थानानि भवन्ति, न त्वयोगिकेवलिगुणस्थान, तस्य लेश्यातीतत्वादिति ॥ २२ ॥

**अस्सन्निसु पढमदुगं पढमतिलेसासु छच्च दुसु सत्त । पढमंतिमदुगअजया अणहारे मग्गणासु गुणा २३**

टीका–असज्ञिषु सज्ञिव्यतिरिक्तेषु प्रथम मिथ्यादृष्टिसासादनलक्षण गुणस्थानकद्वय भवति, तत्र मिथ्यात्वमविशेषेण सर्वत्र द्रष्टव्य, सासादन तु लब्धिपर्याप्तकाना करणापर्याप्तावस्थायामिति । प्रथमासु तिसृषु लेश्यासु मिथ्यात्वादीनि प्रमत्तान्तानि षड् गुणस्थानानि भवन्ति । 'च' समुच्चये । कृष्णनीलकापोतलेश्याना हि प्रत्येकमसख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि, ततो मन्दसंक्लेशेषु तदध्यवसायस्थानेषु तथाविधसम्यक्त्वदेशविरतिसर्वविरतीनामपि सद्भावो

न विरुध्यते । उक्तं च–"सम्यक्त्वदेशविरतिसर्वविरतीनां प्रतिपत्तिकाले शुभलेश्यात्रयमेव भवति, उत्तरकालं तु सर्वा अपि लेश्याः परावर्तन्तेऽपीति"। श्रीमदाराध्यपादा अप्याहुः–"सम्मत्तसुयं सव्वासु लहइ सुद्धासु तीसु य चारित्तं । पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए ॥ १ ॥" श्रीभगवत्यामप्युक्तम्–"सामाइयसंजए णं भंते कइलेसासु हुज्जा? गोयमा! छसु लेसासु होज्जा एवं छेओवट्ठावणियसंजए वीत्यादि"। तथा द्वयोस्तेजोलेश्यापद्मलेश्ययोः सप्त गुणस्थानानि भवन्ति, तत्र षट् पूर्वोक्तान्येव सप्तमं त्वप्रमत्तगुणस्थानकं, अप्रमत्तसंयताध्यवसायस्थानापेक्षया मिथ्यादृष्ट्यादीनां प्रमत्तान्तानां तेजोलेश्यापद्मलेश्ये तारतम्येन जघन्यात्यंताविशुद्धिके द्रष्टव्ये। तथाऽनाहारके पंच गुणस्थानानि भवन्ति । कानीत्याह–प्रथमान्तिमद्विकायतानीति । द्विकशब्दस्य प्रत्येकं योगात् प्रथमद्विकं मिथ्यादृष्टिसासादनलक्षणं, अन्तिमद्विकं सयोगिकेवल्ययोगिकेवलिलक्षणं, 'अयत' इति अविरतसम्यग्दृष्टिश्चेति । तत्र मिथ्यात्वसासादनाविरतसम्यग्दृष्टिलक्षणं गुणस्थानकत्रयमनाहारके विग्रहगतौ प्राप्यते, सयोगिकेवलिगुणस्थानकं त्वनाहारके समुद्घातावस्थायां तृतीयचतुर्थपंचमसमयेषु द्रष्टव्यम् । यदवादि–"चतुर्थतृतीयपंचमेष्वनाहारक इति"। अयोगिकेवल्यवस्थायां तु योगरहितत्वेनौदारिकादिशरीरपोषकपुद्गलग्रहणाभावादनाहारकत्वं "औदारिकवैक्रियाहारकशरीरपोषकपुद्गलोपादानमाहारः" इति प्रवचनोपनिषद्वेदिनः । एवं मार्गणास्थानेषु गत्यादिषु 'गुण त्ति' गुणस्थानकान्यभिहितानि ॥ २३ ॥

---

१ सम्यक्त्वश्रुते सर्वासु लभते शुद्धासु तिसृषु च चारित्रं । पूर्वप्रतिपन्नः पुनरन्यतरस्यां लेश्यायां ॥ १ ॥ २ सामायिकसंयतो भदन्त कतिषु लेश्यासु भवेत्? गौतम षट्स्वपि लेश्यासु । एवं छेदोपस्थापनीयसंयतोऽपि ॥

अधुना मार्गणास्थानेष्वेव योगानभिधित्सुः प्रथम तावद्योगानेव स्वरूपत आह—

सच्चेयर मीस असच्चमोस मण,वइ विउव्वियाहारा। उरलं मीसा कम्मण इय जोगा,कम्ममणहारे ॥२४॥

टीका—इह योगशब्देन कारणे कार्योपचारात्तत्तत्सहकारिभूत मनःप्रभृत्येव विवक्षितमिति तैः सह योगस्य सामानाधिकरण्यम् । तत्र मनोयोगश्चतुर्धा, तद्यथा—सत्यमनोयोगोऽसत्यमनोयोग सत्यासत्यमनोयोगोऽसत्यामृषमनोयोग । तत्र सन्तो मुनय पदार्था वा तेषु यथासङ्ख्यं मुक्तिप्रापकत्वेन यथावस्थित तत्त्वचिन्तनेन च हित सत्य , यथाऽस्ति जीव. सदसद्रूप' कायप्रमाण इत्यादिरूपतया यथावस्थितवस्तुविकल्पनपर इत्यर्थ , सत्यश्चासौ मनोयोगश्च सत्यमनोयोगः । तथा सत्यविपरीतोऽसत्य , यथा नास्ति जीव एकान्तसद्रूतो विश्वव्यापीत्यादिकुविकल्पचिन्तनपर', असत्यश्चासौ मनोयोग श्चासत्यमनोयोगः । तथा मिश्र सत्यासत्यमनोयोग., यथेह धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेषु अशोकवनमेवेदमिति यदा विकल्पयति तदा तत्राशोकवृक्षाणां सद्भावात्सत्योऽन्येषामपि धवखदिरपलाशादीना तत्र सद्भावादसत्य इति सत्यासत्यमनोयोग इति, व्यवहारनयमतापेक्षया चैवमुच्यते, परमार्थतः पुनरयमसत्य एव यथाविकल्पितार्थायोगात् । न विद्यते सत्य यत्र सोऽसत्यः, न विद्यते मृषा यत्र सोऽमृष , असत्यश्चासावमृषश्च "क्त नञादिभिन्नै" ( ३-१-१०५ ) इति कर्मधारयः, असत्यामृषश्चासौ मनोयोगश्च असत्यामृषमनोयोगः, इह विप्रतिपत्तौ सत्या वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण किंचिद्विकल्पते यथास्ति जीव सदसद्रूप इत्यादि, तत्किल सत्य परिज्ञापितमाराधकत्वात्, यत्तु विप्रतिपत्तौ सत्या वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं किंचिद्विकल्पते यथा नास्ति जीव एकान्तनित्यो वेत्यादि तदसत्यमिति परिज्ञा-

षितं विराधकत्वात्, यत्पुनर्वस्तुप्रतिष्ठाशामन्तरेण स्वरूपमात्रप्रतिपादनपरं व्यवहारपतितं किंचिद्विकल्पते यथा हे देवदत्त। घटमानय गां देहि मह्यमित्यादि, तदेतत्स्वरूपमात्रप्रतिपादनं व्यावहारिकं विकल्पज्ञानं, न यथोक्तलक्षणं सत्यं नापि मृषेत्यसत्यामृषमनोयोग इति व्याख्यातश्चतुर्धा मनोयोगः। 'वइ त्ति' वाग्योगोऽपि चतुर्धा द्रष्टव्यः, तथाहि– सत्यवाग्योगोऽसत्यवाग्योगः सत्यासत्यवाग्योगोऽसत्यामृषवाग्योगः। तत्र सतां हिता सत्या, सत्या चासौ वाक् च सत्यवाक्, तया सहकारिकारणभूतया योगो (सत्य)वाग्योगः, अथवा वचनगतं सत्यत्वं तत्कार्यत्वाद्योगेऽप्युपचर्यते, ततश्च सत्यश्चासौ वाग्योगश्च सत्यवाग्योगः, भावार्थः सत्यमनोयोगवद्वाच्यः। असत्या सत्याद्विपरीता सा चासौ वाक् चासत्यवाक् तया योगोऽसत्यवाग्योगः। तथा सत्या चासावसत्या चेत्यादि पूर्ववत्कर्मधारयो बहुव्रीहिर्वा, सा चासौ वाक् च सत्यासत्यवाक् तत्प्रत्ययो योगः सत्यासत्यवाग्योगः। न विद्यते सत्यं यत्र सोऽसत्यः, न विद्यते मृषा यत्र सोऽमृषः, असत्यश्चासावमृषश्चासत्यामृषः, स चासौ वाग्योगश्चासत्यामृषवाग्योगः, शेषं मनोयोगवत्सर्वं वाच्यम्। अत्र तृतीयचतुर्थौ मनोयोगौ वाग्योगौ च परिस्थूरव्यवहारनयमतेन द्रष्टव्यौ, निश्चयनयमतेन तु मनो ज्ञानं वचनं वा सर्वमदुष्टविवक्षापूर्वकं सत्यं, अज्ञानादिदूषिताशयपूर्वकं त्वसत्यं, उभयानुभयरूपं तु नास्त्येव, सत्यासत्यराशिद्वयेऽन्तर्भावादिति भावनीयम्। तथा काययोगः सप्तधा– वैक्रियकाययोग आहारककाययोगः 'उरल त्ति' औदारिककाययोगः 'मीस त्ति' मिश्रशब्दस्य पूर्वदर्शितशरीरत्रिकेण सह संबन्धाद्वैक्रियमिश्रकाययोग आहारकमिश्रकाययोग औदारिकमिश्रकाययोगः 'कम्मण त्ति' कार्मणकाययोग इत्यक्षरार्थः। भावार्थस्त्वयम्–विविधा विशिष्टा वा क्रिया विक्रिया, तस्यां भवं वैक्रियं, तथा हि–तदेकं भूत्वाऽनेकं

भवति, अनेक भूत्वैक, अणु भूत्वा महद्भवति, महद्भूत्वाऽणु, तथा खचर भूत्वा भूमिचर भवति, भूमिचर भूत्वा खचर, अदृश्यं भूत्वा दृश्य भवति, दृश्य भूत्वाऽदृश्यमित्यादि। यद्वा विशिष्ट कुर्वन्ति तदिह वैकुर्विक। "पृषोदरादित्वादभी-ष्टरूपसिद्धि" तच्च द्विधा–औपपातिक लब्धिप्रत्ययं च। तत्रौपपातिकमुपपातजन्मनिमित्त तच्च देवनारकाणा, लब्धिप्र-त्यय तिर्यङ्मनुष्याणाम्। उक्तं च श्रीमदनुयोगद्वारलघुवृत्तौ–"विविहा विसिट्ठगा वा किरिया तीए ज भव तमिह। नियमा विउव्विय पुण नारगदेवाण पयईए ॥ १ ॥" तदेव काययोगस्तन्मयो वा योगो वैक्रिययोगो वैकुर्विककाययोगो वा। वैक्रियं मिश्र यत्र कार्मणेनौदारिकेण वा स वैक्रियमिश्र, तत्र कार्मणेन मिश्र देवनारकाणामपर्याप्तावस्थाया प्रथमस-मयादनन्तर, बादरपर्याप्तकवायो पंचेन्द्रियतिर्यङ्मनुष्याणा च वैक्रियलब्धिमता वैक्रियारम्भकाले वैक्रियपरित्यागकाले वौदारिकेण मिश्रम्। ततो वैक्रियमिश्रश्चासौ कायश्च वैक्रियमिश्रकायस्तेन योगो वैक्रियमिश्रकाययोग। चतुर्दशपूर्वविदा तथाविधकार्योत्पत्तौ विशिष्टलब्धिवशादाह्रियते निर्वर्त्यत इत्याहारक, अथवाह्रियते गृह्यन्ते तीर्थकरादिसमीपे सूक्ष्मा जीवादय पदार्था अनेनेत्याहारकम्। "कृद्बहुल" ( बहुलम् ५-१-२ )इति कर्मणि करणे वा णकः। यदवादि–"कज्जमि समुप्पन्ने सुयकेवलिणा विसिट्ठलद्धीए। ज एत्थ आहरिज्जइ भणति आहारग त तु ॥ १ ॥ पाणिदयरिद्धिसदरिसणत्थम

१ विविधा विशिष्टा वा क्रिया तस्यां यद्भव तदिह। नियमाद्वैकुर्विक ( वेक्रिय ) नारकदेवाना पुन ( तत् ) प्रकृत्या ॥ १ ॥ कार्ये समुत्पन्ने श्रुतकेवलिना विशिष्टलब्ध्या। यदिहाह्रियते तदाहारक भणति तु ॥ १ ॥ प्राणिदयर्द्धिसदर्शनार्थमर्थोपग्रहणहेतुर्वा। सशयव्युच्छे-दार्थं वा गमन जिनपादमूले ॥ २ ॥

ओवग्गहणहेउं वा । संसयवुच्छेयत्थं गमणं जिणपायमूलंमि ॥ २ ॥" तदेव कायस्तेन योग आहारककाययोगः । आहारकं मिश्रं यत्रौदारिकेणेति गम्यते स आहारकमिश्रः, सिद्धप्रयोजनस्य चतुर्दशपूर्वविद आहारकं परित्यजत औदारिकमुपाददानस्याहारकं प्रारभमाणस्य वा प्राप्यते, स एव कायस्तेन योग आहारकमिश्रकाययोगः । तथौदारिककाययोगः, इह प्रसिद्धसिद्धान्तसंदोहविवरणप्रकरणप्रमाणग्रथनावासमुधांशुधामधवलयशःप्रसरधवलितसकलवसुंधरावलयप्रभुश्रीहरिभद्रसूरिदर्शिता व्युत्पत्तिर्लिख्यते—"[1]तत्थ ताव उदारं उरालं उरलं ओरालं वा तित्थगरगणधरसरीराइं पडुच्च उदारं वुच्चइ, न तओ उदारतरमन्नमत्थि त्ति काउं" उदारं नाम प्रधानं उरालं नाम वित्थरालं विशालमिति वा जं भणियं होइ कहं? साइरेगजोयणसहस्समवट्ठियहप्पमाणमोरालियं अन्नमिद्दहमित्तं नत्थि वेउव्वियं हुज्ज लक्खमहियं अवट्ठियं पंचधणुसयाइं अहेसत्तमाए, इत्थं पुणो अवट्ठियपमाणं अइरेगं जोयणसहस्सं" वनस्पत्यादीनामिति उरलं नाम स्वल्पप्रदेशोपचितत्वाद्भिंडवत् । ओरालं नाम मांसास्थिस्नाय्वाद्यवयवबद्धत्वात् । श्रीपूज्या अप्याहुः—"[3]तत्थोदारमुरालं ओरालमहव महल्लगत्तेण ।

१ तत्र तावत्प्रधानं विशालं स्वल्पप्रदेशोपचितं मांसाद्युपचितं वा तीर्थंकरगणधरशरीरादिप्रतीत्यौदारिकमुच्यते न तत उदारमन्यदस्तीति कृत्वा ॥ २ यद्भणितं भवति । कथं ! सातिरेकयोजनसहस्रमवस्थितमानेनौदारिकमन्यदेतावन्मात्रं नास्ति । वैक्रियं भवेत् लक्षाधिकं । अवस्थितं पंच धनुःशतानि सप्तम्यामधः । इह पुनः अवस्थितमानं सातिरेकं योजनसहस्रम् ॥३ तत्रोदारमुरालं अथवा महत्तयोरालं तीर्थेश्वरशरीरं प्रतीत्यौदारिकं प्रथममिति ॥ १ ॥ तथा वनस्पतिं प्राप्य विस्तारवदुरालं भण्यते । एतावन्मात्रं विशालमन्यत्प्रकृत्या नास्ति ॥२॥ स्तोकप्रदेशोपचितमपि महद्यथा भिंडं । मांसास्थिस्नायुबद्धमुरालमिति समयपरिभाषा ॥ ३ ॥

उरालियति पढम पजुत्त तित्थेसरसरीर ॥१॥ जमइय तदोराल वित्थरवत वणस्सइ पप्प। पयईइ नत्थि अन्न इद्दहमित्त विसालं ति ॥ २ ॥ उरल थेवपएसो व चियंपि महल्लग जहा भिंड । मसट्ठिण्हारुबद्ध उंराल समयपरिभासा ॥ ३ ॥" सर्वत्र स्वार्थिक इकप्रत्यय । उदारमेव, उरालमेव, उरलमेव, उंरालमेव औदारिक "पृषोदरादित्वादिष्टरूपनिष्पत्ति" औदारिकमेव चीयमानत्वात्कायस्तेन सहकारिकारणभूतेन तद्विषयो वा योग औदारिककाययोग । तथौदारिक मिश्र यत्र कार्मणेनेति गम्यते स औदारिकमिश्र., उत्पत्तिदेशे हि पूर्वभवादनन्तरमागतो जीव प्रथमसमये कार्मणेनैव केवलेनाहारयति, तत परमौदारिकस्याप्यारब्धत्वादौदारिकेण कार्मणमिश्रेण यावच्छरीरनिष्पत्ति । यदाह सकलश्रुताम्भोनिधिपारदृश्वाऽनुग्रहकाम्यया निर्मितानेकशास्त्रसन्दर्भ श्रीभद्रबाहुस्वामी–"जोएण कम्मएणं आहारेइ अणतर जीवो । तेण पर मीसेण जाव सरीरस्स निप्फत्ती ॥ १ ॥" केवलिसमुद्घातावस्थाया तु द्वितीयषष्ठसप्तमसमयेषु कार्मणेन मिश्रमौदारिक प्रतीतमेव "मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु" इति वचनात्, औदारिकमिश्रश्चासौ कायश्च तेन योग औदारिकमिश्रकाययोग । तथा कर्मणो विकार कार्मण "विकारेऽण् प्रत्यय" (६-२-३०) यद्वा कर्मैव कार्मण "प्रज्ञादिभ्योऽण् प्रत्यय" (७-२-३३) कर्मपरमाणव एवात्मप्रदेशै सह क्षीरनीरवदन्योन्यानुगता सन्त. कार्मण शरीरम् । उक्त च–"कम्मविगारो कम्मणमट्ठविहविचित्तकम्मनिप्पन्न । सव्वेसि सरीराण कारणभूय मुणेयव्व ॥ १ ॥" अत्र सव्वेसिमिति सर्वेषा-

१ अनतर जीव कार्मणेन योगेनाहारयति । तत पर मिश्रेण यावच्छरीरस्य निष्पत्ति ॥ २ कर्मविकार कार्मणमष्टविधविचित्रकर्मनिष्पन्नम् । सर्वेषा शरीराणा कारणभूत ज्ञातव्य ॥

औदारिकादीनां शरीराणां कारणभूतं कार्मणशरीरं न खल्वामूलमुच्छिन्ने भवप्रपंचप्ररोहबीजभूते कार्मणे वपुषि शेषशरीरप्रादुर्भावसंभवः । इदं च कार्मणशरीरं जन्तोर्गत्यन्तरसंक्रान्तौ साधकतमं करणम् । तथा हि–कार्मणेनैव वपुषा परिकरितो जन्तुर्मरणदेशमपहायोत्पत्तिदेशमुपसर्पति । ननु यदि कार्मणवपुःपरिकरितो गत्यन्तरं संक्रामति तर्हि गच्छन् कस्मान्नोपलक्ष्यते? (उच्यते) कर्मपुद्गलानामतिसूक्ष्मतया चक्षुरादीन्द्रियागोचरत्वात् । आह च प्रज्ञाकरगुप्तोऽपि–“ अन्तरा भवदेहोऽपि सूक्ष्मत्वान्नोपलक्ष्यते । निष्क्रामन् प्रविशन् वापि नाभावोऽनीक्षणादपि ॥ १ ॥ ” कार्मणमेव कायस्तेन योगः कार्मणकाययोगः । ‘इय जोग त्ति’ ‘इतिः’ परिसमाप्तौ । ततोऽयमर्थः–एत एव योगा नान्य इति । ननु तैजसमपि शरीरं विद्यते, यद्भुक्ताहारपरिणमनहेतुर्यद्वशाद्विशिष्टतपोविशेषसमुद्भलब्धिविशेषस्य पुरुषस्य तेजोलेश्याविनिर्गमः, तत्कथमुच्यत “एत एव योगा नान्य इति?” नैष दोषः सदा कार्मणेन सहाव्यभिचारितया तैजसस्य तद्ग्रहणेनैव गृहीतत्वादिति । निरूपिताः स्वरूपतो योगाः, सांप्रतमेतानेव मार्गणास्थानेषु निरूपयन्नाह–‘कम्ममणाहारि त्ति’ व्यवच्छेदफलं हि वाक्यमतोऽवश्यमवधारयितव्यं। तच्चावधारणमिहैवं–कार्मणमेवैकमनाहारके न शेषयोगा असंभवादिति। न पुनरेवं कार्मणमनाहारकेष्वेवेति, आहारकेष्वपि उत्पत्तिप्रथमसमये कार्मणयोगसंभवात् “ जोएणं कम्मएणं आहारेइ अणंतरं जीवो ”इति परममुनिवचनप्रामाण्यात् । नापि कार्मणमनाहारकेषु भवत्येवेत्यवधारणमाधेयं, अयोगिकेवल्यवस्थायामनाहारकस्यापि कार्मणकाययोगाभावात् “गययोगो उ अजोगी” इति वचनात् । एवमन्यत्रापि यथासंभवमवधारणविधिरनुसरणीय इति २४

१ अनंतरं जीवः कार्मणेन योगेनाहारयति ॥ २ गतयोगश्चायोगी ।

नरगइ पणिंदि तस तणु अचक्खु नर नपु कसाय संमदुगे। सनि छलेसाहारग भव मइसुअोहि दुगे सव्वे ॥२५॥

टीका-नरगतौ मनुष्यगतौ, पंचेन्द्रिये, त्रसे त्रसकाये, तनुयोगे, अचक्षुर्दर्शने, नरे नरवेदे पुवेद इत्यर्थः, 'नपु त्ति' नपुंसकवेदे, कषायेषु क्रोधमानमायालोभेषु, सम्यक्त्वद्विके क्षायोपशमिकक्षायिकलक्षणे, सञ्ज्ञिनि मनोविज्ञानभाजि, षट्स्वपि लेश्यासु, आहारके, भव्ये, मतौ मतिज्ञाने, श्रुते श्रुतज्ञाने, अवधिद्विकेऽवधिज्ञानावधिदर्शनरूपे, सर्वे पञ्चदशापि योगा भवन्ति। एतेषु सर्वेष्वपि मार्गणास्थानेषु यथासम्भव सर्वयोगप्राप्ते । यत्तु क्वापि "जोगा[1] अकम्मगाहारगेसु" इति पद दृश्यते, तन्न सम्यगवगम्यते। यत ऋजुगतौ विग्रहगतौ चोत्पत्तिप्रथमसमये "जोएणं कम्मएणं आहारेई अणतर जीवो। तेण परं मीसेणं जाव सरीरस्स निप्फत्ती ॥ १ ॥" इति सकलश्रुतधरप्रवरपरममुनिवचनप्रामाण्यादाहारकस्यापि सत. कार्मणकाययोगोऽस्त्येव। अथोच्येत गृह्यमाण गृहीतमिति निश्चयनयवशात्प्रथमसमयेऽप्यौदारिकपुद्गला गृह्यमाणा गृहीता एव ततो द्वितीयादिसमयेष्विव तदानीमप्यौदारिकमिश्रकाययोग इति, तदेतदयुक्तं, सम्यग्वस्तुतत्त्वापरिज्ञानात् । यतो यद्यपि तदानीमौदारिकादिपुद्गला गृह्यमाणा गृहीता एव तथापि न तेषा गृह्यमाणाना स्वग्रहणक्रिया प्रति करणरूपता, येन तन्निबन्धनो योग परिकल्प्यते, किं तु कर्मरूपतैव, निष्पन्नरूपस्य सत उत्तरकाल करणभावदर्शनात्[2]। न हि घट स्वनिष्पादनक्रिया प्रति कर्मरूपता करणरूपता च प्रतिपद्यमानो दृश्यते। द्वितीयादिसमयेषु पुनस्तेषामपि प्रथमसमयगृहीतानामन्यपुद्गलोपादान प्रति करणभावो न विरुध्यते निष्पन्नत्वात्, अतस्तदानीमौदारिकमिश्रकाययोग उपपद्यत एव।

---

१ योगा अकार्मणा आहारकेषु ॥ २ प्राग्वत् ।

अत एवोक्तं "तेण परं मीसेणं" इति । तस्मादाहारकस्याप्युत्पत्तिप्रथमसमये कार्मणकाययोग इति । अतः "जोगा अकस्मागाहारगेसु" इति पदं चिन्त्यमस्तीति ॥ २५ ॥

**तिरि इत्थि अजय सासण अनाण उवसम अभव्व मिच्छेसु । तेराहारदुगूणा ते उरलदुगूण सुरनरए ॥२६॥**

टीका–'तिरि त्ति' तिर्यग्गतौ, स्त्रियां स्त्रीवेदे, अयते विरतिहीने, सास्वादनसम्यक्त्वे, 'अनाण त्ति' अज्ञानत्रिके मत्यज्ञानश्रुताज्ञानविभंगलक्षणे, उपशमे औपशमिकसम्यक्त्वे, अभव्येषु सिद्धिगमनानुचितेषु, मिथ्यात्वे मिथ्यादृष्टिषु, त्रयोदशयोगा भवन्ति । क इत्याह–आहारकद्विकेनाहारकाहारकमिश्रलक्षणेनोना हीना आहारकद्विकोनाः । अयमत्राशयः–मनोयोगचतुष्टयवाग्योगचतुष्टयौदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्रकार्मणलक्षणा योगा भवन्ति। तत्र कार्मणमपान्तरालगतौ उत्पत्तिप्रथमसमय एव, औदारिकमिश्रमपर्याप्तावस्थायां, पर्याप्तावस्थायामौदारिकं मनोवाग्योगचतुष्टयं च । तथा तिरश्चामपि केषांचिद्वैक्रियलब्धियोगतो वैक्रियमिश्रं वैक्रियं च घटत एव । यत्तु आहारकद्विकमाहारकाहारकमिश्रलक्षणं तत्र संभवत्येव तिरश्चां, तत्र सर्वविरत्यसंभवात्, सर्वविरतस्य हि चतुर्दशपूर्ववेदिन आहारकद्विकं संभवति, "आहारं चउदसपुव्विणो" इत्यादिवचनप्रामाण्यादिति । तथेह स्त्रीवेदो द्रव्यरूपो द्रष्टव्यः, न तु तथारूपाध्यवसायलक्षणो भावरूपः, तथा विवक्षणात् । एवमुपयोगमार्गणायामपि द्रष्टव्यम् । प्राक् च गुणस्थानकमार्गणायां सर्वोऽपि वेदो भावस्वरूपो गृहीतः, तथाविवक्षणादेव, अन्यथा तेषु प्रोक्तगुणस्थानकसंख्यायोगात्, सयोगिकेवल्यादावपि द्रव्यवेदस्य भावात् ।

१ पूर्ववत् ॥ २ आहारकं चतुर्दशपूर्विणः ॥

ऽन्यवेदश्च बाह्यमाकारमात्रं । ततः स्त्रीषु त्रयोदश योगा आहारकद्विकोना भवन्ति, न पुनराहारकद्विकमपि, यत आहारकद्विकं चतुर्दशपूर्वविद एव भवति "आहारकदुग जायइ चउदसपुव्विणो"[1] इति वचनात्। न च स्त्रीणां चतुर्दशपूर्वाधिगमोऽस्ति, स्त्रीणामागमे दृष्टिवादाध्ययनप्रतिषेधात्। यदाह भाष्यसुधाम्भोधिः—"तुच्छा गारवबहुला चलिंदिया दुब्बला धिईए य। इय अइसेसज्झयणा भूयावादो य नो थीणं ॥ १ ॥[2] इति," भूतवादो दृष्टिवादः। तथाऽयते साम्वादनेऽज्ञानत्रिके च त्रयोदश योगा आहारकद्विकोना भवन्ति। आहारकद्विकं पुनरेतेष्वज्ञानत्वादेव दूरापास्तम्। तथौपशमिकसम्यक्त्वे आहारकद्विकोनास्त्रयोदश योगाः, आहारकं त्वत्रापि न घटामियर्ति, यत औपशमिकसम्यक्त्वं प्रथमसम्यक्त्वोत्पादकाले उपशमश्रेण्यारोहे वा भवति। न च प्रथमसम्यक्त्वोत्पादकाले चतुर्दशपूर्वाधिगमसम्भवस्तदभावाच्च कथमाहारकद्विकभावः प्रादुर्भावपदवीमियर्ति? उपशमश्रेण्यारूढस्त्वाहारकद्विकं नारभत एव, तस्याप्रमत्तत्वात्। आहारकारम्भकस्य तु लब्ध्युपजीवनेनौत्सुक्यभावतः प्रमादबहुलत्वात्। उक्तं च—"आहारगं तु पमत्तो उप्पाएइ न अप्पमत्तु त्ति"[3]। आहारकस्थितश्चोपशमश्रेणिं नारभत एव, तथास्वभावत्वादिति। तथाऽभव्ये मिथ्यात्वे चतुर्दशपूर्वाधिगमाभावादेवाहारकद्विकवर्जास्त्रयोदश योगाः। त एव पूर्वोक्तास्त्रयोदश योगा औदारिकद्विकेनौदारिकौदारिकमिश्रलक्षणेनोना हीना एकादश योगाः सुरे सुरगतौ नरके नरकगतौ भवन्ति। तथा हि—मनोवाग्योगचतुष्टयवैक्रियवैक्रियमिश्रकार्म-

---

१ आहारकद्विकं जायते चतुर्दशपूर्विणः। २ तुच्छा गौरवबहुलाश्चलेन्द्रिया धृत्या दुर्बलाश्च। इति अतिशायीन्यध्ययनानि भूतावादश्च स्त्रीणां न। ३ आहारकं तु प्रमत्त उत्पादयति नाप्रमत्त इति।

णलक्षणा एकादश योगाः सुरेषु नारकेषु च घटन्ते । तत्र कार्मणमपान्तरालगतावुत्पत्तिप्रथमसमय एव, वैक्रियमिश्रमप-
र्याप्तावस्थायां, पर्याप्तावस्थायां तु वैक्रियं मनोवाग्योगचतुष्टयं च । यत्पुनरौदारिकद्विकं तद्भवप्रत्ययादेव देवनारकाणां न
संभवति, आहारकद्विकं तु सुरनारकाणां भवस्वभावतया विरत्यभावेन सर्वविरतिप्रत्ययचतुर्दशपूर्वाधिगमासंभवादेव
दूरापास्तमिति ॥ २६ ॥

**कम्मुरलदुगं थावरि ते सविउव्विदुग पंच इगि पवणे । असंनि चरमवइजुय विउव्विदुगूण चउ विगले २७**

टीका—कार्मणं, औदारिकद्विकमौदारिकौदारिकमिश्रलक्षणमिति त्रयो योगाः।क्वेत्याह—'थावरि त्ति' स्थावरकाये पृथिव्यप्ते
जोवनस्पतिकायरूपे । वायुकायिकस्य पृथग् भणिष्यमाणत्वात् । अयमत्र भावः—स्थावरचतुष्के कार्मणौदारिकद्विकरूपा-
स्त्रयो योगा भवन्ति । तत्र कार्मणमपान्तरालगतावुत्पत्तिप्रथमसमये वा । औदारिकमिश्रं तु अपर्याप्तावस्थायां, पर्याप्ता-
वस्थायां पुनरौदारिकमिति । ते पूर्वोक्तास्त्रयो योगाः सवैक्रियद्विकाः सह वैक्रियद्विकेन वैक्रियवैक्रियमिश्रलक्षणेन वर्तन्त
इति सवैक्रियद्विकाः सन्तः पंच भवन्ति । क्वेत्याह—'इगि त्ति' सामान्यत एकेन्द्रिये पवने वायुकाये च । तत्र कार्मणौ-
दारिकद्विकलक्षणयोगत्रयभावना प्राग्वत् । वैक्रियद्विकभावना त्वेवम्—इह किल चतुर्विधा वायवो वान्ति, तद्यथा—सूक्ष्मा
अपर्याप्ताः, सूक्ष्माः पर्याप्ताः बादरा अपर्याप्ताः, बादराः पर्याप्ताश्च । तत्र बादरपर्याप्तानां केषांचिद्वैक्रियलब्धिसंभवोऽस्ति तान-
धिकृत्य वैक्रियमिश्रं वैक्रियं च लभ्यते । ननु कथमुच्यते केषांचिद्वैक्रियलब्धिसंभवोऽस्ति ? यावता सर्वेऽपि बादरपर्याप्तवायवः

सर्वैक्रिया एव, अवैक्रियाणां चेष्टाया एवाप्रवृत्ते । उक्त च–"केई भणति सवे वेउविया वाया वायति, अवेउवियाण चिट्ठा चेव न पवत्तइ त्ति" तदयुक्त, सम्यक् सिद्धान्तापरिज्ञानात्, अवैक्रियाणामपि तेषा स्वभावत एव चेष्टोपपत्ते । यदाह भगवान् श्रीहरिभद्रसूरिरनुयोगद्वारटीकायाम्–"वाउक्काइया चउविहा सुहुमा पज्जत्ता अपज्जत्ता बायरा पज्जत्ता अपज्जत्ता, तत्थ तिन्नि रासी पत्तेय असखेज्जलोगप्पमाणप्पएसरासिपमाणमित्ता, जे पुण बादरा पज्जत्ता ते पयरासखेज्जइभागमित्ता, तत्थ ताव तिण्ह रासीण वेउवियलद्धी चेव नत्थि बायरपज्जत्ताण पि असखिज्जइभागमित्ताण अत्थि जेसि पि लद्धी अत्थि तउ वि पलिउवमासखिज्जभागसमयमित्ता सपय पुच्छासमए वेउवियवत्तिणो, तया जेण सवेसु चेव उड्ढलोगाइसु चला वायवो विज्जति तम्हा अवेउविया वि वाया वायंति त्ति घित्तव सभावेण तेसि वाइयव ति" । वाता वायुरिति कृत्वा 'तिण्हं रासीण ति' त्रयाणा राशीना पर्याप्तापर्याप्तसूक्ष्मापर्याप्तबादरवायुकायिकानाम् । तथा त एव पूर्वोक्ता पच कार्मणौदारिकद्विक वैक्रियद्विकलक्षणयोगाश्चरमा चतुर्थी असत्यामृषरूपा वाग् वचनयोगश्चरमवाक् तया युक्ता-

---

१ भणति केचन सर्वेऽपि वैकुर्विका वाता वान्ति । अवैक्रियाणा चेष्टैव न प्रवर्त्तते । २ वायुकायिकाश्चतुर्विधा सूक्ष्मा पर्याप्ता १ अपर्याप्ता २ बादरा पर्याप्ता ३ अपर्याप्ता ४ । तत्र त्रयो राशय प्रत्येक असख्यलोकप्रमाणप्रदेशराशिप्रमाणा । ये पुनर्बादरा पर्याप्तास्ते प्रतरासख्येयतमभागमात्रा. । तत्र तावत्त्रयाणा राशीना वैक्रियलब्धिरेव नास्ति । बादरपर्याप्तानामपि असख्यातभागमात्राणा अस्ति (मा) । येपामप्यस्ति लब्धिस्ततोऽपि पल्योपमासख्येयभागसमयमात्रा साम्प्रत पृच्छासमये वैकुर्विकवर्त्तिन । येन सर्वेषूर्ध्वलोकादिष्वेव चला वायवो विद्यते तस्मादवैकुर्विका अपि वाता वान्तीति गृहीतव्य । तेषा स्वभावत एव वातव्य ।

षड् योगा भवन्ति । क्वेत्याह—असंज्ञिनि संज्ञिव्यतिरिक्ते जीवे । तत्र कार्मणमपान्तरालगतावुत्पत्तिप्रथमसमये च, औदारिकमिश्रमपर्याप्तावस्थायां, पर्याप्तावस्थायामौदारिकं । बादरपर्याप्तवायुकायिकानां वैक्रियद्विकं, चरमभाषा शंखादिद्वीन्द्रियादीनामिति । त एव पूर्वोक्ताः षड् योगा वैक्रियद्विकेन वैक्रियवैक्रियमिश्रलक्षणेनोना हीनाश्चत्वारो भवन्ति । क्वेत्याह—विकलेषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु । कोऽर्थः ? तत्र कार्मणौदारिकद्विकभावना प्राग्वत् । चरमभाषा चासत्यामृषरूपा शंखादीनां भवति, शेषास्तु भाषा न भवन्त्येव "विगलेसु असच्चमोस त्ति" वचनादिति ॥ २७ ॥

कंमुरलमीस विणु मण वइ समइय छेय चक्खु मणनाणे ।
उरलदुगकंम पढमंतिममणवइ केवलदुगंमि ॥ २८ ॥

टीका—कार्मणमौदारिकमिश्रं विना शेषास्त्रयोदश योगा भवन्ति । क्वेत्याह—मनोयोगे, वाग्योगे, सामायिकसंयमे, छेदोपस्थापनसंयमे, चक्षुर्दर्शने, मनःपर्यायज्ञाने (च) । भावना सुकरैव । यौ तु कार्मणौदारिकमिश्रौ तौ तेषु सर्वथा न संभवत एव, तयोरपर्याप्तावस्थायां भावात्, मनोयोगवाग्योगसामायिकछेदोपस्थापनचक्षुर्दर्शनमनःपर्यायज्ञानानां च तस्यामवस्थायामसंभवात् । तथा 'उरलदुग त्ति' औदारिकद्विकमौदारिकौदारिकमिश्रकार्मणकाययोगौ (मिश्रकाययोगौ) सयोग्यवस्थायामेव समुद्घातगतस्य वेदितव्यौ (कार्मणं च) । "मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु । कार्मणशरीरयोगी चतुर्थके पंचमे तृतीये च ॥ १ ॥ इति" । प्रथमान्तिममनोयोगौ तु अविकलसकलविमलकेवलज्ञानकेवलदर्शनबलावलोकि-

तनिखिलखोकालोकस्य जगवतो, मन पर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा मनसा पृष्टस्य सतो मनसैव देशनात्, ते हि जगवत्प्रयुक्तानि मनोद्रव्याणि मनं पर्यायज्ञानेनावधिज्ञानेन वा पश्यन्ति, दृष्ट्वा च ते विवक्षितवस्त्वालोचनाकारान्यथानुपपत्त्या लोकस्वरूपादिक वाह्यमर्थं पृष्टमवगच्छन्ति । प्रथमान्तिमवाग्योगौ तु देशनादिषु व्यापृतस्य तस्यैव जगवतो जष्टव्याविति ॥ २० ॥

मणवइउरला परिहारि सुहुमि नव, ते उ मीसि सविउव्वा ।
देसे सविउव्विडुगा सकम्मुरलमिस्स अहक्खाए ॥ २ए ॥

टीका–परिहारविशुद्धिके सूक्ष्मसपराये च नव योगा । के त इत्याह–मनोयोगश्चतुर्धा वाग्योगश्चतुर्धौदारिक चेति । यस्त्वाहारकद्विक वैक्रियद्विकं कार्मणमौदारिकमिश्र च तन्न सम्भवत्येव । तथाहि–आहारकद्विक चतुर्दशपूर्ववेदिन एव जवति, "आहार चउदसपुव्विणो" इति व चनात् । परिहारविशुद्धिकसयमप्रतिपत्ति पुनरुत्कर्षतोऽप्यधीतकिञ्चिन्यूनदशपूर्वस्यैव, तथैव सिद्धान्तेऽन्यनुज्ञानात्, तत् कथ परिहारविशुद्धिकस्याहारकद्विकसंजव ? । नापि तस्य वैक्रियद्विकसम्भव , तस्यामवस्थाया तत्करणाननुज्ञानाज्जिन कल्पिकस्येव, तस्याप्यत्यन्तविशुद्धाप्रमादमूलसयमघोरानुष्ठानपरायणत्वात्, वैक्रियारम्भे च लब्ध्युपजीवनेनौत्सुक्यजावात् प्रमादसम्भवात्, अत एव सूक्ष्मसपरायसयमेऽप्याहारकद्विकवैक्रियद्विकलक्षणाना चतुर्णा योगानामसम्भव । सूक्ष्मसपरायसयमोपेतस्याप्यत्यन्तविशुद्धतया निस्तरगमहोदधिकल्पत्वेन वैक्रियादिप्रारम्भासम्भवात्

कार्मणमौदारिकमिश्रं चापर्याप्ताद्यवस्थायामेवेति संयमद्वयेऽपि तस्याभावः। ते पुनः पूर्वोक्ता नव योगाः सवैक्रियाः सह वैक्रियेण वर्तन्त इति सवैक्रिया वैक्रियरहिताः सन्तो दश योगा मिश्रे सम्यग्मिथ्यादृष्टौ भवन्ति। तत्र वैक्रियं देवनारकापेक्षया, यत्तु वैक्रियमिश्रं तन्नैवाप्यते, तस्यापर्याप्तावस्थाभावित्वात्, मिश्रभावस्य च “[1]न सम्ममिच्छो कुणइ कालं” इति वचनप्रामाण्यादपर्याप्तावस्थायामसंभवात्। स्यादेतद्वैक्रियलब्धिमतां मनुष्यतिरश्चां सम्यग्मिथ्यादृशां सतां वैक्रियारंभसंभवेन कथं वैक्रियमिश्रं नावाप्यते? इति उच्यते—तेषां वैक्रियारंभासंभवात्, अन्यतो वा कुतश्चित्कारणात् पूर्वाचार्यैस्तन्नाभ्युपगम्यत इति न सम्यगवगच्छामस्तथाविधसंप्रदायाभावात्, अतोऽस्माभिरपि तन्नेष्टमिति। देशे देशविरते त एव नव पूर्वोक्ताः सवैक्रियद्विका वैक्रियतन्मिश्रसहिताः सन्त एकादश योगा भवन्ति, देशविरतानामंबडादीनां वैक्रियलब्धिमतां वैक्रियद्विकसंभवात्। तथा त एव नव पूर्वोक्ताः सकार्मणौदारिकमिश्राः सह कार्मणौदारिकमिश्राभ्यां वर्तन्त इति सकार्मणौदारिकमिश्राः सन्त एकादश योगा यथाख्यातसंयमे भवन्ति। अयमर्थः—मनोयोगचतुष्टयवाग्योगचतुष्टयकार्मणौदारिकद्विकलक्षणा एकादश योगा यथाख्याते भवन्ति। तत्र मनोवाक्चतुष्कौदारिकयोगाः सुज्ञाता एव, कार्मणमौदारिकमिश्रं तु (च) यथाख्यातसंयमश्रीकुलगृहस्य भगवतः केवलिनः संभवति, तस्य हि समुद्घातगतस्य तृतीयचतुर्थपंचमसमयेषु कार्मणं “कार्मणशरीरयोगी चतुर्थके पंचमे तृतीये चेति” वचनात्, द्वितीयषष्ठसप्तमसमयेष्वौदारिकमिश्रं “मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु” इति वचनादवाप्यत इति यथाख्यातसंयमे द्वयोरपि संभवात्। अथ विनेयज-

१ न सम्यग्मिथ्यादृष्टिः कालं करोति।

नानुग्रहाय केवलिसमुद्घातस्वरूपमभिधीयते-तत्र सम्यगपुनर्भावेनोत्प्राबल्येन कर्मणो हनन घातः प्रलयो यस्मिन् प्रयत्नविशेषे स समुद्घात । अय च केवलिसमुद्घातोऽष्टसामायिक , त च प्रारभमाण प्रथममेवायोजिकाकरणमान्तर्मौहूर्तिकमुदीरणावलिकाया कर्मप्रक्षेपव्यापाररूपमभ्येति । अथायोजिकाकरणमिति क. शब्दार्थ ? उच्यते-'आङ्' मर्यादायाम् आ मर्यादया केवलिदृष्ट्या योजन शुभाना योगाना व्यापारणमायोजिका "भावे" (५-३-१२२) णक तस्या करणमायोजिकाकरणम् । आह च-"[1]कइ समइए ण भते आउजीकरणे पन्नत्ते ? गोयमा, असखेज्ज समइए अतोमुहुत्तिए आउजीकरणे पन्नत्ते" । अय कृतकृत्योऽपि केवली किमर्थं समुद्घात करोतीति चेदुच्यते-वेदनीयनामगोत्राणामायुषा सह समीकरणार्थम् । यदाह भगवान् श्रीभद्रबाहुस्वामी-"[2]नाऊण वेयणिज्ज अइबहुय आउय च थोवाग । गतूण समुग्घाय खवेइ कम्म निरवसेस ॥ १ ॥" प्रज्ञापनायामप्युक्तम्-"[3]कम्हा ण भते केवली समुग्घाय गच्छइ ? गोयमा । केवलिस्स चत्तारि कम्मसा अक्खीणा अवेइया अणिज्जिन्ना भवन्ति, त जहा-वेयणिज्जे आउए नामे गोए, सव्वबहुए से

१ कतिसामयिक भदन्तायोजिकाकरण प्रज्ञप्त ? गौतम असख्यसामयिकमान्तर्मौहूर्तिक आयोजिकाकरण प्रज्ञप्त । २ ज्ञात्वाऽतिबहुक वेदनीय स्तोक चायु । गत्वा समुद्घात क्षपयति कर्म (अधिक) निरवशेषम् । १ । ३ भदन्त कस्मात् केवलीसमुद्घात गच्छति (करोति)। गौतम केवलिनश्चत्वार कर्मांशा अक्षीणा अवेदिता अनिर्जीर्णा भवन्ति तद्यथा वेदनीय आयुष्क नाम गोत्र । सर्वबहुक तस्य वेदनीय कर्म भवति । सर्वस्तोक अस्यायु कर्म भवति । बधनेन स्थित्या च विषम समीकरोति । एव विषम समकरणाय बधनेन स्थित्या च सर्व केवली समुद्घात गच्छति खलु ।

वेयणिज्जे कम्मे हवइ सव्वथोवे से आउए कम्मे हवइ विसमं समं करेइ बंधणेहिं ठिईहि विसमे समीकरणयाए बंधणेहिं ठिईहि य, एवं खलु केवली समुग्घायं गच्छइ"। 'बंधणेहिं ति' बध्यन्त आत्मप्रदेशैः सह लोलीभावेन संश्लिष्टाः क्रियन्ते योगवशाद्ये ते बन्धनाः "भुजिपत्यादिभ्यः कर्मापादाने" (५-३-१२८) इति कर्मण्यनट् कर्मपरमाणवः, स्थितयो वेदना-कालाः, शेषं सुगमम्। उक्तं च—"आयुषि समाप्यमाने शेषाणां कर्मणां यदि समाप्तिः। न स्यात् स्थितिवैषम्याद्गच्छति स ततः समुद्घातम् ॥ १ ॥" स्थित्या च बन्धनेन च समीक्रियार्थं हि कर्मणां तेषामन्तर्मुहूर्त्तशेषे तदायुषि समुज्जिघां-सति सः। अथ सर्वेऽपि केवलिनः समुद्घातं गच्छन्ति न वेति चेदुच्यते—यस्य केवलिन आयुषा सह वेदनीयनामगोत्राणि समस्थितिकानि भवन्ति स हि न केवलिसमुद्घातं करोति, शेषस्तु करोति। उक्तं च श्रीमदार्यश्यामपादैः—"सव्वे वि णं भंते केवली समुग्घायं गच्छंति? गोयमा! नो इणट्ठे समट्ठे जस्स आउएण तुल्लाइं बंधणेहिं ठिईहिय भवोवग्गाहिकम्माइ समुग्घायं से न गच्छइ, 'अगंतूणं समुग्घायं अणंता केवली जिणा। जरमरणविप्पमुक्का सिद्धिं वरगइं गया ॥ १ ॥' समु-द्घातं च कुर्वन् केवली प्रथमसमये बाहुल्यतः स्वशरीरप्रमाणमूर्ध्वमधश्च लोकान्तपर्यन्तमात्मप्रदेशानां संघातदंडं दंड-स्थानीयं ज्ञानाभोगतः करोति, द्वितीयसमये तमेव दंडं पूर्वापरदिग्द्वयप्रसारणात्पार्श्वतो लोकान्तगामिकपाटमिव करोति, तृतीयसमये तमेव कपाटं दक्षिणोत्तरदिग्द्वयप्रसारणान्मन्थसदृशं मन्थानं करोति लोकान्तप्रापिणमेव। एवं च लोकस्य

---

१ भदन्त सर्वेपि केवलिनः समुद्घातं कुर्वन्ति! गौतम नैषोर्थः समर्थः। यस्यायुषा बंधनेन स्थित्या च भवोपग्राहिकर्माणि तुल्यानि स समुद्घातं न गच्छति। अगत्वा समुद्घातमनन्ताः केवलिनो जिनाः। जरामरणविप्रमुक्ताः सिद्धिं वरगतिं गताः। १।

प्रायो बहु पूरित मन्थान्तराण्यपूरितानि भवन्ति, अनुश्रेणिगमनात्। चतुर्थसमये तान्यपि मन्थान्तराणि सह लोकनिष्कुटै पूरयति। ततश्च सकलो लोकः पूरितो भवतीति। तदनन्तर च पञ्चमे समये यथोक्तक्रमात्प्रतिलोम मन्थान्तराणि संहरति जीवप्रदेशान् सकर्मकान् संकोचयति, षष्ठे समये मन्थानमुपसंहरति घनतरसंकोचनात्, सप्तमे समये कपाटमुपसंहरति दण्डात्मनि संकोचनात्, अष्टमे समये दण्ड समुपहृत्य शरीरस्थ एव भवति। न चैतत् स्वमनीषिकाविजृम्भित, यदाहुर्वृद्धा –"उड्ढाहाइय (इ) लोगतगामिण सो सदेहविक्खंभ। पढमसमयमि दण्ड करेइ विइयमि उ कवाड ॥ १ ॥ तइयसमयंमि मथ चउत्थए लोगपूरण कुणइ। पडिलोम संहरण काउ तो होइ देहत्थो ॥ २ ॥" वाचकवरोऽप्याह–दण्ड प्रथमे समये कपाटमथ चोत्तरे तथा समये। मन्थानमथ तृतीये लोकव्यापी चतुर्थे तु ॥ १ ॥ संहरति पञ्चमे त्वंतराणि मन्थानमथ पुन षष्ठे। सप्तमके तु कपाट संहरति ततोऽष्टमे दण्डम् ॥ २ ॥" तस्येदानीं समुद्घातस्य योगव्यापारश्चिन्त्यते। योगाश्च मनोवाक्कायाः। अत्रैषा क कदा व्याप्रियते, तत्रेह मनोवाग्योगयोरव्यापार एव, प्रयोजनाभावात्। यदाह धर्मसारटीकाया भगवान् श्रीहरिभद्रसूरि–"मनोवचसी तदा न व्यापारयति प्रयोजनाभावात्, काययोगस्य तु औदारिककाययोगस्यौदारिकमिश्रकाययोगस्य वा कार्मणकाययोगस्य वा व्यापारो, न शेषस्य काययोगस्यासंभवात्। तत्र प्रथमाष्टमसमययोरौदारिककायप्राधान्यादौदारिककाययोग एव, द्वितीयषष्ठसप्तमकेषु पुन कार्मणशरीरस्यापि व्याप्रिय-

---

१ ( आदौ ) ऊर्ध्वाधआदिकलोकांतगामिन स्वदेहविष्कंभ दंड प्रथमसमये स करोति द्वितीये तु कपाट । १ । तृतीयसमये मथान चतुर्थे लोकपूरण करोति । प्रतिलोम संहरण कृत्वा ततो भवति देहस्थ । २ ।

माणत्वादौदारिकमिश्र एव, तृतीयचतुर्थपंचमेषु तु केवलमेव कार्मणशरीरं व्यापारभागिति कार्मणकाययोगः । यदाहुः श्रीमदार्यश्यामपादाः श्रीप्रज्ञापनायां षट्त्रिंशत्तमे समुद्घातपदे–"पढमट्ठमसमएसु उरालियकायजोगं जुंजइ, बिइयछट्ठसत्तमेसु समएसु उरालियमीसगसरीरकाययोगं जुंजइ, तइयचउत्थपंचमेसु समएसु कम्मगसरीरकायजोगं जुंजइ" । भाष्यकारोऽप्याह–"[1] न किर समुग्घाए गओ मणवइजोगप्पओयणं कुणइ । उरालियजोगं पुण जुंजइ पढमट्ठमे समए ॥ १ ॥ उभयवावाराओ तम्मीसं बीयछट्ठसत्तमए । तिचउत्थपंचमे कंमगं तु तम्मत्तचिट्ठाओ ॥ २ ॥" ततः समुद्घातात्प्रतिनिवृत्तो मनोवाकाययोगत्रयमपि व्यापारयति, यतः स भगवान् भवधारणीयकर्मसु नामगोत्रवेदनीयेष्वचिन्त्यमाहात्म्यसमुद्घातवशतः प्रभूतमायुषा सह समीकृतेष्वप्यन्तर्मुहूर्तभाविपरमपदो यदाऽनुत्तरोपपातिकादिना देवेन मनसा पृच्छ्यते तर्हि व्याकरणाय मनःपुद्गलान् गृहीत्वा मनोयोगं युनक्ति, तमपि सत्यमसत्यामृषारूपं वा मनुष्यादिना पृष्टः सन्नपृष्टो वा कार्यवशाद्गृहीत्वा भाषापुद्गलान् वाग्योगं, तमपि सत्यमसत्यामृषारूपं वा । न शेषान् वाङ्मनोयोगान्, क्षीणरागद्वेषत्वात्, काययोगं तु गमनादिचेष्टासु तदेवमन्तर्मुहूर्तं कालं यथायोगं योगत्रयव्यापारभाक् केवली भूत्वा तदनन्तरमत्य-

---

१ प्रथमाष्टमसमययोरौदारिककाययोगं युनक्ति । द्वितीयषष्ठसप्तमेषु समयेषु औदारिकमिश्रशरीरकाययोगं युनक्ति । तृतीयचतुर्थपंचमेषु समयेषु कार्मणशरीरकाययोगं युनक्ति । २ समुद्घातगतः किल मनोवाग्योगप्रयोजनं न करोति । औदारिकयोगं पुनर्युनक्ति प्रथमाष्टमसमययोः उभयव्यापारात्तन्मिश्रं द्वितीयषष्ठसप्तमेषु । द्वितीयचतुर्थपंचमेषु कार्मणमेव तन्मात्रचेष्टायाः ।

न्ताप्रकप लेश्यातीत परमनिर्जराकारण ध्यान प्रतिपित्सुरवश्य योगनिरोधायोपक्रमते, योगे सति यथोक्तरूपस्य ध्यानस्यासत्त्वात् । यदाह जाष्यसुधाम्भोधि –"[1]विणिवत्तिसमुग्घाउ तिन्नि वि जोगे जिणो पउजिज्जा । सच्चमसच्चामोस व सो मण तह वई जोग ॥ १ ॥ उरालकायजोग गमणाई पाडिहारियाण च । पच्चप्पण करिज्जा जोगनिरोह तउ कुणई ॥ २ ॥ किं न सजोगो सिज्झइ स बधहेउत्ति ज खलु सजोगो । न समेइ परमसुक्क स निज्जराकारण परम ॥ ३ ॥' अन्यत्राप्युक्तम्–"स ततो योगनिरोध करोति लेश्यानिरोधमभिकाङ्क्षन् । समयस्थिति च बन्ध योगनिमित्त स निरुरत्सु ॥ १ ॥ समये समये कर्मादाने सति सन्ततेर्न मोक्ष स्यात् । यद्यपि हि विमुच्यन्ते स्थितिक्षयात् पूर्वकर्माणि ॥ २ ॥ नाकर्मणो हि वीर्य योगद्रव्येण जवति जीवस्य । तस्यावस्थानेन तु सिद्ध समयस्थितिर्नन्ध ॥ ३ ॥" योगनिरोध च कुर्वाण• प्रथम मनोयोग निरुणद्धि, तत्र पर्याप्तमात्रसङ्गिपचेन्द्रियस्य प्रथमसमये यावन्ति मनोद्रव्याणि यावन्मानश्च तद्व्यापारस्तस्मादसख्येयगुणहीन मनोयोग प्रतिसमय निरुन्धानोऽसख्येयै समयै साकल्येन निरुणद्धि । यदाह जगवान् श्रीमदार्यश्याम'–"[2]सेण पुव्वामेव सनिस्स पचिंदियस्स पज्जत्तयस्स जहन्नजोगिस्स हिट्ठा असखेज्जगुणपरिहीण पढम मणजोग निरु-

---

१ विनिवृत्तसमुद्घातस्त्रीनपियोगाञ्जिन प्रयुञ्जीत । स सत्यमसत्यामृप वा मनोवाक्योग तथा । १ । औदारिककाययोग गमनादिपु प्रातिहारिकाणा च । प्रत्यर्पण कुर्यात्ततो योगनिरोध करोति । २ । किं सयोगो न सिद्ध्यति स बधहेतुरिति यत्खलु सयोग । परम निर्जराकारण परमशुक्ल न समेति । ३ । २ स पूर्वमेव सञ्ज्ञिपर्नेन्द्रियस्य पर्याप्तकस्य जघन्ययोगिनोऽसख्यगुणपरिहीण प्रथम मनोयोग निरुणद्धि ।

भइ" भाष्यकारोऽप्याह—"[1]पज्जत्तमित्तसंनिस्स जत्तियाइं जहन्नजोगिस्स । हुंति मणोदव्वाइं तव्वावारो य जम्मत्तो ॥ १ ॥ तदसंखगुणविहीणं समए समए निरुंभमाणो सो । मणसो सव्वनिरोहं कुणइ असंखिज्ज समएहिं ॥२॥" "[2]तओ अणंतरं च णं बेइंदियस्स पज्जत्तगस्स जहन्नजोगिस्स हिट्ठा असंखिज्जगुणहीणं दुच्चं वइजोगं निरुंभइ"। भाष्यकृदप्याह—"[3]पज्जत्तमित्तबिंदिय जहन्नवइजोगपज्जवा जे उ । तदसंखगुणविहीणं समए समए निरुंभंतो ॥ १ ॥ सव्ववइजोगरोहं संखाईएहिं कुणइ समएहिं ।" "[4]तओ अणंतरं च णं सुहुमस्स पणगजीवस्स पज्जत्तगस्स जहन्नजोगिस्स हिट्ठा असंखेज्जगुणपरिहीणं तच्चं कायजोगं निरुंभइ"। काययोगं च निरुंधानः सूक्ष्मक्रियमप्रतिपातिध्यानमधिरोहति । तत्सामर्थ्याच्च वदनोदरादिविवरपूरणेन संकुचितदेहत्रिभागवर्तिप्रदेशो भवति । यदाह भाष्यसुधांभोधिः—"[5]तत्तो य सुहुमपणगस्स पढमसमओववन्नस्स

---

१ पर्याप्तमात्रसंज्ञिनो जघन्ययोगिनो यावन्ति मनोद्रव्याणि भवंति तद्व्यापारश्च यावन्मात्रः। १। तदसंख्यगुणविहीनं समये समये स निरुंधन्नऽसंख्यसमयैर्मनसो निरोधं सर्वथा करोति । २ । २ तदनंतरं च द्वीन्द्रियस्य जघन्ययोगिनः पर्याप्तस्य जघन्यादसंख्यगुणविहीनं द्वितीयं वचोयोगं निरुणद्धि। ३ पर्याप्तमात्रद्वीन्द्रियस्य यावन्त एव जघन्यपर्यायाः तदसंख्यगुणविहीनं समये समये निरुंधन् । सर्वथा वचोयोगरोधं संख्यातीतैः समयैः करोति । ४ तदनंतरं च पर्याप्तसूक्ष्मपनकजीवस्य जघन्ययोगिनः जघन्यादसंख्यगुणपरिहीणं तृतीयं काययोगं निरुणद्धि । ५ ततश्चसूक्ष्मपनकस्य प्रथमसमयोत्पन्नस्य ये किल जघन्ययोगाः तदसंख्यगुणहीनमेकैकस्मिन्समये निरुंधन् देहत्रिभागं च मुंचन् । रुणद्धि स काययोगं संख्यातीतैरेव समयैः। ततः कृतकाययोगनिरोधः शैलेश्यवस्थां प्राप्नोति । १ । शीलं च समाधानं निश्चयतः स च सर्वसंवरः। तस्येशः शैलेशः शैलेशी भवति तदवस्था । २ ह्रस्वाक्षराद्याः पंच येन मध्येन कालेन भण्यंते। तिष्ठति शैलेशीगतस्तावन्मात्रं ततः कालं । ३ । स तनुनिरोधारंभात् सूक्ष्मक्रियाऽनिवृत्तिं ध्यायति । व्युच्छिन्नक्रियाऽप्रतिपाति (च) शैलेशीकाले । ४ ।

जो किर जहन्नजोगो तदसखेज्जगुणहाणमिक्कि समए निरुजमाणो देहतिज्ञाग च मुचतो–रुञ्ज स कायजोग सखाई-एहि चेव समएहि । तो कयजोगनिरोहो सेलेसीज्ञावणामेई ॥ १ ॥ सीलं च समाहाण निञ्चयर्उ सबसवरो सो ज । तस्सेसो सेलेसो सेलेमी होइ तदवत्था ॥ २ ॥ हस्सरकराईमञ्ञेण जेण कालेण पच ज्ञसंति । अञ्छइ सेलेसिगर्ज तत्ति-यमित्तं तर्ज काल ॥ ३ ॥ तणुरोहारज्ञार्ज ञ्जायइ सुहुमकिरियानियट्टि सो । बुछिन्नकिरियमप्पडिवाई सेलेसिकालमि ॥ ४ ॥ " प्रज्ञापनायामप्युक्तम्–"जोगनिरोह करित्ता अजोगय पाजणइ अजोगय पाजणित्ता ईसिहस्स पचरकरुच्चा-रणद्धाए असखेज्जसमइय अतमुहुत्तिय सेलेसि पडिवज्जइ पुवरइयसेढीय च ण कम तीसे सेलेसद्धाए असखेज्जाहि गुण-सेढीहि असखेज्जकम्मखधे खवयते वेदणिज्जाजयनामगोए इच्चेए चत्तारि कम्म से जुगव खवित्ता जेरालियतेयाकम्ममा-( गा ) ई सवाइ विप्पजहित्ता उज्जुसेढीए अफुसमाणगईए एगसमएण अविग्गहेण उड्ढ गता सागारोवउत्ते सिज्झइ " । ज्ञाप्यकारोऽप्याह–"तंदसखेज्जगुणाए गुणसेढीइ रइय पुरा कम्म । समए समए खवित्त कमेण सब तहि कम्म ॥ १ ॥

१ योगनिरोध कृत्वाऽयोगता प्राप्नोति । अयो ता प्रगुणय्येषत्पचह्रस्वाक्षरोच्चारणकाल असख्यसामयिकमतर्मुहूर्त्त शैलेशीं प्रतिपद्यते । पूर्वरचितश्रेणिक च कर्म शैलेशीकालेऽसख्याभिर्गुणश्रेणिभिरसख्यकर्मस्कधान् क्षपयन् वेदनीयायुर्नामगोत्राणि इत्येताश्चतुर कर्माशान्युग-पत्क्षपयित्वौदारिकतैजसकार्मणानि सर्वाणि विप्रजह्य ऋजुश्रेण्याऽस्पृशद्गत्याऽविग्रहेणैकसमयेनोर्ध्वं गत्वा साकारोपयुक्त सिद्ध्यति । २ तद-सख्यगुण्या पुरा गुणश्रेण्या रचित कर्म समये समये क्षपयित्वा क्रमेण सर्वं कर्म तत्र ( क्षपयित्वा ) । ऋजुश्रेणिप्रतिपन्न समयप्रदेशातरम-स्पृशन् एकसमयेन सिद्ध्यति अथ साकारोपयुक्त स ।

रिउसेढीपडिवन्नो समयपएसंतरं अफुसमाणो । एगसमएण सिज्झइ अह सागारोवउत्तो सो ॥ २ ॥ " अयं च समुद्घातविधिः सर्वोऽप्यावश्यकाभिप्रायेणोक्तः । तत्रेयं गाथा–दंरू कवारू मंथंतरे य संहरणया सरीरत्थे । भासाजोगनिरोहे सेलेसी सिझणा चेव ॥ १ ॥ " इति ॥ २ए ॥

अभिहिता मार्गणास्थानेषु योगाः, सांप्रतमेतेष्वेवोपयोगस्वरूपनिरूपणपूर्वकमुपयोगानभिधित्सुराह–

**तिअनाण नाण पण चउ दंसण बार जिय लरकणुवउगा ।**

**विणु मणनाण ड्डकेवल नव सुरतिरिनिरयअजएसु ॥ ३० ॥**

टीका–त्रीण्यज्ञानानि मत्यज्ञानश्रुताज्ञानविभंगरूपाणि, ज्ञानानि मतिज्ञानश्रुतज्ञानावधिज्ञानमनःपर्यवज्ञानकेवलज्ञानलक्षणानि पंच स्वोपज्ञकर्मविपाकटीकायां विस्तरेणाभिहितस्वरूपाणि, चत्वारि दर्शनानि चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनरूपाणि, इत्येवं द्वादशोपयोगाः प्राग्निरूपितशब्दार्था भवन्ति । किंविशिष्टा इत्याह–' जिय लरकण त्ति ' प्राकृतत्वाद्विभक्तिलोपः, जीवस्यात्मनो लक्षणं लक्ष्यते ज्ञायते तदव्यवच्छेदेनेति लक्षणमसाधारणस्वरूपम् । अत एवोक्तमन्यत्र "उपओगलक्खणो जीव" इति । ते च द्विधा साकारा अनाकाराश्च, तत्र पंच ज्ञानानि त्रीण्यज्ञानानीत्यष्टावुपयोगाः साकाराश्चत्वारि दर्शनान्यनाकारा उपयोगाः । यदाह प्रवचनार्थसार्थसरससरसीरुहसमूहप्रकाशनसहस्रभानुर्भ-

---

१ दंडः कपाटं मंथा अंतराणि संहरणं शरीरस्थः । भाषा योगनिरोधः शैलेशी सिद्धिश्चैव ।

गवान् श्रीमदार्यश्याम प्रज्ञापनायामुपयोगपदेऽष्टमे–" कतिविहे ए जंते उवर्डगे पन्नत्ते? गोयमा! दुविहे उवर्डगे पन्नत्ते, त जहा–सागारोवर्डगे य अणागारोवर्डगे य। सागारोवर्डगे ए जंते कतिविहे पन्नत्ते? गोयमा! अघविहे पन्नत्ते, तं-जहा–आजिणिवोहियनाणसागारोवर्डगे, सुयनाणसागारोवर्डगे, र्डहिनाणसागारोवर्डगे, मणपज्जवनाणसागारोवर्डगे, केवलनाणसागारोवर्डगे, मइअन्नाणसागारोवर्डगे, सुयअन्नाणसागारोवर्डगे, विजंगनाणसागारोवर्डगे। अणागारोवर्डगे ए जंते कइविहे पन्नत्ते? गोयमा! चउव्विहे पन्नत्ते, त जहा–चरकुदसणअणागारोवर्डगे, अचरकुदसणअणागारोवर्डगे, र्डहिदसणअणागारोवर्डगे, केवलदसणअणागारोवर्डगे" । जावार्थ प्रागेव मार्गणास्थाने जेदाजिधानावसरे सप्रपच-मजिहित इति। 'विणु मणनाणे' इत्यादि विना मन पर्यायज्ञान केवलद्विक च केवलज्ञानकेवलदर्शनलक्षण शेषा नवो-पयोगा जवन्ति, सुरे सुरगतौ, 'तिरि त्ति' तिर्यग्गतौ, नरके नरकगतौ, अयते विरतिहीने। एतेषु सर्वेष्वपि हि सर्ववि-रत्यसजवेन मन पर्यायज्ञानकेवलद्विकासजवादिति ॥ ३० ॥

**तस जोय वेय सुक्काहार नर पणिंदि संनि जवि सवे। नयणेयर पण लेसा कसाइ दस केवलडुगूणा ॥ ३१ ॥**

---

१ भदन्त कतिविध उपयोग प्रज्ञप्त। गौतम द्विविध उपयोग प्रज्ञप्त तद्यथा–साकारोपयोग अनाकारोपयोगश्च। साकारोपयोगो भदन्त कतिविध प्रज्ञप्त। गौतमाष्टविध प्रज्ञप्त तद्यथा—मतिज्ञानसाकारोपयोग, श्रुत–अवधि–मन पर्याय–केवल–मत्यज्ञान-साकारोपयोग, श्रुताज्ञान–विभगज्ञानसाकारोपयोग। भदन्त अनाकारोपयोग कतिविध प्रज्ञप्त? गोतम चतुर्विध प्रज्ञप्त तद्यथा–चक्षुर्दर्शनानाकारोपयोग, अचक्षुर्दर्शन–अवधि–केवलदर्शनानाकारोपयोग।

टीका—त्रसेषु, योगेषु मनोवाक्कायरूपेषु, वेदेषु द्रव्यवेदरूपस्त्रीपुंनपुंसकलक्षणेषु, शुक्ललेश्यायां, आहारकेषु, नरगतौ, पंचेन्द्रियेषु, संज्ञिषु, 'भवि त्ति' भव्येषु च सर्वे द्वादशाप्युपयोगाः संभवन्ति, एतेषु सर्वेष्वपि सम्यक्त्वदेशविरतिसर्वविरत्यादीनां संभवात्। 'नयणं ति' चक्षुर्दर्शने, 'इयर त्ति' अचक्षुर्दर्शने, पंचसु लेश्यासु कृष्णनीलकापोततेजःपद्मलेश्यासु, कषायेषु क्रोधमानमायालोभेषु दश उपयोगा भवन्ति। क इत्याह—केवलद्विकेनोना हीना ज्ञानचतुष्टयाज्ञानत्रिकदर्शनत्रिकरूपाः, न तु केवलद्विकं चक्षुर्दर्शनादिसद्भावेऽनुत्पादात्तस्य ॥ ३१ ॥

**चउरिंदियसंनि दुअनाणदंसण इग बिति थावरि अचक्खु।**
**ति अनाणं दंसणदुगं अनाणतिग अभवि मिच्छदुगे ॥ ३२ ॥**

टीका—चतुरिन्द्रिये असंज्ञिनि चत्वार उपयोगा भवन्ति। के त इत्याह—द्व्यज्ञानदर्शने द्वे अज्ञाने मत्यज्ञानश्रुताज्ञानरूपे द्वे दर्शने चक्षुर्दर्शनाचक्षुर्दर्शनलक्षणे इत्यर्थः। तथा त एव पूर्वोक्ताश्चत्वार उपयोगाः 'अचक्खु त्ति' अचक्षुश्चक्षुर्दर्शनरहिताः सन्तस्त्रयो भवन्ति। केष्वित्याह—'इग त्ति' सामान्यत एकेन्द्रियेषु द्वीन्द्रियेषु त्रीन्द्रियेषु स्थावरेषु पृथिव्यंबुतेजोवायुवनस्पतिषु। कोऽर्थः एकद्वित्रीन्द्रियस्थावरेषु मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनरूपास्त्रय उपयोगा भवन्तीत्यर्थः, न शेषाः, यतः सम्यक्त्वाभावान्मतिश्रुतज्ञानासंभवः, सर्वविरत्यभावाच्च मनःपर्यायज्ञानकेवलज्ञानकेवलदर्शनाभावः। यत्पुनरवधिद्विकं विभंगज्ञानं च तद्भवप्रत्ययं गुणप्रत्ययं वेति। न चानयोरन्यतरोऽपि प्रत्ययः संभवति, चक्षुर्दर्शनोपयोगाभावस्तु चक्षुरिन्द्रियाभावादेव सिद्धः। तथा त्रयाणामज्ञानानां समाहारस्त्र्यज्ञानमज्ञानत्रयं मत्यज्ञानश्रुताज्ञानविभंगरूपं, दर्शन-

द्विक चक्षुर्दर्शनाचक्षुर्दर्शनलक्षणमित्येते पञ्चोपयोगा भवन्ति । केत्याह–अज्ञानत्रिके मत्यज्ञानश्रुताज्ञानविभङ्गरूपे । यत्त्वज्ञानत्रिकेऽवधिदर्शनं पूर्वाचार्यैः कुतश्चित् कारणान्नेष्यते तत्र सम्यगवगच्छामस्तथाविधसंप्रदायाभावात्, अथ च सिद्धान्ते प्रतिपाद्यते तथा च प्रज्ञप्तिसूत्रं पूर्वदर्शितमेव, तदभिप्रायादस्माभिरपि नोक्तमिति । अभवेऽभव्ये, मिथ्यात्वद्विके मिथ्यात्वे सास्वादने ( च ) पञ्चोपयोगा अज्ञानत्रिकदर्शनद्विकरूपा न शेषा, अवदातसम्यक्त्वविरत्यभावा दिति ॥ ३२ ॥

**केवलदुगे नियदुगं नव तिअनाण विणु खइयअहखाए। दंसणनाणतिगं देसि मीसि अन्नाण मीस त ३३**

टीका–केवलद्विके केवलज्ञानकेवलदर्शनलक्षणे निजद्विकं केवलज्ञानकेवलदर्शनरूपमुपयोगद्विकं भवति, न शेषा दश, ज्ञानदर्शनव्यवच्छेदेनैव केवलयुगलस्य सद्भावात्, "नट्ठंमि उ छाउमत्थिए नाणे" इति वचनात् । तथा क्षायिके सम्यक्त्वे यथाख्याते च संयमे नवोपयोगा भवन्ति । के त इत्याह–अज्ञानत्रिकं मतिश्रुताज्ञानविभङ्गज्ञानलक्षणं विना। यतः क्षायिकयथाख्यातयोरज्ञानत्रिकं न भवत्येव, तस्य मिथ्यात्वनिबन्धनत्वात्, निर्मूलतो मिथ्यात्वक्षयेणोपशमेन च क्षायिकसम्यक्त्वयथाख्यातोत्पादात्, अत एव तयोर्नवैवोपयोगा भवन्ति । तथा देशे देशविरते षडुपयोगा भवन्ति। कथमित्याह–दर्शनज्ञानत्रिकं, त्रिकशब्दस्य प्रत्येकं संबन्धः, दर्शनत्रिकं चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनरूपं, ज्ञानत्रिकं मतिश्रुतावधिज्ञानरूपमिति, न शेषाः, मिथ्यात्वसर्वविरत्यभावात् । मिश्रे तदेव दर्शनज्ञानत्रिकमज्ञानमिश्रं द्रष्टव्यं, मतिज्ञानं मत्यज्ञानमिश्रं, श्रुतज्ञानं श्रुताज्ञानमिश्रं, अवधिज्ञानं विभङ्गज्ञानमिश्रं, दर्शनत्रिकं चेति मिश्रेऽपि षडुपयोगाः सिद्धा भवन्ति ।

इह चावधिदर्शनमागमाभिप्रायेणोच्यतेऽन्यथा एतेष्वेव मार्गणास्थानेषु गुणस्थानकमार्गणायां "अजयाइ नव मइसुअ-
हिदुगे" इत्युक्तमिति ॥ ३३ ॥

**मणनाणचक्खुवज्जा अणहारि तिन्नि दंसण चउनाणा । चउनाणसंजमोवसमवेयगे ओहिदंसे य ॥३४॥**

टीका—मनःपर्यायज्ञानचक्षुर्दर्शनवर्जाः शेषा दशोपयोगा अनाहारके भवन्ति । यत्तु मनःपर्यवज्ञानचक्षुर्दर्शनं तच्चानाहारके न संभवति, यतोऽनाहारको विग्रहगतौ केवलिसमुद्घातावस्थायां च, न च तदानीं मनःपर्यायज्ञानचक्षुर्दर्शनसंभव इति । तथा त्रीणि दर्शनानि चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनरूपाणि, चत्वारि ज्ञानानि मतिश्रुतावधिमनःपर्यायलक्षणानीत्येवं सप्तोपयोगा भवन्ति । क्वेत्याह—चतुःशब्दस्य प्रत्येकं संबन्धाच्चतुर्षु ज्ञानेषु मतिज्ञानश्रुतज्ञानावधिज्ञानमनःपर्यायज्ञानेषु । तथा चतुर्षु संयमेषु सामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसंपरायेषु, औपशमिके सम्यक्त्वे, वेदके क्षायोपशमिकापरपर्याये, अवधिद्विकेऽवधिज्ञानावधिदर्शनरूपे, 'चः' समुच्चये । न शेषास्तत्सद्भावे मत्यज्ञानादीनामसंभवात् । इहाप्यवधिदर्शने मत्यज्ञानाद्युपयोगप्रतिषेधो बहुश्रुताचार्याभिप्रायापेक्षया द्रष्टव्योऽन्यथा हि मत्यज्ञानादिमतामपि सूत्रे साक्षादवधिदर्शनं प्रतिपादितमेव, प्रज्ञप्तिसूत्रं च प्रागेवोक्तमिति ॥ ३४ ॥

उक्ता मार्गणास्थानेषूपयोगाः, अथ योगेषु जीवगुणस्थानकयोगोपयोगानधिकृत्य मतान्तरमाह—

**दो तेर तेर बारस मणे कमा अट्ठ दु चउ चउ वयणे । चउ दु पण तिन्नि काए जियगुणजोगोवओगन्ने ॥३५॥**

टीका—अन्ये त्वाचार्याः 'मणि त्ति' मनोयोगे द्वे जीवस्थानके, त्रयोदशगुणस्थानकानि, त्रयोदश योगाः, द्वादशोपयोगा

ऽतीत्र क्रमेण यथासङ्ख्यमित्यर्थ । अत्रायमभिप्राय –प्राग्योगान्तरसहितोऽसहितो वा स्वरूपमात्रेणैव काययोगादिर्विवक्षितस्तेन तत्र यथोक्तगुणस्थानकादिवक्तव्यता सर्वाप्युपपद्यते। इह तु काययोगादिर्योगान्तरविरहित एव विवक्ष्यते। यथा मनोयोगवाग्योगविरहित काययोग, मनोयोगविरहितो वाग्योग । ततो मनोयोगे द्वे अन्तिमे जीवस्थानके, अयोगिकेवलिवर्जितानि त्रयोदश गुणस्थानानि, कार्मणौदारिकमिश्रवर्जितास्त्रयोदश योगा, कार्मणौदारिकमिश्रौ हि काययोगावपर्याप्तावस्थाया केवलिसमुद्घातावस्थाया वा । न च तदानी मनोयोगो, अपर्याप्तावस्थाया मनस एवाभावात्, केवलिसमुद्घातावस्थाया तु प्रयोजनाभावात् । उक्त च–"मनोवचसी तु तदा सर्वथा न व्यापारयति, प्रयोजनाभावात्" । तथा वचने मनोयोगविरहिते वाग्योगे क्रमादष्टौ जीवस्थानानि पर्याप्तापर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपचेन्द्रियरूपाणि, द्वे गुणस्थाने मिथ्यात्वसासादनलक्षणे, चत्वारो योगा कार्मणौदारिकमिश्रौदारिकासत्यामृषावाग्योगरूपा, चत्वार उपयोगा मत्यज्ञानश्रुताज्ञानचक्षुर्दर्शनाचक्षुर्दर्शनलक्षणा । वाग्योगो हि मनोयोगविरहितस्वभावो द्वीन्द्रियादिष्वेवासंज्ञिपचेन्द्रियपर्यन्तेषु सम्भवति नान्येषु। ततो यथोक्तान्येव जीवस्थानकादीनि तत्र सम्भवन्ति नोनाधिकानि । तथा केवलकाययोगे चत्वारि पर्याप्तापर्याप्तसूक्ष्मबादरैकेन्द्रियलक्षणानि जीवस्थानकानि, द्वे आद्ये गुणस्थानके मिथ्यादृष्टिसासादनलक्षणे, पच योगा वैक्रियद्विकौदारिकद्विककार्मणरूपा, त्रय उपयोगा मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनस्वरूपा । केवलकाययोगो हि एकेन्द्रियेष्वेवावाप्यते, तत्र जीवस्थानकादीनि यथोक्तान्येव घटन्त इति ॥ ३५ ॥

अभिहितं योगेष्वेकीयमतं, सांप्रतं मार्गणास्थानेषु लेश्या अभिधित्सुराह–

**छसु लेसासु सठाणं एगिंदि असंनिभूदगवणेसु । पढमा चउरो तिन्नि उ नारयविगलग्गिपवणेसु ॥३६॥**

टीका–षड्लेश्यासु स्वस्थानं स्वाः स्वा लेश्या भवन्ति, यथा कृष्णलेश्यायां कृष्णलेश्येत्यादि । सामान्यत एकेन्द्रियेषु, असंज्ञि (नि) भूदकवनेषु पृथिव्यंबुवनस्पतिषु प्रथमाः कृष्णनीलकापोततेजोलेश्याश्चतस्रो भवन्ति, भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवा हि स्वस्वभवच्युता एतेषु मध्ये समुत्पद्यन्ते, ते च तेजोलेश्यावन्तः, जीवश्च यल्लेश्य एव म्रियते अग्रेऽपि तल्लेश्य एवोत्पद्यते "जल्लेसे मरइ तल्लेसे उववज्जइ" इति वचनात् । तत एतेषामपर्याप्तावस्थायां कियत्कालं तेजोलेश्या भवति । नारकेषु, विकलेषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु, अग्निषु तेजस्कायेषु, पवनेषु वायुकायिकेषु, प्रथमास्तिस्रः कृष्णनीलकापोतलेश्या भवन्ति नान्याः, प्रायोऽमीषामप्रशस्ताध्यवसायस्थानोपेतत्वात् ॥ ३६ ॥

**अहखायसुहुमकेवलदुगि सुक्का छावि सेसठाणेसु । नरनिरयदेवतिरिया थोवा दु असंखणंतगुणा ॥३७॥**

टीका–यथाख्यातसंयमे, सूक्ष्मसंपरायसंयमे च, केवलद्विके केवलज्ञानकेवलदर्शनरूपे शुक्ललेश्यैव न शेषलेश्याः, यथाख्यातसंयमादावेकान्तविशुद्धपरिणामभावात्तस्य च शुक्ललेश्याऽविनाभूतत्वात् । शेषस्थानेषु सुरगतौ तिर्यग्गतौ पंचेन्द्रियत्रसकाययोगत्रयवेदत्रयकषायचतुष्टयमतिज्ञानश्रुतज्ञानावधिज्ञानमनःपर्यायज्ञानमत्यज्ञानश्रुताज्ञानविभंगज्ञानसामायिकछेदोपस्थापनपरिहारविशुद्धिकदेशविरताविरतचक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनभव्याभव्यक्षायिकक्षायोपशमिकौपशमिकसा-

स्वाटनमिश्रमिथ्यात्वसङ्याहारकानाहारकलक्षणैकचत्वारिंशत्तु शेषमार्गणास्थानकेषु पऋपि लेश्या । उक्ता मार्गणास्थानेषु लेश्या, इदानीं मार्गणास्थानेषु स्वस्थानापेक्षयाऽल्पबहुत्व निरूपयिषुराह–'नरनिरयेत्यादि'। इह यथासख्येन योजना कर्तव्या, सा चैव–नरा निरयदेवतिर्यग्योनिन्य' सकाशात् स्तोका । यत इह द्विविधा नराः, वान्तपित्तादिजन्मान सम्मूर्छजा' स्त्रीगर्भोत्पन्ना गर्भजाश्च । तत्राद्या कदाचिन्न भवन्त्येव, जघन्यत समयस्योत्कृष्टतस्तु चतुर्विंशतिमुहूर्ताना तदन्तरकालस्य प्रतिपादितत्वात् । यदाह सदेहसदोहशैलशृंगभञ्जनदम्भोलिर्भगवाञ्जिनभद्रगणिक्षमाश्रमण –"बारसमुहुत्त गब्भे उक्कोम समुच्छिमेसु चउवीस । उक्कोसविरहकालो दोसु वि य जहन्नओ समओ ॥ १ ॥" उत्पन्नाना तु जघन्यत उत्कृष्टतश्चान्तर्मुहूर्तस्थितिकत्वेन परत सर्वेषा निर्लेपत्वसम्भवाद्यदा तु भवन्ति तदा जघन्यत एकौ द्वौ त्रयो वा, उत्कृष्टतस्त्वसख्याता' । इतरे तु सर्वदैव सख्येया भवन्ति नासख्येयाः, तत्र सख्येयकस्य सख्यातभेदत्वान्न ज्ञायते कियदपि सख्येयकमतो विशेषत इद प्ररूप्यते । इह षष्ठवर्ग पचमवर्गेण यदा गुणितो भवति, तदा गर्भजमनुष्यसख्या भवति । अथ कोऽय षष्ठो वर्ग कश्च पचम इत्येतदुच्यते–विवक्षित कश्चिद्राशिस्तेनैव राशिना यत्र गुण्यते स तावद्वर्ग, तत्रैकस्य वर्ग एव न भवत्यतो वृद्धिरहितत्वादेष वर्ग एव न गण्यते । द्वयोस्तु वर्गश्चत्वारो भवन्त्येष प्रथमो वर्ग । चतुर्णा वर्ग

१ ( सा चेक्ये द्वन्द्वमेययोरित्येकचत्वारिंशतीति भाव्य भविष्यत्यपि तथापि लेखकेन पडितमन्येन वा केनाप्येतदकित लक्ष्यते )
२ गर्भे द्वादश मुहूर्ता सम्मूर्छजेषु चतुर्विंशतिरुत्कर्षतो विरहकाल द्वयोरपि च जघन्यत समय ॥ १ ॥

षोडशेति द्वितीयो वर्गः । षोडशानां वर्गो द्वे शते षट्पंचाशदधिके तृतीयो वर्गः । अस्य राशेर्वर्गः पंचषष्टिः सहस्राणि पंच शतानि षट्त्रिंशदधिकानि चतुर्थो वर्गः ६५५३६ । अस्य राशेर्वर्गः सार्धगाथया प्रोच्यते–“चत्तारि य कोडिसया अउणतीसं च हुंति कोडीउ । अउणावन्नं लक्खा सत्तट्ठिं चेव य सहस्सा ॥ १ ॥ दो य सया छन्नउया पंचमवग्गो इमो विणिद्दिट्ठो । ” अंकस्थापना–४२९४९६७२९६ । अस्यापि राशेर्वर्गो गाथात्रयेण प्रतिपाद्यते–“लक्खं कोडाकोडी चउरासीई भवे सहस्साइं । चत्तारि य सत्तट्ठी हुंति सया कोडिकोडीणं ॥ १ ॥ चोयालं लक्खाइं कोडीणं सत्तचेव य सहस्सा । तिन्नि य सया य सयरी कोडीणं हुंति नायव्वा ॥ २ ॥ पंचाणउई लक्खा एगावन्नं भवे सहस्साइं । छस्सोलसुत्तरसया एसो छट्ठो हवइ वग्गो ॥ ३ ॥ ”–१८४४६७४४०७३७०९५५१६१६ । तदयं षष्ठो वर्गः पूर्वोक्तेन पंचमवर्गेण गुण्यते, तथा च सति या संख्या भवति तस्यां जघन्यपदिनो गर्भजमनुष्या वर्तन्ते । सा चेयम्–७९२२८१६२५१४२६४३३७५९३५४३९५०३३६ । अयं च राशिः कोटिकोट्यादिप्रकारेण केनाप्यभिधातुं न शक्यतेऽतः पर्यन्तादारभ्यांकमात्रसंग्रहार्थं गाथाद्वयं–“छग तिन्नि तिन्नि सुन्नं पंचेव य नव य तिन्नि चत्तारि । पंचेव तिन्नि नव पंच सत्त तिन्नेव तिन्नेव ॥ १ ॥ चउ छ दो चउ इक्को पण दो छक्किक्कगो य अट्ठेव । दो दो नव सत्तेव य अंकट्ठाणा परा हुंति ॥ २ ॥ ” तदेवमेतेष्वेकोनत्रिंशदंकस्थानेषु जघन्यपदिनो गर्भजमनुष्या वर्तन्ते । उक्तं चानुयोगद्वारेषु–“[1]जहन्नपए संखिज्जाउ कोडाकोडीउ” । तदेवं जघन्यपदिनो मनुष्याः, उत्कृष्टपदिनस्त्वसंख्याताः । उक्तं चानुयोगद्वारसूत्रे–“उक्कोसपए असंखिज्जा

१ जघन्यपदे संख्येयाः कोटिकोटिकोट्यः ।

असंखिज्जाहिं उस्सप्पिणीओसप्पिणीहि अवहीरंति कालओ, खित्तओ, उक्कोसपए रूवपक्खित्तेहिं मणुस्सेहिं सेढी अवहीरइ असंखेज्जाहिं अवसप्पिणीहिं उस्सप्पिणीहिं कालओ खित्तओ अंगुलपढमवग्गमूलं तइयवग्गमूलपडुप्पन्नं"। अस्येयमक्षरगमनिका–उत्कृष्टपदे मनुष्या असंख्येयोत्सर्पिण्यवसर्पिणीसमयराशितुल्याः। क्षेत्रतस्त्वेकस्मिन्मनुष्यरूपे प्रक्षिप्ते मनुष्यरूपैरेका नभःप्रदेशश्रेणिरपह्रियते। कियता कालेनेत्याह–असंख्येयोत्सर्पिण्यवसर्पिणीभिः। कियता क्षेत्रखण्डापहारेणेत्याह–'अंगुलपढमवग्गमूलं तइयवग्गमूलपडुप्पन्नं ति' श्रेणेरंगुलप्रमाणक्षेत्रे यः प्रदेशराशिस्तस्य यत्प्रथमं वर्गमूलं तृतीयवर्गमूलप्रदेशराशिना गुण्यते, गुणिते च यः प्रदेशराशिर्भवति, तत्प्रमाणं क्षेत्रखण्डमेकैकं रूपमपहरति। अयमर्थः—इह किलांगुलप्रमाणक्षेत्रे नभःप्रदेशराशिः सद्भावतोऽसंख्येयप्रदेशपरिमाणोऽप्यसत्कल्पनया षट्पञ्चाशदधिकशतद्वयपरिमाणः कल्प्यते। अत्र प्रथमं वर्गमूलं षोडश। द्वितीयं वर्गमूलं चत्वारि। तृतीयं वर्गमूलं द्वे। तत्र प्रथमवर्गमूलं षोडशलक्षणं तृतीयवर्गमूलेन गुणितं जाता द्वात्रिंशत्, एवमेते नभःप्रदेशाः सद्भावतोऽसंख्येया अप्यसत्कल्पनया द्वात्रिंशत्संख्याः परिग्राह्याः। ततः श्रेणेर्मध्याद्यथोक्तप्रमाणं द्वात्रिंशत्प्रदेशप्रमाणमित्यर्थः क्षेत्रखण्डं यद्येकैकं मनुष्यरूपं क्रमेण प्रतिसमयमपहरति तदाऽसंख्येयोत्सर्पिण्यवसर्पिणीभिः सर्वापि श्रेणिरपह्रियते यद्येकं मनुष्यरूपं स्यात्, तच्च नास्ति सर्वोत्कृष्टानामपि समुदितगर्भजसमूर्छजमनुष्याणामेतावतामेव भावात्। इदमुक्तं भवति–उत्कृष्टपदवर्तिभिरपि सर्वतः सप्तरज्जुप्रमाणस्य घनीकृतस्य लोकस्यैकैकप्रदेशपङ्क्तिरूपं श्रेणिमात्रमपि अंगुलमात्रक्षेत्रप्रदेशराशिसम्बन्धितृतीयवर्गमूलगुणितप्रथमवर्गमूलप्रदेशप्रमाणैरसत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणांगुलमात्रक्षेत्रप्रदेशराशिसम्बन्धिद्विकलक्षणतृतीयवर्गमूलगुणितषोडश-

कलक्षणप्रथमवर्गमूललब्धद्वात्रिंशत्प्रदेशप्रमाणैराकाशखंडैर्मनुष्यरूपस्थानीयैरपह्रियमाणमपि नापह्रियते, एकरूपहीनत्वात् । यदि पुनरेकं रूपमन्यत् स्यात्ततः सकलापि श्रेणिरपह्रियते, कालतश्च प्रतिसमयमेतावत्प्रमाणैरप्याकाशखंडैरपह्रियमाणा श्रेणिरसंख्याताभिरुत्सर्पिण्यवसर्पिणीभिर्निःशेषतोऽपह्रियते, कालतः सकाशात् क्षेत्रस्यात्यन्तसूक्ष्मत्वात् । उक्तं च–"उक्कोसपए जे मणुस्सा हवंति तेसु इक्कंमि मणुयरूवे पक्खित्ते समाणे तेहिं मणुस्सेहिं सेढी अवहीरइ । तीसे य सेढीए कालखित्तेहिं अवहारो मग्गिजइ कालओ ताव असंखिज्जाहिं उसप्पिणीउस्सप्पिणीहिं खित्तओ अंगुलपढमवग्गमूलं तइयवग्गमूलपडुप्पन्नं किं भणियं तीसे सेढीए अंगुलायए आगासखंडे जो पएसरासी तस्स जं पढमवग्गमूलपएसरासिमाणं तंमि तइयवग्गमूलपएसरासिपडुप्पाइए समाणे जो पएसरासी हवइ एवइएहिं खंडेहिं अवहीरमाणो अवहीरमाणो जाव निट्ठाइ ताव मणुस्सा वि अवहीरमाणा अवहीरमाणा निट्ठंति । आह कहमेगाए

---

१ उत्कर्षपदे ये मनुष्या भवन्ति तेष्वेकस्मिन्मनुष्यरूपे प्रक्षिप्ते सति तैर्मनुष्यैः श्रेणिरपह्रियते । तस्याश्च श्रेणेः कालक्षेत्राभ्यां अपहारः क्रियते । कालतस्तावदसंख्याभिरवसर्पिण्युत्सर्पिणीभिः क्षेत्रतोऽगुलप्रथमवर्गमूलं तृतीयवर्गमूलगुणितं । किं भणितं ? तस्याः श्रेणेरंगुलायते आकाशखंडे यः प्रदेशराशिः तस्य यत्प्रथमवर्गमूलप्रदेशराशिमानं तस्मिस्तृतीयवर्गमूलप्रदेशराशिगुणिते सति यः प्रदेशराशिर्भवति । एतावद्भिः खंडैरपह्रियमाणः २ यावन्निष्ठांयाति तावन्मनुष्या अपि अपह्रियमाणाः २ निष्ठां यांति । आह कथमेकस्याः श्रेण्यास्तावन्मात्रैः खंडैरपह्रियमाणा २ असंख्याभिरवसर्पिण्युत्सर्पिणीभिरपह्रियते । आहाचार्यः क्षेत्रस्य सूक्ष्मत्वात् । सूत्रेऽपि यद्भणितं "सूक्ष्मश्च भवति कालस्ततः सूक्ष्मतरकं भवति क्षेत्रम् । अंगुलश्रेणिमात्रेऽसंख्याता अवसर्पिण्यः ॥ १ ॥

सेढीए तद्दमित्तेहिं खमेहिं अवहीरमाणी अवहीरमाणी असखेज्जाहिं उसप्पिणीहिं उस्सप्पिणीहिं अवहीरइ । आयरिउ आह–खेत्तस्स सुहुमत्तणउ सुत्ते वि ज जणियं–सुहुमो य होइ कालो तत्तो सुहुमयरय हवइ खित्त । अगुलसेढीमित्ते उसप्पिणीउ असखिज्ज त्ति ॥ १ ॥" अतो निरयादिभ्य सकाशात् स्तोका नरा', तेभ्यो नारका असख्येयगुणा' । यत एवमनुयोगद्वारेषु नारकपरिमाणमुपदर्श्यते–"नेरइयाणं भंते केवइया वेउव्वियसरीरा पन्नत्ता ? गोयमा । दुविहा पन्नत्ता, त जहा–बद्धिल्लया मुक्किल्लया य, तत्थ ण जे ते बद्धिल्लया तेण असखेज्जा असखिज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरति कालउ खेत्तउ असखेज्जाउ सेढीउपयरस्स असखेज्जइभागो तासिण सेढीण विक्खभसूई अगुलपढमवग्गमूल बीयवग्गमूल पडुप्पन्न अहवण अगुलबिइयवग्गमूलघणपमाणमित्ताउ सेढीउ" अस्येयमक्षरगमनिका–नारकाणा बद्धानि वैक्रियशरीराण्यसख्येयानि प्रतिनारकमेकैकवैक्रियसद्भावान्नारकाणा चासख्येयत्वात्तानि च कालतोऽसख्येयोत्सर्पिण्यवसर्पिणीसमयराशितुल्यानि। क्षेत्रतस्तु प्रतरासख्येयभागवर्त्यसख्येयश्रेणीना ये प्रदेशास्तत्सख्यानि भवन्ति। ननु प्रतरासख्येयभागेऽसख्येय योजनकोटयोऽपि भवन्ति तत्किमेतावत्यपि क्षेत्रे या नभ श्रेणयो भवन्ति ता इह गृह्यन्ते ? नेत्याह–'तासिण सेढीण विक्खभसूई' इत्यादि, तासा श्रेणीना विष्कम्भसूचिर्विस्तरश्रेणिर्ग्राह्येति शेष । कियतीत्याह–'अगुलेत्यादि' अगुलप्रमाणे प्रतरक्षेत्रे य श्रेणिराशिस्तत्र किलासख्येयानि वर्गमूलान्युत्तिष्ठन्ति, अत प्रथमवर्गमूल द्वितीयवर्गमूलेन प्रत्युत्पन्न गुणित तथा च यावन्त्योऽत्र श्रेणयो लब्धा एतावत्प्रमाणश्रेणीना विष्कम्भसूचिर्भवति एतावत्य श्रेणयोऽत्र गृह्यन्त इत्यर्थ' । इदमुक्तं भवति–अगुलप्रमाणे प्रतरक्षेत्रे किलासत्कल्पनया षट्पचाशदधिके द्वे शते श्रेणीना भवत । तद्यथा २५६ । अत्र प्रथम

वर्गमूलं १६ । द्वितीयं ४ । चतुर्भिश्च षोडश गुणिता जाता चतुःषष्टिः ६४ । एषा चतुःषष्टिरपि सद्भावतोऽसंख्येयाः श्रेणयो मन्तव्याः । एतावत्संख्यश्रेणीनां विस्तरसूचिरिह ग्राह्या । अथवा 'णं' इति वाक्यालंकारे, अयं द्वितीयः प्रकारः प्रस्तुतार्थविषये । तथाहि—'अंगुलबिइयवग्गमूलघणेत्यादि' अंगुलप्रमाणप्रतरक्षेत्रवर्तिश्रेणिराशेर्यद्द्वितीयवर्गमूलमनन्तरं चतुष्टयरूपं दर्शितं तस्य यो घनश्चतुःषष्टिलक्षणस्तत्प्रमाणाः श्रेणयोऽत्र गृह्यन्त इति प्ररूपणैव भिद्यतेऽर्थतस्तु स एव । इदमत्र तात्पर्यम्—सप्तरज्जुप्रमाणस्य घनीकृतस्य लोकस्य या ऊर्ध्वाधआयता एकप्रादेशिक्यः श्रेणयोऽङ्गुलमात्रक्षेत्रप्रदेशराशिगतद्वितीयवर्गमूलघनप्रदेशराशिप्रमाणास्तासां यावान् प्रदेशराशिस्तावत्प्रमाणा नारकाः, अतस्ते नरेभ्योऽसंख्यातगुणाः। एतेभ्योऽपि देवा असंख्यातगुणाः । कथमिति चेदुच्यते—देवा हि भवनपत्यादिभेदेन चतुर्धा, भवनपतयोऽसुरादिभेदेन दशविधाः । तत्रासुरकुमारा अपि तावद्घनीकृतस्य लोकस्य या ऊर्ध्वाधआयता एकप्रादेशिक्यः श्रेणयोऽङ्गुलमात्रक्षेत्रगतप्रदेशराशिसंबन्धिप्रथमवर्गमूलासंख्येयभागगतप्रदेशराशिप्रमाणास्तासां संबन्धी यावान् प्रदेशराशिस्तावत्संख्याकाः, एवं नागकुमारादयोऽपि द्रष्टव्याः । तथा संख्येययोजनप्रमाणाकाशप्रदेशसूचिरूपैः खंडैर्यावद्भिर्घनीकृतस्य लोकस्य मंडकाकारः प्रतरोऽपह्रियते तावत्प्रमाणा व्यन्तराः । उक्तं च—"संखेज्जजोयणाणं सूईपएसेहिं भाइयं पयरं । वंतरसुरेहिं हीरइ एवं एक्केक्कभेएणं ॥ १ ॥" अस्याक्षरगमनिका—संख्येययोजनप्रमाणा सूचिरेकप्रदेशिका पंक्तिस्तत्प्रदेशैः संख्येययोजनप्रमाणैकप्रादेशिकपंक्तिप्रदेशैरिति यावत् । भक्तं प्रतरं व्यन्तरसुरैरपह्रियते तावद्भागलब्धराशिप्रमाणा व्यन्तरसुरा इत्यर्थः। इयमत्र भावना—संख्येययोजनप्रमाणसूचिप्रदेशाः किलासत्कल्पनया दश, प्रतरप्रदेशाश्च लक्षं, ततो दशभिर्भागे हृते लब्धा

सहस्रा दश एतावन्त इत्यर्थ । एवमुक्तेन प्रकारेण प्रतिनिकाय व्यन्तराणा भावना कार्या । न चैव सर्वसमुदायपरिमाणनियमव्याघातप्रसग , सूचिप्रमाणहेतुयोजनसख्येयत्वस्य वैचित्र्यादिति । तथा षट्पञ्चाशदधिकशतद्वयाङ्गुलप्रमाणैराकाशप्रदेशसूचिरूपै खण्डैर्यावद्भिर्यथोक्तस्वरूप प्रतरमपह्रियते तावत्प्रमाणा ज्योतिष्का देवा । उक्त च—"[1]छप्पन्नदोसयगुलसूइपएसेहि भाइय पयर । जोइसिएहिं हीरइ" इति । अत एवोक्त "[2]वाणमतरेहितो सखेज्जगुणा जोइसि त्ति" । तथा वैमानिका देवा घनीकृतस्य लोकस्य ऊर्ध्वाधआयता एकप्रादेशिक्य श्रेण्योऽङ्गुलमात्रक्षेत्रप्रदेशराशिसम्बन्धितृतीयवर्गमूलघनप्रमाणास्तासा यावान् प्रदेशराशिस्तावत्प्रमाणा अत सकलभवनपत्यादिसमुदायापेक्षया चिन्त्यमाना देवा नारकेभ्योऽसख्यातगुणा एव । तेभ्योऽपि च देवेभ्यस्तिर्यञ्चोऽनन्तगुणा । तत्रानन्तसख्योपेतस्य वनस्पतिकायस्य सद्भावात् । उक्त च— "[3]एएसि ण भते नेरइयाण तिरिक्खजोणियाण मणुस्साण देवाण सिद्धाण य कयरे कयरेहि तो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सव्वथोवा मणुस्सा, नेरइया असखेज्जगुणा, देवा असखेज्जगुणा, सिद्धा अणतगुणा, तिरिक्ख-

---

१ षट्पञ्चाशदधिकशतद्वयेन भक्त प्रतरो ज्योतिष्कैरपह्रियते । २ व्यतरेभ्यो ज्योतिष्का सख्येयगुणा । ३ एतेषा भदन्त नैरयिकाणा तिर्यग्योनिकाना मनुष्याणा देवाना सिद्धाना च कतरे केभ्योऽल्पे वा बहुका वा तुल्या वा विशेषाधिका वा ? गौतम सर्वस्तोका मनुष्या, नैरयिका असख्यगुणा देवा असख्यगुणा सिद्धा अनतगुणा तिर्यग्योनिका अनतगुणा ।

जोणिया अणंतगुणा ”। तथा– “थोवा नरा नरेहि य असंखगुणिया हवंति नेरइया। तत्तो सुरा सुरेहि य सिद्धा णंता तओ तिरिया ॥ १ ॥” इति ॥ ३७ ॥

उक्तं गतिष्वल्पबहुत्वं, सांप्रतमिन्द्रियद्वारे कायद्वारे तदभिधित्सुराह–

**पण चउ ति दु एगिंदी थोवा तिन्नि अहिया अणंतगुणा।**
**तस थोव असंखग्गी भूजलनिलअहियवण णंता ॥ ३८ ॥**

टीका–पंचेन्द्रियाश्चतुरिन्द्रियादिभ्यः स्तोकाः, तेभ्यश्चतुरिन्द्रिया अधिका विशेषाधिकाः, तेभ्यस्त्रीन्द्रिया विशेषाधिकाः, तेभ्यो द्वीन्द्रिया विशेषाधिकाः। तत्र च यद्यपि घनीकृतस्य लोकस्योर्ध्वाधआयता एकप्रदेशिक्यः श्रेण्योऽसंख्याततयोजनकोटाकोटीप्रमाणाकाशप्रदेशसूचिगतप्रदेशराशिप्रमाणास्तासां यावान् प्रदेशराशिस्तावत्प्रमाणा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यग्योनिपंचेन्द्रिया अविशेषेण सूत्रे निर्दिष्टाः। तथा चोक्तं तत्र यथोक्तरूपद्वीन्द्रियपरिमाणाभिधानानन्तरम्–“जेह बेइंदियाणं तहा तेइंदियाणं चउरिंदियाणं वि भाणियव्वं पंचिंदियतिरिक्खजोइयाण वि त्ति” तथापि सूचिपरिमाणहेतुयोजनगतासंख्यातरूपसंख्याया बहुभेदत्वान्न यथोक्तविशेषाधिकत्वाभिधानव्याघातः, अत एव च हेतोस्तिर्यग्योनिपंचेन्द्रि-

---

१ स्तोका नरा नरेभ्यश्चासंख्येयगुणा नैरयिकाः। ततः सुराः सुरेभ्यश्च सिद्धा अनन्तास्ततश्च तिर्यंचः। १। २ यथा द्वीन्द्रियाणां तथा त्रीन्द्रियाणां चतुरिन्द्रियाणामपि भणितव्यं पंचेन्द्रियतिर्यग्योनिकानामपि।

येषु द्वीन्द्रियादितुल्यतया सूत्रेऽभिहितेभ्योऽपि तत्रापि नरनिरयदेवमध्येऽपि पञ्चेन्द्रियाश्चतुरिन्द्रियादिभ्य स्तोका एव द्रष्टव्या । यदभ्यधायि–"प ंचिंदिया य थोवा विवज्जएण वियला विसेसहिया" द्वीन्द्रियेभ्योऽपि चैकेन्द्रिया अनन्तगुणा, वनस्पतिकायजीवराशेरनतानन्तत्वात् । यदुक्तमार्ये –"एएसि ण भंते एगिंदियबेंदियतेइंदियचउरिंदियपचिंदियाण कयरे कयरेहिंतो अप्पा वा बहुआ वा ? गोयमा ! सव्वथोवा पंचिंदिया, चउरिंदिया विसेसाहिया, तेंदिया विसेसाहिया, बेइंदिया विसेसाहिया, एगिंदिया अणतगुणे तस थोव" इत्यादि । त्रसा द्वीन्द्रियादय· पूर्वनिर्दिष्टसख्यास्तेजस्कायिकादिभ्य स्तोका । तेभ्यस्त्रसेभ्योऽसख्यातगुणा 'अग्गि त्ति' अग्निकायिकास्तेषा सूक्ष्मबादरभेदभिन्नानामसख्येयलोकाकाशप्रदेशराशिप्रमाणत्वात् । तेभ्यो 'भू त्ति' पृथिवीकायिका विशेषाधिका· । तेभ्यो 'जल त्ति' अप्कायिका विशेषाधिका· । तेभ्य 'अनिल त्ति' वायुकायिका विशेषाधिका । यद्यपि चैतेषामपि पृथिवीकायिकादीनामसख्येयलोकाकाशप्रदेशराशिप्रमाणतया सूत्रेऽविशेषेण निर्देश कृत, तथा चोक्तम्–"जहा पुढविकाइयाण एव आउकाइयाण पि" इत्यादि, तथापि लोकानामसख्याततत्वस्यानेकभेदभिन्नत्वादिहैव विशेषाधिकत्वाभिधानेऽपि न कश्चिद्दोषः । उक्त च श्रीप्रज्ञापनायाम्–

---

१ पञ्चेन्द्रियाश्च स्तोका विपर्ययेण विकला विशेषाधिका । २ एतेषा भदन्तैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियाणा कतरे कतरेभ्योऽल्पा वा बहुका वा ? गौतम सर्वस्तोका पञ्चेन्द्रिया, चतुरिन्द्रिया विशेषाधिका, त्रीन्द्रिया विशेषाधिका, द्वीन्द्रिया विशेषाधिका, एकेन्द्रिया अनन्तगुणा, त्रसा स्तोका । ३ यथा पृथ्वीकायिकानामेवमप्कायिकानामपि ।

"एएसि णं भंते तसकाइयाणं पुढविकाईयाणं आउकाईयाणं तेउकाईयाणं वाउकाइयाणं वणस्सइकाइयाणं अकाइयाण य कयरे कयरेहिं तो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सव्वत्थोवा तसकाइया, तेउकाइया असंखिज्जगुणा, पुढविकाइया विसेसाहिया, आउकाईया विसेसाहिया, वाउकाईया विसेसाहिया, अकाईया अणंतगुणा, वणस्सइकाईया अणंतगुणा"। अन्यत्राप्युक्तम्–"थोवा य तसा तत्तो तेउ असंखा तउ विसेसहिया। कमसो भूदगवाऊअकायहरिया अणंतगुणा ॥ १ ॥" 'अकाय त्ति' सिद्धाः। तेभ्यो वायुकायिकेभ्यो 'वणणंत त्ति' वनस्पतिकायिकानामिति ॥ ३० ॥

संप्रति योगेषु वेदेषु अल्पत्वं बहुत्वं प्रचिकटयिषुराह–

**मणवयणकायजोगा थोवा असंखगुण अणंतगुणा। पुरिसा थोवा इत्थी संखगुणाणंतगुण कीवा ॥ ३१ ॥**

टीका–मनोयोगिनः स्तोकाः संज्ञिपंचेन्द्रियाणामेव मनोयोगित्वात्। तेभ्यो वाग्योगिनोऽसंख्यातगुणाः, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपंचेन्द्रियाणां वाग्योगिनां मनोयोगिभ्योऽसंख्यातगुणानां तत्र प्रक्षेपात्। वाग्योगिभ्योऽपि काययोगि-

---

१ एतेषां भदन्त त्रसकायिकानां पृथ्वीका० अप्का० तेजस्का० वायुका० वनस्पतिका० अकायिकानां च कतरे कतरेभ्योऽल्पा वा बहवो वा तुल्या वा विशेषाधिका वा ! गौतम सर्वस्तोकास्त्रसका० तेजस्का० असंख्यगुणाः, पृथ्वीका० विशेषाधिकाः, अप्का० वि० वायुका० वि० अका० अनन्तगुणाः, वनस्पतिका० अनन्तगुणाः। २ स्तोकास्त्रसास्ततश्च तेजस्का० असंख्यगुणास्ततः विशेषाधिकाः क्रमशो भूदकवायवो ऽकायवनस्पतिकायिका अनंतगुणाः।

नोऽनन्तगुणा, वनस्पतिकायिकानामप्यनन्तानां तत्र प्रक्षेपादिति । आह च– "एएसि ण भंते जीवाण सयोगीण मण-जोगीण वइजोगीण कायजोगीण अजोगीणय कयरे कयरेहितो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सव्वत्थोवा मणजोगी, वइजोगी असखेज्जगुणा, अजोगी अणंतगुणा, कायजोगी अणंतगुणा, सजोगी विसेसाहिया" । तथा रूयादिन्य पुरुषा स्तोका., तेभ्य. स्त्रिय सख्यातगुणाः उक्त च–"तिगुणा तिरूवअहिया तिरियाण इत्थिया मुणेयव्वा । सत्तावीसगुणा पुण मणुयाण तदहिया चेव ॥ १ ॥ बत्तीसगुणा बत्तीसरूवअहिया उ तह य देवाण । देवीउ पन्नत्ता जिणेहिं जियरागदोसेहिं ॥ २ ॥" स्त्रीभ्यश्च क्लीबा नपुसका अनन्तगुणा, अनन्तगुणता च वनस्पत्यपेक्षया द्रष्टव्या । उक्त च–"एएसि ण भंते जीवाण सवेयगाण इत्थीवेयगाण पुरिसवेयगाण नपुसकवेयगाण अवेयगाण य कयरे कयरेहितो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सव्वत्थोवा जीवा पुरिसवेयगा, इत्थीवेयगा सखेज्ज गुणा, अवेयगा अणतगुणा, नपुसगवेयगा अणतगुणा, सवेयगा विसेसाहिया ॥ २९ ॥

---

१ एतेषा भदन्त जीवाना सयोगिना मनोयोगिना वाग्योगिना काययोगिनामयोगिना च के केभ्योऽल्पा वा बहवो वा तुल्या वा विशेषाधिका वा ? गोतम सर्वस्तोका मनोयोगिनो वाग्योगिनोऽसख्यगुणा, अयोगिनोऽनन्तगुणा काययोगिनोऽनन्तगुणा, सयोगिनो विशेषाधिका । २ त्रिरूपाधिकत्रिगुणास्तिरश्चा स्त्रियो ज्ञातव्या । सप्तविंशत्यधिकसप्तविंशतिगुणा पुनर्मनुजाना ।१। द्वात्रिंशद्रूपाधिकद्वात्रिंशद्गुणास्तु तथा च देवेभ्यो देव्यो जितरागद्वेषैर्जिनै प्रज्ञप्ता । २ । ३ एतेषा भदन्त जीवाना स्त्री०पुरुष०नपुसक०अवेदाना च के केभ्योऽल्पा वा बहुका वा तुल्या वा विशेषाधिका वा ? गोतम सर्वस्तोका पुरुष०स्त्री०सख्येय०अवेदका. अनन्तगुणा. नपु०अनन्त०सवेदा विशेषाधिका ।

माणी कोही माई लोही अहिय मणनाणिनो थोवा। ओहि असंखा मइसुय अहिय सम असंख विब्भंगा॥४०

टीका– कषायद्वारे सर्वस्तोका मानिनः, मानपरिणामकालस्य क्रोधादिपरिणामकालापेक्षया सर्वस्तोकत्वात्। तेभ्यः क्रोधिनो विशेषाधिकाः, क्रोधपरिणामकालस्य मानपरिणामकालापेक्षया विशेषाधिकत्वात्। तेभ्योऽपि मायिनो विशेषाधिकाः, यद्भूयस्त्वेन जन्तूनां प्रभूतकालं मायाबहुलत्वात्। ततोऽपि लोभिनो विशेषाधिकाः, सर्वेषामपि प्रायः संसारिजीवानां सदा परिग्रहाद्याकांक्षासद्भावात्। उक्तं च–"एएसि णं भंते जीवाणं सकसाईणं कोहकसाईणं माणकसाईणं मायाकसाईणं लोभकसाईणं अकसाईण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा? गोयमा! सव्वत्थोवा जीवा अकसाई, माणकसाई अणंतगुणा, कोहकसाई विसेसाहिया, मायाकसाई विसेसाहिया, लोभकसाई विसेसाहिया, सकसाई विसेसाहिया"। ज्ञानद्वारे मनोज्ञानिनो मनःपर्यायज्ञानिनः शेषज्ञान्यपेक्षया स्तोकाः, तद्धि गर्भजमनुष्याणां तत्रापि संयतानामप्रमत्तानां विविधामर्षौषध्यादिलब्धियुक्तानामुपजायते। उक्तं च–"तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमओ" इत्यादि। ते च स्तोका एव, संख्यातत्वात्। तेभ्योऽसंख्येयगुणा अवधिज्ञानिनः, सम्यग्दृष्टिदेवादीनामप्यवधिज्ञानभावात् तेभ्योऽसंख्यातगुणत्वात्। ततोऽवधिज्ञानिभ्यो मतिज्ञानिनः श्रुतज्ञानिनो विशेषाधिकाः, अव-

---

१ एतेषां भदन्त सकषायाणां क्रोधक० मानक० मायाक० लोभ० अकषायाणांच के केभ्यः अल्पा बहवस्तुल्या विशेषाधिका वा? गौतम अकषायाः सर्वस्तोकाः, मानकषाया अनन्तगुणाः क्रोधक० विशे० मायाक० वि० लोभक० विशे० सकषाया विशेषाधिका;। २ तत्संयतस्य सर्वप्रमादरहितस्य विविधर्द्धिमतः।

धिज्ञानरहितसम्यग्दृष्टिनरतिर्यक्प्रक्षेपात्, एतौ च मतिज्ञानिश्रुतज्ञानिनौ स्वस्थाने चिन्त्यमानौ द्वावपि समौ तुल्यौ, मतिज्ञानश्रुतज्ञानयोः परस्परमनान्तरीयकत्वात्। यदाह भगवान् देवर्धिवाचक –"जत्थ मइनाण तत्थ सुयनाण जत्थ सुयनाण तत्थ मइनाण दो वि एयाइ अन्नुन्नमणुगयाइ ति"। तेभ्यश्च मतिज्ञानिश्रुतज्ञानिभ्यो विभङ्गज्ञानिनोऽसख्यातगुणा, मिथ्यादृष्टिसुरादीना विभङ्गज्ञानवता तेभ्योऽसख्यातगुणत्वादिति ॥ ४० ॥

**केवलिणो णतगुणा मइसुयअन्नाणि णंतगुण तुल्ला। सुहुमा थोवा परिहार संख अहखाय संखगुणा ॥४१॥**

टीका–तेभ्यश्च विभङ्गज्ञानिभ्य केवलिनोऽनन्तगुणा, सिद्धाना तेभ्योऽनन्तगुणत्वात्, तेषा च केवलज्ञानयुक्तत्वात्। तेभ्योऽपि च केवलज्ञानिभ्यो मत्यज्ञानिश्रुताज्ञानिनोऽनन्तगुणा, सिद्धेभ्योऽपि वनस्पतिकायिकानामनन्तगुणत्वात्, तेषा च मिथ्यादृष्टितया मत्यज्ञानश्रुताज्ञानयुक्तत्वात्, एते चोभये मत्यज्ञानिश्रुताज्ञानिन स्वस्थाने चिन्त्यमानास्तुल्या, मत्यज्ञानश्रुताज्ञानयोः परस्परमविनाभावित्वात्। उक्त च–"एएसि ण भंते जीवाण आभिणिबोहियनाणीण सुयनाणीण ओहिनाणीण मणपज्जवनाणीण केवलनाणीण मइअन्नाणीण सुयअन्नाणीण विभंगनाणीण य कयरे कयरेहितो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा? गोयमा! सव थोवा जीवा मणपज्जवनाणी, ओहिनाणी असखेज्जगुणा, आभिणि-

१ यत्र मतिज्ञान तत्र श्रुतज्ञान, यत्र श्रुतज्ञान तत्र मतिज्ञान, द्वे अपि एते अन्योन्यमनुगते। २ एतेषा भदन्त जीवाना आभिनिबोधिकज्ञानिना, श्रुत० अवधि० मन पर्यव० केवल० मत्यज्ञानिना श्रुता० विभग० च के केभ्योऽल्पा बहुकास्तुल्या विशेषाधिका वा? गौतम मन ० सर्वस्तोका, अवधि० अस०, आभि०, श्रुत० द्वयेऽपि तुल्या विशेषाधिका, विभग० असख्य०, केवल० अनत०, मत्य० श्रुता० द्वयेऽपि तुल्या अनन्तगुणा।

बोहियनाणी सुयनाणी दो वि तुल्ला विसेसाहिया, विभंगनाणी असंखिज्जगुणा, केवलनाणी अनंतगुणा, मइअन्नाणी सुयअन्नाणी य दो वि तुल्ला अणंतगुणा"। संयमद्वारे सर्वस्तोकाः सूक्ष्मसंपरायसंयमिनः, शतपृथक्त्वमात्रसंभवात्। तेभ्यः परिहारविशुद्धिकाः संख्यातगुणाः, सहस्रपृथक्त्वसंभवात्। तेभ्योऽपि यथाख्यातचारित्रिणः संख्यातगुणाः, कोटिपृथक्त्वेन प्राप्यमाणत्वादिति ॥ ४१ ॥

**छेय समईय संखा देस असंखगुण णंतगुण अजया। थोव असंख दु णंता ओहिनयण केवल अचक्खू ॥४२॥**

टीका–तेभ्यो यथाख्यातचारित्रिभ्यश्छेदोपस्थापनचारित्रिणः संख्येयगुणाः, कोटीशतपृथक्त्वेन लभ्यमानत्वात्। तेभ्योऽपि सामायिकसंयमिनः संख्येयगुणाः, कोटीसहस्रपृथक्त्वेन प्राप्यमाणत्वात्। तेभ्योऽपि देशविरता असंख्येयगुणाः, असंख्यातानां तिरश्चां देशविरतिसंभवात्। तेभ्योऽनन्तगुणा अयताः संयमहीना आद्यगुणस्थानकचतुष्टयवर्तिन इत्यर्थः मिथ्यादृशामनन्तत्वात् (मनन्तानन्तत्वात्)। दर्शनद्वारे यथाक्रममेवं पदघटना–स्तोका अवधिदर्शनिनः, सुरनारकाणां नरतिरश्चां च केषांचिदवधिदर्शनसंभवात्। तेभ्यश्चक्षुर्दर्शनिनोऽसंख्यातगुणाः चक्षुरिन्द्रियादीनामपि चक्षुर्दर्शनिनां तत्र प्रक्षेपात्। तेभ्योऽनन्तगुणाः केवलदर्शनिनः, सिद्धानां तेभ्योऽनन्तगुणत्वात्, तेषां च केवलदर्शनयुक्तत्वात्। तेभ्योऽप्यनंतगुणा अचक्षुर्दर्शनिनः; सर्वसंसारिजीवानां सिद्धेभ्योऽनन्तगुणत्वात्, तेषां च नियमादचक्षुर्दर्शनोपेतत्वात्। यदाहुः परममुनयः–

"एएसि ण भंते जीवाण चक्खुदसणीणं अचक्खुदसणीण ओहिदसणीण केवलदसणीण य कयरे कयरेहितो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सव्वत्थोवा जीवा ओहिदसणी, चक्खुदसणी असखिज्जगुणा, केवलदसणी अणन्तगुणा, अचक्खुदसणी अणतगुणा" इति ॥ ४२ ॥

**पच्छाणुपुव्वि लेसा थोवा दो संख णंत दो अहिया । अभव्वियर थोव णंता सासण थोवोवसम संखा ॥ ४३ ॥**

टीका–लेश्याद्वारे पश्चानुपूर्व्या लेश्या वाच्या । तद्यथा–शुक्ललेश्या पद्मलेश्या तेजोलेश्या कापोतलेश्या नीललेश्या कृष्णलेश्या । तत्र स्तोका शुक्ललेश्यावन्त , वैमानिकेष्वेव देवेषु लान्तकादिष्वनुत्तरसुरपर्यवसानेषु केषुचिदेव कर्मभूमिजेषु मनुष्यस्त्रीपुंसेषु तिर्यक्स्त्रीपुंसेषु च केषुचित् सख्यातवर्षायुष्केषु शुक्ललेश्यासम्भवात् । तत॰ सख्यातगुणा पद्मलेश्यावन्त , सनत्कुमारमाहेन्द्रब्रह्मलोकदेवेषूक्तरूपेषु च मनुष्यतिर्यक्षु पद्मलेश्याभावात्, सनत्कुमारादिदेवाना च लान्तकादिदेवेभ्य सख्येयगुणत्वात् । तेभ्योऽपि तेजोलेश्यावन्त संख्येयगुणा , सौधर्मेशानादिदेवेषु केषुचिच्च तिर्यङ्मनुष्येषु तेजोलेश्यासद्भावात्, तेषा च सकलपद्मलेश्यासहिततिर्यगादिप्राणिगणापेक्षया सख्येयगुणत्वात् । तत कापोतलेश्यावन्तोऽनन्तगुणाः, अनन्तकायिकेष्वपि कापोतलेश्यासद्भावात् । ततोऽपि विशेषाधिका नीललेश्यावन्तः, नारकादीना तल्लेश्यावता

---

१ एतेषा भदन्त जीवाना चक्षुर्दर्शनिना, अचक्षु॰ अवधि॰ केवल॰ केभ्य के अल्पा बह्वो वा तुल्या विशेषाधिका वा ? गौतम सर्वस्तोका जीवा अवधिदर्शनिन , चक्षु॰ असख्य॰ केवल॰ अनन्तगुणा , अचक्षु॰ अनन्तगुणा ।

तत्र प्रक्षेपात्। ततः कृष्णलेश्यावन्तो विशेषाधिकाः, भूयसां तल्लेश्यासद्भावात्। यदभ्यधायि परमगुरुणा—"[1]एएसि णं भंते जीवाणं सलेसाणं किण्हलेसाणं नीललेसाणं काउलेसाणं तेउलेसाणं पम्हलेसाणं सुक्कलेसाणं अलेसाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा? गोयमा? सव्वत्थोवा जीवा सुक्कलेस्सा, पम्हलेस्सा संखिज्जगुणा, तेउलेस्सा संखिज्जगुणा, अलेसा अणंतगुणा, काउलेस्सा अणंतगुणा, नीललेस्सा विसेसाहिया, किण्हलेस्सा विसेसाहिया, सलेसा विसेसाहिया"। भव्यद्वारे अभव्याः स्तोकाः, तेषां वक्ष्यमाणस्वरूपजघन्ययुक्तानन्तकतुल्यत्वात्। तेभ्योऽपि भव्याः सिद्धिगमनार्हा अनन्तगुणाः। आह च भगवानार्यश्यामः—"[2]एएसि णं भंते जीवाणं भवसिद्धियाणं अभवसिद्धियाणं नोभवसिद्धियाणं नोअभवसिद्धियाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा? गोयमा! सव्वत्थोवा अभवसिद्धिया, नोभवसिद्धिया नोअभवसिद्धिया अणंतगुणा, भवसिद्धिया अणंतगुणा"। सम्यक्त्वद्वारे सास्वादनसम्यग्दृष्टयः स्तोकाः, औपशमिकसम्यक्त्वात्केषांचिदेव प्रच्यवमानानां सास्वादनत्वात्। तेभ्यः 'उवसम त्ति' औपशमिकसम्यग्दृष्टयः संख्यातगुणाः ॥ ४३ ॥

---

१ एतेषां भदन्त जीवानां सलेश्यानां, कृष्ण० नील० कापोत० तेजो० पद्म० शुक्ल० अलेश्यानां च के केभ्योऽल्पा बहुकास्तुल्या विशेषाधिका वा? गौतम सर्वस्तोका जीवा शुक्ललेश्याः, पद्म० संख्येयगुणाः, तेजो० संख्ये० अलेश्या अनन्तगुणाः, कापोत० अनंत० नील० वि० कृष्ण० विशे० सलेश्या विशेषाधिकाः। २ एतेषां भदन्त भवसिद्धिकानां, अभव० नोभव० नोअभव० च के केभ्योऽल्पा बहुकास्तुल्या विशेषाधिका वा? गौतम सर्वस्तोका अभव० नोभव० नोअभव० अनन्त० भव० अनन्तगुणाः।

मीसा संखा वेयग असंखगुण खइय मिछ दु अणंता। संनियर थोव णंताणहार थोवेयर असंखा ॥ ४४ ॥

टीका–तेभ्यश्चौपशमिकसम्यग्दृष्टिभ्यो मिश्रा सख्यातगुणा । तेभ्यो 'वेयग त्ति' क्षायोपशमिकसम्यग्दृष्टयोऽसख्यातगुणा । तेभ्य क्षायिकसम्यग्दृष्टयोऽनन्तगुणा, क्षायिकसम्यक्त्ववता सिद्धानामानन्त्यात् । तेभ्योऽपि मिथ्यादृष्टयोऽनन्तगुणा, सिद्धेभ्योऽपि वनस्पतिजीवानामनन्तगुणत्वात्, तेषा च मिथ्यादृष्टित्वादिति । सज्ञिद्वारे सज्ञिनो जीवा. स्तोका, देवनारकसमनस्कपचेन्द्रियतिर्यग्नराणामेव सज्ञित्वात् । तेभ्य इतरेऽसज्ञिनोऽनन्तगुणा, वनस्पतिजीवानामनन्तत्वात् । यदागमे न्यगादि–"एएसिण भते जीवाण सन्नीण असन्नीण नोसन्नीण नोअसन्नीण य कयरे कयरेहितो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सवत्थोवा जीवा सन्नी, नोसन्नी नोअसन्नी अणतगुणा, असन्नी अणतगुणा"। तथाहारकद्वारेऽनाहारका स्तोका, विग्रहगत्यापन्नसमुद्घातकेवलिभवस्थायोगिकेवलिसिद्धानामेवानाहारकत्वात् । यदाह श्राप्यसुधाम्भोधि –"विग्गहगइमावन्ना केवलिणो समुहया अजोगी य । सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ १ ॥" तेभ्य इतरे आहारका जीवा असख्यातगुणा । यदवाचि वाचयमप्रवरै श्रीमदाचार्यश्यामपादै –"एएसि णं भते

१ एतेषा भदन्त जीवाना सज्ञिनामसज्ञिना नोसज्ञिनोअसज्ञिना च के केभ्य अल्पा वा बहवो वा तुल्या वा विशेषाधिका वा ? गौतम सर्वस्तोका जीवा सज्ञिनो, नोसज्ञ्यसज्ञिनोऽनन्तगुणा असज्ञिनोनतगुणा । २ विग्रहगत्यापन्ना समवहतकेवलिनोऽयोगिनश्च। सिद्धाश्चानाहारका शेषा जीवा आहारका ॥ १ ॥ ३ एतेषा भदन्त जीवाना आहारकाणामनाहारकाणा च के केभ्य अ०ब०तु०वि० गौतम सर्वस्तोका अनाहारका जीवा आहारका असख्यगुणा ।

जीवाणं आहारगाणं अणाहारगाण य कयरे कयरे हिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा! सव्वत्थोवा जीवा अणाहारगा, आहारगा असंखिज्जगुणा"। ननु च सिद्धेभ्योऽनन्तगुणाः संसारिजीवास्ते च प्राय आहारकास्तत्कथमसंख्यातगुणा आहारका इति? नैष दोषः, यतः प्रतिसमयमेकैकस्य निगोदस्यासंख्येयभागप्रमाणा विग्रहगत्यापन्ना जीवा लभ्यन्ते, ते चानाहारकास्तत आहारकजीवानामनाहारकजीवापेक्षयाऽसंख्यातगुणत्वमेवेति ॥ ४४ ॥

चिन्तितं गत्यादिमार्गणास्थानेषु स्वस्थानापेक्षयाऽल्पबहुत्वं, इदानीं गुणस्थानेषु जीवस्थानानि चिन्तयन्नाह—

**सव्वजियठाण मिच्छे सग सासणि पण अपज्ज सन्निदुगं। संमे सन्नी दुविहो सेसेसुं सन्निपज्जत्तो ॥४५॥**

टीका—सर्वाणि जीवस्थानानि चतुर्दशापि मिथ्यादृष्टिगुणस्थानके भवन्ति, मिथ्यात्वस्य सर्वेषु जीवस्थानकेषु संभवात्। तथा 'सग त्ति' सप्त जीवस्थानानि सासादने भवन्ति। तद्यथा—पंचापर्याप्ता बादरैकेन्द्रियोऽपर्याप्तः, द्वीन्द्रियोऽपर्याप्तः, त्रींद्रियोऽपर्याप्तः चतुरिन्द्रियोऽपर्याप्तः, असंज्ञिपंचेन्द्रियोऽपर्याप्तः, संज्ञिद्विकं संज्ञ्यपर्याप्तः, संज्ञिपर्याप्तः। अपर्याप्तकाश्चेह करणापर्याप्तका द्रष्टव्याः, न तु लब्ध्यपर्याप्तकाः, तेषु मध्ये सास्वादनसम्यक्त्वसहितस्योत्पादाभावात्। 'संमे संनी दुविहो त्ति' अविरतसम्यग्दृष्टिगुणस्थानके संज्ञी द्विविधोऽपर्याप्तपर्याप्तरूपो द्रष्टव्यः। इहापर्याप्तकः करणापेक्षया ज्ञेयो न तु लब्ध्यपेक्षया, लब्ध्यपर्याप्तमध्येऽविरतसम्यग्दृष्टेरभावात्। शेषेषु मिश्रदेशविरत्यादिगुणस्थानकेषु संज्ञी पर्याप्त इत्येकमेव

जीवस्थानक न शेषाणि, तेषा मिश्रभावदेशविरतिप्रतिपत्त्यभावात् । न च पूर्वप्रतिपन्नमिश्रभावोऽन्येषु जीवस्थानकेषु सक्रामन् लभ्यते " न सम्ममिस्सो कुणइ कालं " इति वचनात् ॥ ४५ ॥

तदेव गुणस्थानकेषु व्याख्यातानि जीवस्थानकानि, सप्रति गुणस्थानकेष्वेव योगान् व्याख्यानयन्नाह—

**मिच्छदुग अजइ जोगाहारदुगूणा अपुव्वपणगे उ। मणवइउरलं सविउव्व मीसि सविउव्वदुग देसे ॥४६॥**

टीका—मिथ्यादृष्टिद्विके मिथ्यादृष्टिसास्वादनलक्षणे तत्र, अयतेऽविरतसम्यग्दृष्टौ चेत्येव गुणस्थानकत्रये सज्ञी पचेन्द्रियोऽपि लभ्यते, तस्य च यथोक्ताहारकद्विकेनाहारककाययोगाहारकमिश्रकाययोगलक्षणेनोना रहितास्त्रयोदश योगा भवन्ति । यत्पुनराहारकद्विक तच्चतुर्दशपूर्विण एव । यदभ्यधायि—"आहारदुग जायइ चउदसपुव्विस्सेति"। न च मिथ्यादृष्टिसासादनायताना चतुर्दशपूर्वाधिगमसभव इति । तथाऽपूर्वपचकेऽपूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायोपशान्तमोहक्षीणमोहलक्षणे नव योगा भवन्ति । तद्यथा—चतुर्विधो मनोयोग[1], चतुर्विधो वाग्योग, औदारिककाययोग इति न शेषा अत्यन्तविशुद्धतया तेषा वैक्रियाहारकद्विकारम्भासभवात्, तत्र स्थिताना च स्वभावत एव श्रेण्यारोहाभावात् । औदारिकमिश्रमपर्याप्तावस्थाया कार्मण त्वपान्तरालगतौ । यद्योक्ते अपि केवलिसमुद्घातावस्थाया ततस्ते अप्यत्र गुणस्थानकपचके न सभवत इति । तथा त एव पूर्वोक्ता नव योगा सवैक्रिया सन्तो दश योगा मिश्रे सम्यग्मिथ्यादृष्टिगुणस्थानके भवन्ति । तथा हि—चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकवैक्रियलक्षणा दश योगा मिश्रे भवन्ति, न

१ न सम्यग्मिथ्यादृष्टि कालकरोति । २ चतुर्दशपूर्विण आहारकद्विक जायते।

शेषाः । तद्यथा—आहारकद्विकस्यासंभवः पूर्वाधिगमासंभवादेव, कार्मणशरीरं त्वपान्तरालगतौ संभवति, अस्य च मरणासंभवेनापान्तरालगत्यसंभवस्ततस्तस्याप्यसंभवः । अत एवौदारिकवैक्रियमिश्रे अपि न संभवतस्तयोरपर्याप्तावस्थाभावित्वात् । ननु मा भूद्देवनारकसंबन्धि वैक्रियमिश्रं, यत्पुनर्मनुष्यतिरश्चां सम्यग्मिथ्यादृशां वैक्रियलब्धिमतां वैक्रियकरणसंभवेन तदारंभकाले वैक्रियमिश्रं भवति, तत्कस्मान्नाभ्युपगम्यते ? उच्यते—तेषां वैक्रियकरणासंभवादन्यतो वा यतः कुतश्चित्कारणात्पूर्वाचार्यैर्नाभ्युपगम्यते तन्न सम्यगवगच्छामः, तथाविधसंप्रदायाभावात्, एतच्च प्रागेवोक्तमिति । तथा त एव पूर्वोक्ता नव योगाः सवैक्रियद्विका वैक्रियवैक्रियमिश्रसहिताः सन्त एकादश देशे देशविरते भवन्ति, अंबडस्येव वैक्रियलब्धिमतो देशविरतस्य वैक्रियारंभसंभवादिति ॥ ४६ ॥

**साहारदुग पमत्ते ते विउवाहारमीस विणु इयरे । कम्मुरलदुगंताइममणवयणसयोगि न अजोगी ॥४७॥**

टीका—पूर्वोक्ता एवैकादश योगाश्चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकवैक्रियद्विकलक्षणाः साहारकद्विका आहारकाहारकमिश्रसहिताः सन्तस्त्रयोदश योगाः प्रमत्ते भवन्ति, औदारिकमिश्रकार्मणकाययोगाभावस्तु पूर्वोक्तयुक्तेरेवावसेय इति । त एव पूर्वोक्तास्त्रयोदश योगा वैक्रियमिश्राहारकमिश्रं विना एकादश योगा अप्रमत्ते । यत्तु वैक्रियमिश्रमाहारकमिश्रं च तन्न संभवति, तद्वैक्रियस्याहारकस्य च प्रारंभकाले भवति, तदानीं च लब्ध्युपजीवनादिनौत्सुक्यभावतः प्रमादभावः संभवतीति। तथौदारिकमिश्रमपर्याप्तावस्थायां, कार्मणं त्वपान्तरालगतौ, यद्वोभे अपि केवलिसमुद्घातावस्थायां, ततस्ते अप्यत्र गुणस्थानके न संभवत इति। तथा कार्मणमौदारिकद्विकमौदारिकौदारिकमिश्रलक्षणमन्त्यादिममनसी सत्यासत्यामृषरूपौ

मनोयोगौ, अन्त्यादिमवचने सत्यासत्यामृपरूपौ वाग्योगौ चेति सप्त योगा सयोगिकेवलिनो भवन्ति, कार्मणौदारिकमिश्रे तु समुद्घातावस्थायामिति । न नैव पञ्चदशयोगमध्यादेकेनापि योगेन युक्तोऽयोगी अयोगिकेवली भवति, योगाभावनिबन्धनत्वादयोगित्वावस्थाया इति ॥ ४७ ॥

उक्ता गुणस्थानकेषु योगा, अधुनैतेष्वेवोपयोगानभिधातुकाम आह—

**तिअनाण दुदंसाइमदुगे अजइ देसि नाणदंसतिगं। ते मीसि मीसा समणा जयाइ केवलिदुगंतदुगे॥४८॥**

टीका–आदिमद्विके मिथ्यादृष्टि सास्वादनलक्षणे प्रथमद्वितीयगुणस्थानकद्वय इत्यर्थः । 'तिअनाणदुदसत्ति' त्रयाणामज्ञानाना समाहारस्त्यज्ञान मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूप, दर्शन दर्शो द्वयोर्दर्शयो समाहारो द्विदर्श चक्षुर्दर्शनाचक्षुर्दर्शनमित्येते पञ्चोपयोगा मिथ्यादृष्टिसासादनयोर्भवन्ति । त्रिकशब्दस्य प्रत्येकमभिसबन्धाज्ज्ञानत्रिकं मतिज्ञानश्रुतज्ञानावधिज्ञानरूप दर्शत्रिक चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनलक्षणमिति,न शेषा सर्वविरत्यभावात्। ते पूर्वोक्ता ज्ञानत्रिकदर्शनत्रिकरूपा षडुपयोगा मिश्रे सम्यग्मिथ्यादृष्टिगुणस्थानके मिश्रा अज्ञानसहिता द्रष्टव्याः, तस्योभयदृष्टिपातित्वात्, केवल कदाचित् सम्यक्त्वबाहुल्यतो ज्ञानबाहुल्य, कदाचिच्च मिथ्यात्वबाहुल्यतोऽज्ञानबाहुल्य, समकक्षताया तूभयाशसमतेति । अस्मिश्च गुणस्थानके यदवधिदर्शनमुक्त तत्सैद्धान्तिकमतापेक्षया द्रष्टव्यमित्युक्त प्राक् । 'समणा जयाइ त्ति' "यमू उपरमे" यमन यतं सर्वसावद्यविरत तद्विद्यते यस्य स यतः "अभ्रादिभ्य ( ७-२-४६ ) इत्यप्रत्यय" प्रमत्तगुणस्थानकवर्ती साधु, यत आदिर्येषा गुणस्थानकाना तानि यतादीनि प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायोपशान्तमोहक्षी-

णमोहलक्षणानि सप्त गुणस्थानकानि तेषु पूर्वोक्ता ज्ञानत्रिकदर्शनत्रिकाख्याः षडुपयोगाः 'समण त्ति' मनःपर्यायज्ञानसहिताः सप्त भवन्तीति, न शेषा मिथ्यात्वघातिकर्मक्षयाभावात्। केवलद्विकं केवलज्ञानकेवलदर्शनलक्षणोपयोगद्वयरूपमन्तद्विके सयोगिकेवल्ययोगिकेवलिलक्षणचरमगुणस्थानकद्वये भवति, न शेषा दश ज्ञानदर्शनलक्षणाः, तदुच्छेदेनैव केवलज्ञानकेवलदर्शनोत्पत्तेः "[1]नट्ठंमि छाउमत्थिए नाणे" इति वचनात्॥ ४८॥

तदेवमभिहिता गुणस्थानकेषूपयोगाः, सांप्रतं यदिह प्रकरणे सूत्राभिमतमपि कार्मग्रन्थिकाभिप्रायानुसरणतो नाधिकृतं तद्दर्शयन्नाह—

**सासणभावे नाणं विउव्वगाहारगे उरलमिस्सं। नेगिंदिसु सासाणो नेहाहिगयं सुयमयं पि॥ ४९॥**

टीका—सासादनभावे सास्वादनसम्यग्दृष्टित्वे सति ज्ञानं भवति नाज्ञानमिति श्रुतमतमपि सिद्धान्तसंमतमपि। तथा हि—"[2]बेइंदियाणं भंते किं नाणी अन्नाणी? गोयमा! नाणी वि अन्नाणी वि, जे नाणी ते नियमा दुनाणी आभिणिबोहियनाणी सुयनाणी। जे अन्नाणी ते वि नियमा दुअन्नाणी, तं जहा—मइअन्नाणी सुयअन्नाणी" इत्यादिसूत्रे द्वीन्द्रियादीनां ज्ञानित्वमभिहितं तच्च सास्वादनापेक्षयैव, न शेषसम्यक्त्वापेक्षया, असंभवात्। उक्तं च प्रज्ञापनाटीकायाम्—

---

१ नष्टे छाद्मस्थिके ज्ञाने। २ द्वीन्द्रिया भदन्त किं ज्ञानिनोऽज्ञानिनः? गौतम! ज्ञानिनोप्यज्ञानिनोऽपि। ये ज्ञानिनस्ते नियमाद्द्विज्ञानिन आभिनिबोधज्ञानिनः श्रुतज्ञानिनः। येऽज्ञानिनस्तेपि नियमाद्व्यज्ञानिनः तद्यथा-मत्यज्ञानिनः, श्रुताज्ञानिनः।

"[1]बेइंदियस्स दोनाणा कहं लब्भंति ? भण्णइ, सासायणं पडुच्च तस्सापज्जत्तयस्स दोनाणा लब्भंति त्ति"। ततः सासादनभावेऽपि ज्ञानं सूत्रसमतमेव। तच्चेत्थं सूत्रसमतमपि नेह प्रकरणेऽधिकृतं, किं त्वज्ञानमेव, कर्मग्रन्थाभिप्रायस्यानुसरणात्। तदभिप्रायश्चायम्–सास्वादनस्य मिथ्यात्वाभिमुखतया तत्सम्यक्त्वस्य मलीमसत्वेन तन्निबन्धनस्य ज्ञानस्यापि मलीमसत्वादज्ञानरूपतेति। तथा सूत्रे वैक्रिय आहारके चारभ्यमाणे तेन प्रारभ्यमाणेन सहौदारिकस्यापि मिश्रीभवनादौदारिकमिश्रमुक्तमिति। तथा चाह प्रज्ञापनाटीकाकारः–"यदा पुनरौदारिकशरीरी वैक्रियलब्धिसंपन्नो मनुष्यः, पञ्चेन्द्रियतिर्यग्योनिको वा पर्याप्तबादरवायुकायिको वा वैक्रियं करोति तदौदारिकशरीरयोग एव वर्तमानः प्रदेशान् विक्षिप्य वैक्रियशरीरयोग्यान् पुद्गलानादाय यावद्वैक्रियशरीरपर्याप्त्या पर्याप्तिं न गच्छति तावद्वैक्रियेण मिश्रता, व्यपदेशश्चौदारिकस्य, प्रधानत्वात्। एवमाहारकेणापि सह मिश्रता द्रष्टव्या, आहारयति चैतेनैवेति तस्यैव व्यपदेश इति।" परित्यागकाले वैक्रियस्याहारकस्य च यथाक्रमं वैक्रियमिश्रमाहारकमिश्रं च। उक्तं च श्रीप्रज्ञापनाटीकायाम्–" आहारकशरीरी भूत्वा कृतकार्यः पुनरप्यौदारिकं गृह्णाति, तदाहारकस्य प्रधानत्वादौदारिकप्रदेशं प्रति व्यापाराभावान्न परित्यजति यावत्सर्वथैवाहारकं तावदौदारिकेण मिश्रतेति आहारकमिश्रशरीरकाययोग इति"। तच्चैव ( तथैवं ) वैक्रियाहारकारम्भकाले औदारिकमिश्रं सूत्रेऽभिहितमपि नेह प्रकरणेऽधिकृतं, कार्मग्रन्थिकैर्गुणविशेषप्रत्ययसमुत्थलब्धिविशेषकारणतया प्रारम्भकाले परित्यागकाले च वैक्रियस्याहारकस्य च प्राधान्यविवक्षणेन वैक्रियमिश्रस्याहारकमिश्रस्य चैवाभिधानात्।

---

१ द्वीन्द्रियस्य ज्ञाने द्वे कथं लभ्येते ? भण्यते सास्वादनं प्रतीत्य तस्यापर्याप्तकस्य द्वे ज्ञाने लभ्येते।

तदभिप्रायस्य चेहानुसरणात् । तथा नैकेन्द्रियेषु 'सासाणो त्ति' भावप्रधानोऽयं निर्देशः, सासादनभावः सूत्रे मतः, अन्यथा द्वीन्द्रियादीनामिवैकेन्द्रियाणामपि ज्ञानित्वमुच्येत, न चोच्यते, किं तु विशेषतः प्रतिषिध्यते । तथा हि—"एगिंदियाणं भंते किं नाणी अन्नाणी ? गोयमा ! नो नाणी नियमा अन्नाणी" इति । स चेत्थं सासादनभावप्रतिषेधः सूत्रे मतोऽपि केनचित्कारणेन कार्मग्रन्थिकैर्नाभ्युपगम्यत इतीहापि प्रकरणे नाधिक्रियते, तदभिप्रायस्यैवेह प्रायोऽनुसरणादिति । 'नेहाहिगयं सुयमयं पि' इत्येतद्विभक्तिपरिणामेन प्रतिपदं संबन्धनीयं, तथैव संबन्धितमिति ॥ ४ए ॥

अधुना गुणस्थानकेष्वेव लेश्या अभिधित्सुराह—

**उसु सवा तेउतिगं इगि उसु सुक्का अयोगि अल्लेसा । बंधस्स मिछ अविरइ कसाय जोग त्ति चउ हेऊ ॥५०॥**

टीका—षट्सु मिथ्यादृष्टिसासादनमिश्राविरतदेशविरतप्रमत्तलक्षणेषु गुणस्थानकेषु सर्वाः षडपि कृष्णनीलकापोततेजःपद्मशुक्ललेश्या भवन्ति । 'तेउतिगं इगि त्ति' एकस्मिन्नप्रमत्तगुणस्थानके तेजस्त्रिकं तेजःपद्मशुक्ललेश्यात्रयं भवति न पुनराद्यं लेश्यात्रयमित्यर्थाद्गम्यम् । षट्स्वपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणेषु गुणस्थानकेषु शुक्ललेश्या भवति न शेषाः पंच । अयोगिनो अयोगिकेवलिनोऽलेश्याः अपगतलेश्या । इह लेश्यानां प्रत्येकमसंख्येयानि लोकाकाशप्रदेशप्रमाणानि अध्यवसायस्थानानि, ततो मन्दाध्यवसायस्थानापेक्षया शुक्ललेश्यादीनामपि मिथ्यादृष्ट्यादौ, कृष्णलेश्यादीनामपि प्रमत्तगुणस्थानकेऽपि संभवो न विरुध्यत इति । तदेवमुक्ता गुणस्थानकेषु लेश्याः, संप्रति बन्धहे-

---

१ भदन्त एकेन्द्रिया ज्ञानिनोऽज्ञानिनः ? गौतम नो ज्ञानिनो नियमादज्ञानिनः ।

तयो वक्तुमवसरप्राप्तास्ते च मूलभेदतश्चत्वार उत्तरभेदतश्च सप्तपञ्चाशत्तानुभयथापि प्रचिकटयिषुराह–'बधस्स मिच्छे त्यादि,' बन्धस्य ज्ञानावरणादिकर्मबन्धस्य मूलहेतवश्चत्वार इत्यमुना प्रकारेण भवन्ति । केन प्रकारेणेत्याह–मिथ्यात्वाविरतिकषाययोगा, तत्र मिथ्यात्व विपरीतावबोधस्वभाव, अविरति सावद्ययोगेभ्यो निवृत्त्यभाव, कषाययोगा प्राग्निरूपितशब्दार्था । नन्वन्यत्र प्रमादोऽपि बन्धहेतुरभिधीयते । यदवादि–"मिथ्यात्वाविरतिप्रमादकषाययोगा बन्धहेतव" इति स कथमिह नोक्त ? उच्यते, मद्यविषयरूपस्य तस्याविरतावेवान्तर्भावो विवक्षित, कषायाश्च पृथगेवोक्ता, वैक्रिया हारादिसभवी तु योगग्रहणेनैव गृहीत इत्यदोष इति ॥ ५० ॥

उक्ताश्चत्वारो मूलहेतव, इदानीमुत्तरभेदान् प्रचिकटयिषु प्रथमं मिथ्यात्वस्याविरतेश्चोत्तरभेदानाह—

अभिगहियमणभिगहियाभिनिवेसियसंसइयमणाभोगं ।
पण मिछ बार अविरइ मणकरणानियमु छजियवहो ॥ ५१ ॥

टीका–अभिग्रहेणेदमेव दर्शन शोभन नान्यदित्येवरूपेण कुदर्शनविषयेण निर्वृत्तमाभिग्रहिक, यद्वशाद्बोटिकादिकुदर्शनानामन्यतमं गृह्णाति । तद्विपरीतमनाभिग्रहिक, यद्वशात्सर्वाण्यपि दर्शनानि शोभनानीत्येवमीषन्माध्यस्थ्यमुपजायते । आभिनिवेशिक यदभिनिवेशेन निर्वृत्त यथा गोष्ठामाहिलादीनाम् । सांशयिक यत्सशयेन निर्वृत्त, यद्वशाद्भगवदर्हदुपदिष्टेष्वपि जीवाजीवादितत्त्वेषु सशय उपजायते यथा न जाने किमिद भगवदुक्त धर्मास्तिकायादि सत्यमुतान्यथेति । अना-

भोगं यदनाभोगेन निर्वृत्तं तच्चैकेन्द्रियादीनामिति । 'पण मिच्छ त्ति' पंचप्रकारं मिथ्यात्वं भवतीति । द्वादशप्रकाराऽविरतिः, कथमित्याह–मनः स्वान्तं, करणानीन्द्रियाणि पंच, तेषां स्वस्वविषये प्रवर्तमानानामनियमोऽनियंत्रणं, तथा षण्णां पृथिव्यप्तेजोवायुवनस्पतित्रसरूपाणां जीवानां वधो हिंसा । इति ॥ ५१ ॥

अभिहिता मिथ्यात्वाविरत्युत्तरबन्धहेतवः, संप्रति कषाययोगोत्तरबन्धहेतूनाह—

**नव सोल कसाया पनर जोग इय उत्तरा उ सगवन्ना । इग चउ पण तिगुणेसु चउतिदुइगपच्चओ बंधो ॥५२॥**

टीका–स्त्रीवेदपुरुषवेदनपुंसकवेदहास्यरत्यरतिशोकभयजुगुप्सारूपा नव नोकषायास्ते च कषायसहचरितत्वादुपचारेणेह कषाया इत्युक्ताः, षोडश कषाया अनन्तानुबन्धिक्रोधादयः । नोकषायकषायस्वरूपं च सविस्तरं स्वोपज्ञकर्मविपाकटीकायां निरूपितमिति तत एवावधारणीयम् । पंचदश योगा अत्रैव व्याख्यातस्वरूपाः । इत्यमुना प्रदर्शितप्रकारेण पंचद्वादशपंचविंशतिपंचदशलक्षणेन सप्तपंचाशत् पुनरुत्तरभेदा बन्धस्य भवन्तीति । प्रदर्शिता बन्धस्य मूलहेतवश्चत्वार उत्तरे सप्तपंचाशत्संख्याः । अधुना बन्धस्य मूलहेतून् गुणस्थानकेषु चिन्तयन्नाह–"इगचउपणतिगुणेसु" इत्यादि, इहैवं पदघटना–एकस्मिन्मिथ्यादृष्टिलक्षणे गुणस्थानके चत्वारो मिथ्यात्वाविरतिकषाययोगलक्षणाः प्रत्यया हेतवो यस्य स चतुःप्रत्ययो बन्धो भवति । अयमर्थः–मिथ्यात्वादिभिश्चतुर्भिः प्रत्ययैर्मिथ्यादृष्टिगुणस्थानकवर्ती जन्तुर्ज्ञानावरणादिकर्म बध्नाति । तथा चतुर्षु गुणस्थानकेषु सास्वादनमिश्राविरतदेशविरतिलक्षणेषु त्रयो मिथ्यात्ववर्जिता अविरतिकषाययोगलक्षणाः प्रत्यया यस्य स त्रिप्रत्ययो बन्धो भवतीति । अयमर्थः–सास्वादनादयश्चत्वारो मिथ्यात्वोदयाभावात्तद्वर्जैस्त्रिभिः प्रत्ययैः

कर्म नध्नन्ति, देशविरतगुणस्थानके यद्यपि देशत स्थूलप्राणातिपातविपया विरतिरस्ति तथापि साऽल्पत्वान्नेह विवक्षिता, विरतिशब्देनेह सर्वविरतेरेव विवक्षितत्वादिति। तथा पचसु गुणस्थानकेपु प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिवादरसूक्ष्मसपरायलक्षणेपु द्वौ प्रत्ययौ कपाययोगाजिख्यौ यस्य स द्विप्रत्ययो वन्धो जवति। इदमुक्त जवति–मिथ्यात्वाविरतिप्रत्ययद्वयस्यैतेप्वजावात्नैपेण कपाययोगप्रत्ययद्वयेनामी प्रमत्तादय॰ कर्म वध्नन्तीति। तथा त्रिपूपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणेपु गुणस्थानकेपु एक एव मिथ्यात्वाविरतिकपायाजावाद्योगलक्षण॰ प्रत्ययो यस्य स एकप्रत्ययो जवति। अयोगिकेवली जगवान् सर्वथाप्यवन्धक इति॥ ५२॥

जाविता मूलवन्धहेतवो गुणस्थानकेपु सप्रत्येतानेव मूलवन्धहेतून् विनेयवर्गानुग्रहार्थमुत्तरप्रकृतीराश्रित्य चिन्तयन्नाह–

**चउ मिछ मिछअविरईपच्चइया सायसोलपणतीसा। जोगे विणु तिपच्चइयाहारगजिणवज्ज सेसाउ ॥५३॥**

टीका–प्रत्ययशब्दस्य प्रत्येक सवन्धाच्चतु प्रत्ययिका सातलक्षणा प्रवृत्ति। मिथ्यात्वप्रत्ययिकाः पोकश प्रकृतय॰। मिथ्यात्वाविरतिप्रत्ययिकाः पचत्रिंशत्प्रकृतय। योग विना त्रिप्रत्ययिका मिथ्यात्वाविरतिकपायप्रत्ययिकाहारकद्विकजिनवर्जा शेपा प्रकृतय इति गाथाक्षरार्थः। जावार्थः पुनरयम्–सातलक्षणा प्रकृतिश्चत्वार प्रत्यया मिथ्यात्वाविरतिकपाययोगा यस्या सा चतु प्रत्ययिका, "अतोऽनेकस्वरादिति" ( ७–२–६ ) इकप्रत्यय॰, मिथ्यात्वादिजिश्चतुर्जिरपि प्रत्ययै सात वध्यत इत्यर्थ। तथा हि—सात मिथ्यादृष्टौ वध्यत इति मिथ्यात्वप्रत्यय, शेपा अप्यविरत्यादयस्त्रयः प्रत्यया॰ सन्ति, केवल मिथ्यात्वस्यैवेह प्राधान्येन विवक्षितत्वात्, तेन तदन्तर्गतत्वेनैव विवक्षिता॰, एवमुत्तरत्रापि। तदेव मिथ्या-

त्वाभावेऽप्यविरतिमत्सु सास्वादनादिषु बध्यत इत्यविरतिप्रत्ययम् । तदेव कषाययोगवत्सु प्रमत्तादिषु सूक्ष्मसंपरायावसानेषु बध्यत इति कषायप्रत्ययम् । योगप्रत्ययस्तु पूर्ववत्तदन्तर्गतो विवक्ष्यते । तदेवोपशान्तादिषु केवलयोगवत्सु मिथ्यात्वाविरतिकषायाभावेऽपि बध्यत इति योगप्रत्ययम् । इत्येवं सातलक्षणा प्रकृतिश्चतुःप्रत्ययिका । तथा मिथ्यात्वप्रत्ययिकाः षोडश प्रकृतयः । इह यासां कर्मस्तवे—"नरयतिग जाइथावरचउ हुंडायव छेवट्ठ नपु मिच्छं सोलंतो त्ति" गाथावयवेन नारकत्रिकादिषोडशप्रकृतीनां मिथ्यादृष्टावन्त उक्तस्ता मिथ्यात्वप्रत्यया भवन्तीत्यर्थः । तद्भावे बध्यन्ते तदभावे तूत्तरत्र सास्वादनादिषु न बध्यन्त इत्यन्वयव्यतिरेकाभ्यां मिथ्यात्वमेवासां प्रधानं कारणं, शेषप्रत्ययत्रयं तु गौणमिति । तथा मिथ्यात्वाविरतिप्रत्ययिकाः पंचत्रिंशत्प्रकृतयः, तथा हि—सासणि तिरि थीण दुहग तिगं । अणमज्झागिइ संघयण चउ निउज्जोय कुखगइ त्थि त्ति" ॥ १ ॥ सूत्रावयवेन तिर्यक्त्रिकप्रभृतिपंचविंशतिप्रकृतीनां सास्वादने बन्धव्यवच्छेद उक्तः । तथा "वइरनरतियबियकसाया उरलदुगंतो" इति सूत्रावयवेन वज्रर्षभनाराचादीनां दशानां प्रकृतीनां देशविरते बन्धव्यवच्छेद उक्तः, एवं च पंचविंशतेर्दशानां च मीलने पंचत्रिंशत्प्रकृतयो मिथ्यात्वाविरतिप्रत्ययिका एताः शेषप्रत्ययद्वयं तु गौणं, तद्भावेऽप्युत्तरत्र तद्बन्धाभावादिति भावः । भणितशेषा आहारकद्विकतीर्थकरनामवर्जाः सर्वा अपि प्रकृतयो योगवर्जत्रिप्रत्ययिका भवन्ति, मिथ्यादृष्ट्यविरतेषु सकषायेषु च सर्वेषु सूक्ष्मसंपरायावसानेषु यथासंभवं बध्यन्त इति मिथ्यात्वाविरतिकषायलक्षणप्रत्ययत्रयनिबन्धना भवन्तीत्यर्थः । उपशान्तमोहादिषु केवलयोगवत्सु योगसद्भावेऽप्येतासां बन्धो नास्तीति योगप्रत्ययवर्जनमन्वयव्यतिरेकसमधिगम्यत्वात्कार्यकारणभावस्येति हृदयम् । आहारकशरीराहा-

रकागोपागलक्षणाहारकद्विकतीर्थंकरनाम्नोस्तु प्रत्यय. "सम्मत्तगुणनिमित्तं तित्थयर संयमेण आहारमिति" वचनात् संयम सम्यक्त्वं चाभिहित इतीह तद्वर्जनमिति ॥ ५३ ॥

उक्त प्रासंगिकमिदानीमुत्तरबन्धभेदान् गुणस्थानकेषु चिन्तयन्नाह—

**पणपन्न पन्ना तियछहियचत्त गुणचत्त छचउदुगवीसा। सोलस दस नव नव सत्त हेउणो न उ अजोगिंमि**

टीका-मिथ्यादृष्टौ पंचपचाशद्बन्धहेतव' । सासादने पंचाशद्बन्धहेतव । चतु शब्दस्य प्रत्येकं सबन्धात्त्र्यधिकचत्वारिंशदित्यर्थ , बन्धहेतवो मिश्रगुणस्थानके । षडधिकचत्वारिंशद्बन्धहेतवोऽविरतगुणस्थानके । एकोनचत्वारिंशद्बन्धहेतवो देशविरतगुणस्थानके । विंशतिशब्दस्य प्रत्येक संबन्धात् षड्विंशतिबन्धहेतव' प्रमत्तगुणस्थाने । चतुर्विंशतिबन्धहेतवोऽप्रमत्तगुणस्थानके । द्वाविंशतिबन्धहेतवोऽपूर्वकरणे । षोडशबन्धहेतवोऽनिवृत्तिबादरे । दशबन्धहेतव सूक्ष्मसंपराये । नवबन्धहेतव उपशान्तमोहे । नवबन्धहेतव' क्षीणमोहे । सप्तबन्धहेतव सयोगिकेवलिगुणस्थाने । न तु नैवायोगिन्येकोऽपि बन्धहेतुरस्ति बन्धाभावादेवेति ॥ ५४ ॥

अथामूलेव बन्धहेतून् भावयन्नाह—

**पणपन्न मिछि हारगदुगूण सासाणि पंन मिछ विणा॥ मिस्सदुगकंमअण विणु तिचत्त मीसे अह छचत्ता॥५५**

टीका-मिथ्यादृष्टावाहारकाहारकमिश्रलक्षणद्विकोना पंचपंचाशद्बन्धहेतवो भवन्ति, आहारकद्विकवर्जन तु "संयमव-

१ तीर्थंकरत्व सम्यक्त्वगुणनिमित्तक । सयमेन चाहारकम् ।

विना पंचाशद्बन्धहेतवो भवन्ति, पूर्वोक्तायाः पंचपंचा-
तां तदुदयो नान्यस्येति" वचनात् । सास्वादने मिथ्यात्वपंचकेन विना पंचाशद्बन्धहेतवो भवन्ति, कथमित्याह-
शतो मिथ्यात्वपंचकेऽपनीते पंचाशद्बन्धहेतवः सासादने द्रष्टव्याः । मिश्रे त्रिचत्वारिंशद्बन्धहेतवो भवन्ति, अनन्तानुबन्धिनस्तैर्विना । इयमत्र
मिश्रद्विकमौदारिकमिश्रवैक्रियमिश्रलक्षणं, 'कंम त्ति' कार्मणशरीरं, 'अण त्ति' अनन्तानुबन्धिनस्तैर्विना । इयमत्र
भावना-"न सम्ममिछो कुणइ कालमिति" वचनात् सम्यग्मिथ्यादृष्टेः परलोकगमनाभावादौदारिकमिश्रवैक्रियमिश्रद्विकं
कार्मणं च न संभवति, अनन्तानुबन्ध्युदयस्य चास्य निषिद्धत्वादनन्तानुबन्धिचतुष्टयं च नास्ति, अत एतेषु सप्तसु पूर्वो-
क्तायाः पंचाशतोऽपनीतेषु शेषास्त्रिचत्वारिंशद्बन्धहेतवो मिश्रे भवन्ति । अथानन्तरं षट्चत्वारिंशद्बन्धहेतवो भवन्ति॥५५॥
सदुमिस्सकंम अजए अविरइकम्मुरलमीसबिकसाए। मुत्तु गुणचत्त देसे छवीस साहारदु पमत्ते ॥ ५६ ॥
टीका-केत्याह-अयतेऽविरते, कथमित्याह-'सदुमिस्सकंम त्ति' द्वयोर्मिश्रयोः समाहारो द्विमिश्रं, द्विमिश्रं च कार्मणं
च द्विमिश्रकार्मणं, सह द्विमिश्रकार्मणेन वर्तते या त्रिचत्वारिंशत् । इयमत्र भावना-अविरतसम्यग्दृष्टेः परलोकगमनसंभ-
वात् पूर्वापनीतमौदारिकमिश्रवैक्रियमिश्रलक्षणं द्विकं कार्मणं च पूर्वोक्तायां त्रिचत्वारिंशति पुनः प्रक्षिप्यते, ततोऽविरते
षट्चत्वारिंशद्बन्धहेतवो भवन्ति । तथा देशे देशविरते एकोनचत्वारिंशद्बन्धहेतवो भवन्ति, कथमित्याह-अविरतिस्त्र-
सासंयमरूपा, कार्मणं, औदारिकमिश्रं, द्वितीयकषायानप्रत्याख्यानावरणान्, मुक्त्वा शेषा एकोनचत्वारिंशदिति । अत्रा-
यमाशयः-विग्रहगतावपर्याप्तकावस्थायां च देशविरतेरभावात्कार्मणौदारिकमिश्रद्वयं न संभवति, त्रसासंयमाद्विरतत्वा-
त्रसाविरतिर्न जाघटीति । ननु त्रसासंयमात् संकल्पजादेवासौ विरतो न त्वारंभजादपि तत्कथमसौ त्रसाविरतिः सर्वा-

प्यपनीयते ? सत्य, कि तु गृहिणामशक्यपरिहारत्वेन सत्यप्यारम्जजा त्रसाविरतिर्न विरद्धितेत्यदोष , एतच्च बृहच्छतकबृहच्चूर्णिमनुसृत्य लिखितमिति न स्वमनीषिका परिज्ञावनीया । तथाऽप्रत्याख्यानावरणोदयस्यास्य निषिद्धत्वादित्यप्रत्याख्यानावरणचतुष्टय न घटा प्राचति, तत एते सप्त पूर्वोक्ताया पट्चत्वारिशतोऽपनीयन्ते, तत एकोनचत्वारिशद्बन्धहेतव शेषा देशविरते जवन्ति । तथा पड्विंशतिर्बन्धहेतव प्रमत्ते जवन्ति । 'साहारड त्ति' सहाहारद्विकेनाहारकाहारकमिश्रलक्षणेन वर्तत इति साहारकद्विका ॥ ५६ ॥

अविरइ इगार तिकसायवज्ज अपमत्ति मीसडुगरहिया।चउवीस अपुव्वे पुण डुवीस अविउव्वियाहारे५७

टीका–त्रसाविरतेर्देशविरतेऽपनयनाच्छेपा एकादशाविरतय इह गृह्यन्ते । तृतीया कषायास्त्रिकषाया प्रत्याख्यानावरणास्तद्वर्जास्तद्विरहिता साहारकद्विका च सैवैकोनचत्वारिशत् पड्विंशतिर्जवति । इदमत्र हृदयम्–प्रमत्तगुणस्थान एकादशधाऽविरति प्रत्याख्यानावरणचतुष्टय च न संजवति, आहारकद्विक च सम्जवति, तत पूर्वोक्ताया एकोनचत्वारिंशत पचदशकेऽपनीते द्विके च तत्र प्रक्षिप्ते पड्विंशतिर्बन्धहेतव प्रमत्ते जवन्तीति । तथाऽप्रमत्तस्य लब्ध्यनुपजीवनेनाहारकमिश्रवैक्रियमिश्रलक्षणमिश्रद्विकरहिता सैव पड्विंशतिश्चतुर्विंशतिर्बन्धहेतवोऽप्रमत्ते जवन्ति । अपूर्वे अपूर्वकरणे पुन सैव चतुर्विंशतिवक्रियाहारकरहिता द्वाविंशतिर्बन्धहेतवो जवन्तीति ॥ ५७ ॥

अठहास सोल वायरि सुहुमे दस वेयसंजलणति विणा। खीणवसंति अलोजा सजोगि पुव्वुत्त सग जोगा

टीका-एते च पूर्वोक्ता द्वाविंशतिर्बन्धहेतवोऽष्टहासा हास्यरत्यरतिशोकभयजुगुप्सालक्षणहास्यषट्करहिताः षोडश बन्धहेतवः 'बायरि त्ति' अनिवृत्तिबादरसंपरायगुणस्थानके भवन्ति, हास्यादिषट्कस्यापूर्वकरणगुणस्थानक एव व्यवच्छिन्नत्वादिति भावः। तथा त एव षोडश त्रिकशब्दस्य प्रत्येकं संबन्धाद्वेदत्रिकं स्त्रीपुंनपुंसकलक्षणं, संज्वलनत्रिकं संज्वलनक्रोधमानमायारूपं, तेन विना दश बन्धहेतवः सूक्ष्मसंपराये भवन्ति। वेदत्रयस्य संज्वलनक्रोधमानमायात्रिकस्य चानिवृत्तिबादरसंपरायगुणस्थानक एव व्यवच्छिन्नत्वात्। त एव दश अलोभा लोभरहिताः सन्तो नव बन्धहेतवः। क्षीणमोह उपशान्तमोहे च भवन्ति, मनोयोगचतुष्कवाग्योगचतुष्कौदारिककाययोगलक्षणा नव बन्धहेतव उपशान्तमोहे क्षीणमोहे च प्राप्यन्ते, न तु लोभस्तस्य सूक्ष्मसंपराय एव व्यवच्छिन्नत्वात्। सयोगिकेवलिनि पूर्वोक्ताः सप्त योगास्तथाहि-औदारिकमौदारिकमिश्रं कार्मणं प्रथमान्तिमौ मनोयोगौ प्रथमान्तिमौ वाग्योगौ चेति। तत्रौदारिकं सयोग्यवस्थायामौदारिकमिश्रकार्मणकाययोगौ समुद्घातावस्थायामेव वेदितव्यौ। "मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु। कार्मणशरीरयोगी चतुर्थके पंचमे तृतीये चेति ॥ १ ॥" प्रथमान्तिममनोयोगौ भगवतोऽनुत्तरसुरादिभिर्मनसा पृष्टस्य मनसैव देशनात्, प्रथमान्तिमवाग्योगौ तु देशनादिकाले। अयोगिकेवलिनि न कश्चिद्बन्धहेतुर्योगस्यापि व्यवच्छिन्नत्वात् ॥ ५८ ॥

उक्ता गुणस्थानकेषु बन्धहेतवः संप्रति गुणस्थानकेष्वेव बन्धं निरूपयन्नाह—

**अपमत्तंता सत्तट्ठ मीसअपुव्वबायरा सत्त। बंधइ छस्सुहुमो एगमुवरिमाबंधगाऽजोगी ॥ ५९ ॥**

टीका-मिथ्यादृष्टिप्रभृतयोऽप्रमत्तान्ताः सप्ताष्टौ वा कर्माणि बध्नन्ति, आयुर्बन्धकालेऽष्टौ शेषकालं तु सप्त। 'मीसअ-

पुव्वायरा' इति मिश्रापूर्वकरणानिवृत्तिबादरा सप्तैव बध्नन्ति, तेषामायुर्बन्धाभावात्। तत्र मिश्रस्य तथास्वाभाव्यात्, इतरयोः पुनरतिविशुद्धत्वादायुर्बन्धस्य च घोलनापरिणामनिबन्धनत्वात्। 'सुहुमु त्ति' सूक्ष्मसंपरायो मोहनीयायुर्वर्जानि षट् कर्माणि बध्नाति, मोहनीयबन्धस्य बादरकषायोदयनिमित्तत्वात्, तस्य च तदभावात्, आयुर्बन्धाभावस्त्वतिविशुद्धत्वादवसेयः। 'एगमुवरिमि त्ति' एकं सातवेदनीयं कर्मोपरितनाः सूक्ष्मसंपरायादुपरिष्टाद्वर्तिनः उपशान्तमोहक्षीणमोहसयोगिकेवलिनो बध्नन्ति, न शेषकर्माणि, तद्बन्धहेतुत्वाभावात्। अबधकः सर्वकर्मप्रपञ्चबन्धरहितोऽयोगी चरमगुणस्थानकवर्ती, सर्वबन्धहेतुत्वाभावादिति ॥ ५९ ॥

उक्ता गुणस्थानकेषु बन्धस्थानयोजना, सांप्रतं गुणस्थानकेष्वेवोदयसत्तास्थानयोजनां निरूपयन्नाह—

**आसुहुमं संतुदए अट्ठ वि मोह विणु सत्त खीणंमि। चउ चरिमदुगे अट्ठउ संते उवसंति सत्तुदए ॥६०॥**

टीका—सूक्ष्मसंपरायगुणस्थानकमभिव्याप्य सत्तायामुदये चाष्टावपि कर्मप्रकृतयो भवन्ति। अयमर्थः—मिथ्यादृष्टिगुणस्थानमारभ्य सूक्ष्मसंपरायं यावत् सत्तायामुदये चाष्टावपि कर्माणि प्राप्यन्ते। मोह विना मोहनीयं वर्जयित्वा सप्त कर्मप्रकृतयो भवन्ति क्षीणे क्षीणमोहगुणस्थानके सत्तायामुदये च, मोहनीयस्य क्षीणत्वात्। 'चउ चरिमदुगे त्ति' चरमद्विके सयोग्ययोगिकेवलिगुणस्थानद्वये सत्तायामुदये च चतस्रोऽघातिकर्मप्रकृतयो भवन्ति, घातिकर्मचतुष्टयस्य क्षीणत्वात्। 'अट्ठ उ संते उवसंति सत्तुदए त्ति' तुशब्दस्य व्यवहितसंबन्धादुपशान्तमोहगुणस्थानके पुनरष्टावपि कर्मप्रकृतयः सत्तायां प्राप्यन्ते, सप्तोदये मोहनीयोदयाभावादिति भावः ॥ ६० ॥

उक्ता सत्तोदयस्थानयोजना, सांप्रतमुदीरणास्थानानि गुणस्थानकेषु निरूपयितुमाह–

**उइरंति पमत्तंता सग ठ मीस ठ वेयआउ विणा । छग अपमत्ताइ तओ छ पंच सुहुमो पणुवसंतो ॥६१॥**

टीका–मिथ्यादृष्टिप्रभृतयः प्रमत्तान्ता यावदद्याप्यनुभूयमानभवायुरावलिकाशेषं न भवति तावत् सर्वेऽप्यमी निरन्तरमष्टावपि कर्माण्युदीरयन्ति । आवलिकावशेषे पुनरनुभूयमाने भवायुषि सप्तैव, आवलिकावशेषस्य कर्मण उदीरणाया अभावात्, तथास्वाभाव्यात् । 'मीसठ त्ति' सम्यग्मिथ्यादृष्टिः पुनरष्टावेव कर्माण्युदीरयति, न तु कदाचनापि सप्त, सम्यग्मिथ्यादृष्टिगुणस्थानके वर्तमानस्य सत आयुष आवलिकावशेषत्वाभावात् । स ह्यन्तर्मुहूर्तावशेषायुष्क एव तद्भावं परित्यज्य सम्यक्त्वं मिथ्यात्वं वा नियमात्प्रतिपद्यत इति । अप्रमत्तादयस्त्रयोऽप्रमत्तापूर्वकरणानिवृत्तिबादरलक्षणा वेद्यायुर्विना वेदनीयायुषी अन्तरेण षट् कर्माणि उदीरयन्ति, तेषामतिविशुद्धतया वेदनीयायुषोरुदीरणायोग्याध्यवसायस्थानाभावात् । ( छ पंच सुहुमोत्ति ) तत्र षट् अनन्तरोक्तानि तानि च तावदुदीरयन्ति, यावन्मोहनीयमावलिकावशेषं न भवति । आवलिकावशेषे च मोहनीये तस्याप्युदीरणाया अभावात् । शेषाणि पंच कर्माण्युदीरयति ( सूक्ष्मः ) । 'पणुवसंतु त्ति' उपशान्तमोहः पंच कर्माण्युदीरयति, न वेदनीयायुर्मोहनीयकर्माणि, तत्र वेदनीयायुषोः कारणं प्रागेवोक्तं, मोहनीयं तूदयाभावान्नोदीर्यते "वेद्यमानमेवोदीर्यत" इति वचनादिति ॥ ६१ ॥

**पण दो खीण दु जोगी णुदीरगजोगि थोव उवसंता । संखगुण खीण सुहुमानियट्टिअपुव्व सम अहिया ६२**

टीका–क्षीणमोहोऽनन्तरोक्तानि पंच कर्माण्युदीरयति। तानि च तावदुदीरयति यावज्ज्ञानावरणदर्शनावरणांतराया-ण्यावलिकाप्रविष्टानि न भवन्ति, आवलिकाप्रविष्टेषु तेषु तेषामप्युदीरणाया अभावात्। द्वे एव नामगोत्रलक्षणे कर्मणी उदीरयति। 'सजोगि त्ति' द्वे कर्मणी नामगोत्राख्ये योगा नाम मनोवाक्कायरूपा विद्यन्ते यस्य स योगी सयोगिकेवल्युदीरयति, न शेषाणि। घातिकर्मचतुष्टय तु मूलत एव क्षीणमिति न तस्योदीरणासम्भव, वेदनीयायुषोस्तूदीरणा पूर्वोक्तकारणादेव न भवति। 'अणुदीरगुअजोगि त्ति' अयोगिकेवली न कस्यापि कर्मण उदीरकः, योगसव्यपेक्षत्वादुदीरणाया, तस्य च योगाभावादिति। उक्ता गुणस्थानकेषूदीरणास्थानयोजना, सम्प्रति गुणस्थानकेष्वेव वर्तमानाना जन्तूनामल्पबहुत्वमाह–'थोव (थेव) उवसत त्ति' स्तोका उपशान्तमोहगुणस्थानवर्तिनो जीवा, यतस्ते प्रतिपद्यमानका उत्कर्षतोऽपि चतुःपंचाशत्प्रमाणा एव प्राप्यन्त इति। तेभ्य सकाशात् क्षीणमोहा सख्येयगुणा, यतस्ते प्रतिपद्यमानका एकस्मिन् समयेऽष्टोत्तरशतप्रमाणा अपि लभ्यन्ते, एतच्चोत्कृष्टपदापेक्षयोक्तमन्यथा कदाचिद्विपर्ययोऽपि द्रष्टव्य। स्तोका क्षीणमोहा बहवस्तु तेभ्य उपशान्तमोहा। तथा तेभ्य क्षीणमोहेभ्य सकाशात् सूक्ष्मसपरायानिवृत्तिबादरापूर्वकरणा विशेषाधिका, स्वस्थाने पुनरेते चिन्त्यमानास्त्रयोऽपि समास्तुल्या इति ॥ ६२ ॥

**जोगि अपमत्त इयरे संखगुणा देसेसासणामीसा। अविरय अजोगि मिच्छा असंख चउरो दुवे णंता॥६३॥**

टीका–तेभ्य सूक्ष्मादिभ्यः सयोगिकेवलिन सख्यातगुणा, तेषा कोटीपृथक्त्वेन लभ्यमानत्वात्। तेभ्योऽप्रमत्ता सख्येयगुणा, कोटीसहस्रपृथक्त्वेन प्राप्यमाणत्वात्। तेभ्य 'इयर त्ति' अप्रमत्तप्रतियोगिनः प्रमत्ता सख्येयगुणाः।

प्रमादभावो हि बहूनां बहुकालं च लभ्यते विपर्ययेण त्वप्रमाद इति न यथोक्तसंख्याव्याघातः । 'देसेत्यादि' देशविरत-सास्वादनमिश्राविरतलक्षणाश्चत्वारो यथोत्तरमसंख्येयगुणाः । अयोगिमिथ्यादृष्टिलक्षणौ च द्वौ यथोत्तरमनन्तगुणौ । तत्र प्रमत्तेभ्यो देशविरता असंख्येयगुणाः, तिरश्चामप्यसंख्यातानां देशविरतिभावात् । सास्वादनास्तु कदाचित् सर्वथैव न भवन्ति, यदा भवन्ति तदा जघन्येनैको द्वौ वा, उत्कर्षतस्तु देशविरतेभ्योऽप्यसंख्येयगुणाः । तेभ्यो मिश्रा असंख्येयगुणाः, सास्वादनाद्धाया उत्कर्षतोऽपि षडावलिकामात्रतया स्तोकत्वात्, मिश्राद्धायाः पुनरन्तमुहूर्तप्रमाणतया प्रभूतत्वात् । तेभ्योऽप्यसंख्येयगुणा अविरतसम्यग्दृष्टयः, तेषां गतिचतुष्टयेऽपि प्रभूततया सर्वकालसंभवात् । तेभ्योऽप्ययोगिकेवलिनो ( भवस्थाभवस्थभेदभिन्ना ) अनन्तगुणाः, सिद्धानामनन्तत्वात् । तेभ्योऽप्यनन्तगुणा मिथ्यादृष्टयः, साधारणवनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेषां च मिथ्यादृष्टित्वादिति ॥ ६३ ॥

तदेवमभिहितं गुणस्थानवर्तिनां जीवानामल्पबहुत्वम्, इदानीं 'नमिय जिणं जियमग्गण' इत्यादि द्वारगाथासूचितं भावद्वारं व्याचिख्यासुराह—

**उवसमखयमीसोदयपरिणामा दु नव द्वार इगवीसा । तियभेय संनिवाइय संमं चरणं पढमभावे ॥ ६४ ॥**

टीका—इह किल षड् भावा भवन्ति । विशिष्टहेतुभिः स्वतो वा जीवानां तत्तद्रूपतया भवनानि भवन्त्येभिरुपशमादिभिः पर्यायैरिति वा भावाः । किंनामानः पुनस्त इत्याह—'उवसमखयमीसोदयेत्यादि' अत्र सूचकत्वात्सूत्रस्यैवं प्रयोगः, 'उपसमि त्ति' औपशमिको भावः, 'खय त्ति' क्षायिको भावः, 'मीस त्ति' क्षायोपशमिको भावः, 'उदय त्ति' औदयिको

भाव', 'परिणाम त्ति' पारिणामिको भाव । तत्रोपशमनमुपशमो विपाकप्रदेशरूपतया द्विविधस्याप्युदयस्य विष्कम्भण स एव, तेन वा निर्वृत्त औपशमिक । क्षय कर्मणोऽत्यन्तोच्छेद स एव, तेन वा निर्वृत्त क्षायिक । क्षयश्च समुदीर्णस्याभाव, उपशमश्चानुदीर्णस्य विष्कम्भितोदयत्व ताभ्या निर्वृत्त क्षायोपशमिक । उदय शुभाशुभप्रकृतीना विपाकतोऽनुभवन स एव, तेन वा निर्वृत्त औदयिक । परि समन्तान्नमन जीवानामजीवाना च जीवत्वादिस्वरूपानुभवन प्रति प्रह्वीभवन परिणाम स एव, तेन वा निर्वृत्तः पारिणामिक । एतेषामेव यथासंख्य भेदानाह—'दु नव घार इगवीसा तिय भेय त्ति' द्वौ भेदावौपशमिकस्य, नव भेदा क्षायिकस्य, अष्टादश भेदा क्षायोपशमिकस्य, एकविंशतिर्भेदा औदयिकस्य, त्रयो भेदा पारिणामिकस्य । 'संनिवाइय त्ति' समिति सहतरूपतया, नीति नियत, पतनं गमनमेकत्र वर्तन सनिपात, कोऽर्थ ? एपामेव द्व्यादिसयोगप्रकारस्तेन निर्वृत्त सानिपातिक, अय च षष्ठो भाव । अथ "यथोद्देश निर्देश" इति न्यायादौपशमिकादिभावाना द्व्यादीन् भेदान् प्रचिकटयिषुराह—'सम चरण पढमभावे त्ति' इह यथासख्य दर्शनमोहनीयचारित्रमोहनीयकर्मोपशमभूत सम्यक्त्व चरण च प्रथम आद्ये भाव औपशमिकलक्षणे भवतीति शेष । इति निरूपितौ द्वौ भेदावौपशमिकभावस्य ॥ ६४ ॥

बीए केवलजुयल सम दाणाइलद्धि पण चरण । तइए सेसुवओगा पण लद्धी संमविरइदुग ॥ ६५ ॥

टीका—द्वितीये क्षायिके भावे नव भेदा भवन्ति । तथाहि—केवलयुगल केवलज्ञान केवलदर्शन ( च ) । तत्र केवलज्ञानावरणक्षयभूतत्वेन क्षायिक केवलज्ञानं, केवलदर्शनावरणक्षयसभूत क्षायिक केवलदर्शन, दर्शनमोहनीयक्षयसमुत्थ

क्षायिकं सम्यक्त्वं, दानादिलब्धयः पंच दानलाभभोगोपभोगवीर्यलक्षणा दानादिरूपपंचप्रकारान्तरायक्षयोद्भूताः क्षायिक्यः, चारित्रमोहनीयक्षयसंभूतं च क्षायिकं चरणं यथाख्यातसंज्ञितमित्यर्थः । तथा तृतीये क्षायोपशमिकभावेऽष्टादश भेदा भवन्ति । तद्यथा–शेषोपयोगाः केवलज्ञानकेवलदर्शनव्यतिरिक्ता मतिज्ञानश्रुतज्ञानावधिज्ञानमनःपर्यवज्ञानरूपज्ञानचतुष्टयमत्यज्ञानश्रुताज्ञानविभंगज्ञानरूपाज्ञानत्रिकचक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनलक्षणदर्शनत्रिकस्वरूपा दशोपयोगाः, 'पण लद्धि त्ति' पदैकदेशे पदसमुदायोपचाराद्दानलाभभोगोपभोगवीर्यलक्षणा लब्धयः पंच, 'संमं त्ति' सम्यक्त्वं, विरतिद्विकं देशविरतिसर्वविरतिलक्षणमित्येतेऽष्टादश भेदाः क्षायोपशमिके भवन्ति । तत्र चत्वारि ज्ञानानि त्रीण्यज्ञानानि ज्ञानावरणीयकर्मक्षयोपशमसंभूतत्वेन, त्रीणि दर्शनानि दर्शनावरणक्षयोपशमोद्भूतत्वेन, पंच दानादिलब्धयः पंचविधान्तरायकर्मक्षयोपशमजन्यत्वेन क्षायोपशमिकभावान्तर्वर्तिन्य इति । ननु दानादिलब्धयः पूर्वं क्षायिकभाववर्तिन्य उक्ताः, इह तु क्षायोपशमिक्य इति कथं न विरोधः ? नैतदेवम्, अभिप्रायापरिज्ञानात् । इह दानादिलब्धयो द्विविधा भवन्त्यन्तरायकर्मणः क्षयसंभविन्यः क्षायोपशमसंभविन्यश्च, तत्र च याः क्षायिक्यः पूर्वमुक्तास्ताः क्षयसंभूतत्वेन केवलिन एव, याः पुनरिह क्षायोपशमिकान्तर्गता उच्यन्ते ताः क्षयोपशमसंभूताश्छद्मस्थानामेव । सम्यक्त्वसर्वविरती अपि क्षायोपशमिके अत्र ग्राह्ये, ते च क्षयोपशमोद्भवत्वेन प्रस्तुतभाव एव वर्तेते इति भावः । देशविरतिरप्यप्रत्याख्यानावरणक्षयोपशमजत्वेन क्षायोपशमिकभावे वर्तत एवेति ॥ ६५ ॥

अन्नाणमसिद्धत्तासंजमलेसाकसायगइवेया । मिछं तुरिए भवाभवत्तजियत्तपरिणामे ॥ ६६ ॥

टीका–अज्ञान, असिद्धत्व, असयम , लेश्या कृष्णनीलकापोततेज पद्मशुक्ललेश्याभेदात् षट्, कषाया क्रोधमानमायालोभाख्याश्चत्वार , गतिर्नरकतिर्यङ्मनुष्यसुरगतिभेदाच्चतुर्धा, वेदा स्त्रीपुनपुसकाख्यास्त्रय , मिथ्यात्वमित्येते एकविंशतिभेदास्तुर्ये चतुर्थे औदयिके भावे भवन्तीत्यक्षरार्थ । भावार्थ पुनरयम्–इहासदध्यवसायात्मक सज्ज्ञानमप्यज्ञानं, तच्च मिथ्यात्वोदयजमेव । यदभ्यधायि–"जंह दुवयणमवयण कुच्छियसील असीलमसईए । भन्नइ तह नाण पि हु मिच्छद्दिट्ठिस्स अन्नाण ॥ १ ॥" असिद्धत्वमपि सिद्धत्वाभावरूपमष्टप्रकारकर्मोदयजमेव । असयमोऽविरतत्व, तदपि अप्रत्याख्यानावरणोदयाज्जायते । लेश्यास्तु येषा मते कषायनिष्यन्दो लेश्या तन्मतेन कषायमोहनीयोदयजत्वादौदयिक्य , यन्मतेन तु योगपरिणामो लेश्या तदभिप्रायेण योगत्रयजनककर्मोदयप्रभवा , येषा त्वष्टकर्मपरिणामो लेश्यास्तन्मतेन ससारित्वासिद्धत्ववदष्टप्रकारकर्मोदयजा इति । कषाया क्रोधमानमायालोभरूपा मोहनीयकर्मोदयादेव भवन्ति। इह गतयो गतिनामकर्मोदयादेव नारकत्वतिर्यक्त्वमनुजत्वदेवत्वलक्षणपर्याया जायन्त इति । वेदा स्त्रीपुनपुसकाख्या नोकषायमोहनीयोदयादेव जायमाना स्पष्टमौदयिका एवेति । मिथ्यात्वमप्यतत्त्वश्रद्धानरूप मिथ्यात्वमोहनीयोदयजमेवेत्यौदयिकं प्रतीतमिति । ननु निद्रापचकमातादिवेदनीयहास्यरत्यरतिप्रभृतय प्रभूततरभावा अन्येऽपि कर्मोदयजन्या सन्ति तत्किमित्येतावन्त एवैते निर्दिष्टा ? सत्यम्, उपलक्षणत्वादन्येऽपि द्रष्टव्या , केवल पूर्वशास्त्रेषु प्राय एतावन्त एव निर्दिष्टा दृश्यन्त इत्यत्राप्येतावन्त एवास्माभि प्रदर्शिता । तथा भव्यत्वमभव्यत्व जीवत्वमित्येते त्रयो भेदा पारिणामिके भावे

१ यथा दुर्वचनमवचन असत्या कुत्सित शील चाशील । भण्यते तथा ज्ञानमपि मिथ्यादृष्टेरज्ञानमेव ।

भवन्ति । तदेवं द्विभेद औपशमिको भावः, नवभेदः क्षायिकः, अष्टादशभेदः क्षायोपशमिकः, एकविंशतिभेद औदयिकः, त्रिभेदः पारिणामिकः । सर्वेऽपि भावपंचकभेदास्त्रिपंचाशदिति ॥ ६६ ॥

प्ररूपितं सप्रभेदं भावपंचकं, अधुना सान्निपातिकाख्यषष्ठभावभेदप्ररूपणायोपक्रम्यते । तत्र च यद्यप्यौपशमिकादिभावानां पंचानामपि द्विकादिसंयोगभंगाः षड्विंशतिर्भवन्ति, तद्यथा–औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिक इति भावपंचकं पट्टकादावालिख्यते, ततो दश द्विकसंयोगा अक्षसंचारणया लभ्यन्ते, दशैव त्रिकसंयोगाः, पंच चतुष्कसंयोगाः, एकः पंचकसंयोग इति, तथापि षडेव संयोगा जीवेष्वविरुद्धाः संभवन्ति, शेषास्तु विंशतिः संयोगभंगाः प्ररूपणामात्रभावित्वेनासंभविन एव, अतः संभविषड्भेदद्वारेण गत्याद्याश्रिता यावन्तः सान्निपातिकभावभेदाः संभवन्ति यावन्तश्च न संभवन्ति तदेतत्प्रकटयन्नाह–

**चउ चउगईसु मीसगपरिणामुदएहिं चउ सखइएहिं।उवसमजुएहिं वा चउकेवलिपरिणामुदयखइए६७**

टीका–चत्वारो भंगाश्चतसृषु गतिषु चिन्त्यमानासु भवन्ति । कैः कृत्वेत्याह–मिश्रकपारिणामिकौदयिकौदयिकैर्भावैर्यथावर्णितस्वभावैः । इयमत्र भावना–गतिचतुष्टयद्वारेण चिन्त्यमानः क्षायोपशमिकपारिणामिकौदयिकलक्षण एकोऽप्ययं त्रिकसंयोगरूपः सांनिपातिको भावश्चतुर्धा भवति । तथा हि–क्षायोपशमिकानीन्द्रियाणि, पारिणामिकं जीवत्वादि, औदयिकी नरकगतिः इत्येको नरकगत्याश्रितस्त्रिकसंयोगः । एवं तिर्यङ्मनुष्यदेवगत्यभिलापेन त्रयो भंगका अन्येऽपि वाच्याः । इत्येवं चतुर्विधां गतिं प्रतीत्य त्रिकसंयोगेन चत्वारो भेदा निरूपिताः, संप्रति चतुःसंयोगेन चतुरो भेदानाह–

'भउ मणउणहि त्ति' भवागे भेदा भवन्ति । केरित्याह-सह क्षायिकेण वर्तन्ते ये क्षायोपशमिकपारिणामिकौदयिक-युग्मा भावास्ते तथा तैः निष्पन्नाः सक्षायिके सन्निपातिके । अयमर्थ –गतिचतुष्टयद्वारेण चिन्त्यमान क्षायोपशमिकपारिणामिकौदयिकक्षायिकयुग्मा एकोऽप्येष चतुष्कसयोगरूप सान्निपातिको भावश्चतुर्धा भवति । तद्यथा–क्षायोपशमिकानीन्द्रियाणि, पारिणामिक जीवत्वादि, औदयिकी नरकगति, क्षायिक सम्यक्त्वमित्येको नरकगत्याश्रितश्चतुष्कसयोग । एव तिर्यग्मनुष्यदेवगत्यभिलापेन त्रयो भगका अन्येऽपि वाच्या । इत्येव चतुर्विधा गति प्रतीत्येकप्रकारेण चतुष्कसयोगेन चत्वारो भेदा निरूपिता , अधुना प्रकारान्तरेण चतुष्कसयोग एव चतुरो भेदानाह–'उवसमजुएहि वा चउ त्ति' वाशब्दोऽथवाशब्दार्थः, अथवा क्षायिकभावाभावे औपशमिकेन प्रदर्शितस्वरूपेण भावेन युते कलिते पूर्वोक्ते क्षायोपशमिकपारिणामिकौदयिकैस्त्रिभिर्निष्पन्नस्य सान्निपातिकभावस्य गतिचतुष्क प्रतीत्य चत्वारश्चतु सख्या भेदा भवन्तीति शेषः । तद्यथा–क्षायोपशमिकानीन्द्रियाणि, पारिणामिक जीवत्व, औदयिकी नरकगति , औपशमिक सम्यक्त्वमित्येको नरकगत्याश्रितश्चतुष्कसयोग । एव तिर्यग्मनुष्यदेवगत्यभिलापेन त्रयो भगा अन्येऽपि वाच्या । तदेवमभिहिता गतिचतुष्टयमाश्रित्यैतेन द्विकसयोगेन भाव्या चतुष्कसयोगाश्च्या द्वादश विकल्पा , सम्प्रति शुद्धसयोगत्रयस्वरूप शेष भेदत्रय निरूपयिषुराह–'केवलिपरिणामुदयखइए त्ति' केवली केवलज्ञानी पारिणामिकौदयिकक्षायिके सान्निपातिकभेदे त्रिकसयोगरूपे वर्तते । तत्रास्य पारिणामिक जीवत्वादि औदयिकी मनुजगतिः, क्षायिकाणि ज्ञानदर्शनचारित्राणि, तदेवमेकस्त्रिकसयोगः केवलिषु सभवतीति ॥ ६३ ॥

खयपरिणामि सिद्धा नराण पण जोगुवसमसेढीए। इय पनर संनिवाइयन्नेया वीसं असंन्नविणो ॥६८॥

टीका–सिद्धा निर्दग्धसकलकर्मेन्धनाः क्षायिकपारिणामिके सान्निपातिकन्नेदे द्विकसंयोगरूपे वर्तन्ते। तथाहि–सिद्धानां क्षायिकं ज्ञानदर्शनादि, पारिणामिकं जीवत्वमिति द्विकसंयोगो न्नवति। नराणां मनुष्याणां पंचकसंयोगः सान्निपातिकन्नेद उपशमश्रेण्यामेव प्राप्यते, यतो यः क्षायिकसम्यग्दृष्टिर्मनुष्य उपशमश्रेणीं प्रतिपद्यते, तस्यौपशमिकं चारित्रं, क्षायिकं सम्यक्त्वं, क्षायोपशमिकानीन्द्रियाणि, औदयिकी मनुजगतिः, पारिणामिकं जीवत्वं, न्नव्यत्वं चेति। इत्यमुना दर्शितप्रकारेण गत्यादिषु संयोगपद्धचिन्तनलक्षणेन परस्परविरोधान्नावेन संन्नविनः पंचदश सांनिपातिकन्नेदाः पञ्चन्नावविकल्पाः प्ररूपिता इति शेषः। 'वीसं असंन्नविणो त्ति' विंशतिसंख्याः संयोगा असंन्नविनः, प्ररूपणामात्रन्नावित्वेन, न जीवेषु तेषां संन्नवोऽस्तीति। ननु षड्विंशतिन्नेदाः प्राक् प्रदर्शिताः, इह तु पंचदशानां विंशतेश्च मीलने पंचत्रिंशत्संख्या न्नेदाः प्राप्नुवन्तीति कथं न विरोधः? अत्रोच्यते–ननु विस्मरणशीलो देवानांप्रियो यतोऽनन्तरमेवोदितं गत्यादिद्वारेणैव ते चिन्त्यमानाः पंचदश न्नवन्ति, मौला द्व्यादिसंयोगास्तु षडेव। तथाहि–एको द्विकसंयोगः, द्वौ त्रिकसंयोगौ, द्वौ चतुष्कसंयोगौ, एकः पंचकसंयोग इति षण्णां विंशत्या मीलने षड्विंशतिसंख्यैवोपजायते इति नात्र कश्चन विरोध इति ॥ ६८ ॥

अन्निहिताः सप्रन्नेदा जीवानामौपशमिकादयो न्नावाः, सांप्रतमेतानेव कर्मविषये चिन्तयन्नाह—

मोहे व समो, मीसो चउघाइसु, अठ्ठकंमसु य सेसा। धम्माइपारिणामियन्नावे खंधा उदइए वि ॥ ६९ ॥

टीका–मोहे एव षष्ठीसप्तम्योरर्थं प्रत्यभेदाद्यथा वृक्षे शाखा वृक्षस्य शाखा, मोहनीयस्यैव कर्मण शम उपशमोऽनुदयावस्था भस्मच्छन्नाग्नेरिव न तु समस्ताना कर्मणा 'मीसो चउघाइसु त्ति' मिश्र क्षयोपशमस्तत्र क्षय उदयावस्थस्यात्यन्ताभावस्तेन सहोपशमोऽनुदयावस्था दरविध्यातवह्निवत् क्षयोपशम', चतुर्षु चतु सख्येषु घातिषु ज्ञानादिगुणघातकेषु कर्मस्वित्युत्तरोक्तमत्रापि सवन्धनीय, ततो ज्ञानावरणदर्शनावरणमोहनीयान्तरायलक्षणाना घातिकर्मणामेव क्षयोपशमो भवति न त्वघातिकर्मणामिति। अष्टकर्मसु ज्ञानावरणाद्यन्तरायावसानेषु 'च पुनरर्थे' अष्टकर्मसु पुन शेषा औदयिकक्षायिकपारिणामिकभावा भवन्ति। तत्रोदयो विपाकानुभवन, क्षयोऽत्यन्ताभाव, परिणामस्तेन तेन रूपेण परिणमनमित्यक्षरार्थ । भावार्थस्त्वयम्–मोहनीयकर्मण पचापि भावा प्राप्यन्ते, मोहनीयवर्जितज्ञानावरणदर्शनावरणान्तरायलक्षणाना तु त्रयाणा घातिकर्मणामुदयक्षयक्षयोपशमपरिणामस्वभावाश्चत्वार एव भावा भवन्ति न पुनरुपशमः। शेषाणा वेदनीयायुर्नामगोत्रस्वरूपाणा चतुर्णामप्यघातिकर्मणामुदयक्षयपरिणामलक्षणास्त्रय एव भावा भवन्ति, न तु क्षयोपशमोपशमाविति । प्रतिपादिता जीवेषु तदाश्रितकर्मसु च पचापि भावा, अधुना तानजीवेषु विभणिषुराह–'धम्माऽ' इत्यादि, इह पदैकदेशो पदसमुदायोपचाराद्धर्मास्तिकाय, अधर्मास्तिकाय., आकाशास्तिकाय, पुद्गलास्तिकाय, कालद्रव्य चेति परिगह। तत्र धारयति गतिपरिणतजीवपुद्गलास्तत्स्वभावतायामवस्थापयतीति धर्म, अस्तयश्चेह प्रदेशास्तेषा चीयत इति काय सघातोऽस्तिकाय, ततो धर्मश्चासावस्तिकायश्च धर्मास्तिकाय । तथा न धारयति गतिपरिणतानपि जीवपुद्गलास्तत्स्वभावताया नावस्थापयतीति स्थित्युपष्टम्भकत्वात्तस्येत्यधर्म' शेष प्राग्वत्। आ समन्तात् काशतेऽवगाहदान-

तया प्रतिभासत इत्याकाशः शेपं प्राग्वत्। पूरणगलनधर्माणः पुद्गलाः "पृषोदरादित्वादिष्टरूपसिद्धिः शेपं पूर्ववत्। तथा "कलण् संख्याने" कलनं कालः, कल्यते वा परिच्छिद्यते वस्त्वनेनेति कालः, कलानां वा समयादिरूपाणां समूहः कालः। आह–सामूहिके प्रत्यये नपुंसकलिंगेन भवितव्यं, यथा कापोतं मायूरं चेति, यदाहुः श्रीहेमचन्द्रसूरिपादाः। उच्यते, रूढिवशाल्लिंगस्य न नियमः। यदाह पाणिनिः–"लिंगमशिष्यं लोकाश्रयत्वात्तस्येति" ततः काल एव तत्तद्रूपभवनाद्द्रव्यं कालद्रव्यं, तत्र च कालस्य वस्तुतः समयरूपस्य निर्विभागत्वान्न देशप्रदेशसंभवः, अत एवात्रास्तिकायत्वाभावो वेदितव्यः। नन्वतीतानागतवर्तमानभेदेन कालस्यापि त्रैविध्यमस्तीति किमिति नोक्तम्? सत्यं, अतीतानागतयोर्विनष्टानुत्पन्नत्वेनाविद्यमानत्वाद्वार्तमानिक एव समयरूपः सद्रूपः। यद्येवं तर्हि पूर्वसमयनिरोधेनैवोत्तरसमयसद्भावेऽसंख्यातानां समयानां समुदयसमित्याद्यसंभवादावलिकादयः शास्त्रान्तरप्रतिपादिताः कालविशेषाः कथं संगच्छन्ते? सत्यं, तत्त्वतो न संगच्छंत एव, केवलं व्यवहारार्थमेव कल्पिता इति। अथ केऽमी आवलिकादयः कालविशेषा इति विनेयजनपृच्छायां तदनुग्रहाय समयादारभ्य कालविशेषाः प्रतिपाद्यन्ते, तत्र समयस्वरूपमेवमनुयोगद्वारे प्रतिपाद्यते, तद्यथा–"[1]से किं तं

---

१ अथ कोऽसौ समयः। समयस्य प्ररूपणां करिष्यामि। अथ यथा नाम तंतुवायदारकः स्यात्, तरुणः, बलवान्, युगवान्, युवा, अल्पातंकः, स्थिरहस्ताग्रः, दृढपाणिपादपार्श्वपृष्ठांत्रोरुपरिणतः, तालयुग्मयुगपरिघनिभबाहुः, चर्मेष्टकद्रुघणमुष्टिकसमाहतनिचितगात्रकायः, लंघनप्लवनजवनव्यायामसमर्थः, उरस्कबलसमन्वागतः, छेकः, दक्षः, प्रष्ठ, कुशलः, मेधावी, निपुणः, निपुणशिल्पोपगतः, एकां महतीं पटशाटिकां वा पट्टशाटिकां वा गृहीत्वा शीघ्रं हस्तमात्रमपसारयेत्। तत्र नोदकः प्रज्ञापकमवादीत् यावता कालेन तेन तन्तुवायदारकेण तस्याः

नमए ? समयस्स ण परूवणं करिस्सामि, से जहानामए तुन्नागदारए सिया तरुणे बलव जुगव जुवाणे अप्पायके थिरग्गहत्थे दढपाणिपायपासपिट्ठतरोरुपरिणए तलजमलजुग(ल)परिघनिभबाहू चम्मिट्ठगदुहणमुट्ठियसमाहयनिचियगायकाए लघणपवणजवणवायामसमत्थे उरस्सबलसमन्नागए छेए दक्खे पट्ठे कुसले मेहावी निउणे निउणसिप्पोवगए एग महइ पडसाडियं वा पट्टसाडियं वा गहाय सयराहं हत्थमित्तं ओसारिज्जा तत्थ चोयए पन्नवगं एव वयासि जेण कालेण तेण तुन्नागदारएण तीसे पडसाडियाए वा पट्टसाडियाए वा सयराहं हत्थमित्ते ओसारिए से समए भवइ ? नो इणट्ठे समट्ठे

पटशाटिकाया वा पट्टशाटिकाया वा शीघ्र हस्तमात्र अपसारित स समयो भवति ?। नैषोऽर्थ समर्थ । कस्मात् ? । यस्मात्सख्येयाना तन्तूना समुदयसमितसमागमेन पटशाटिका निष्पद्यते, उपरितने तन्तावच्छिन्ने नाधस्त्यश्छिद्यते तन्तुरुपरितनस्तन्तुरन्यस्मिन्काले छिद्यतेऽधस्त्यश्चान्यस्मिन्काले छिद्यते तन्तु । तस्मान्नासो समय । एव वदन्त प्रज्ञापक चोदक एवमवादीत्—येन कालेन तन्तुवायदारकेण तस्या पटशाटिकाया वा पट्टशाटिकाया उपरितनस्तन्तुश्छिन्न स समय ?। न भवति । कस्मात् ? । यस्मात्सख्येयाना पक्ष्मणा समुदितिसमितिसमागमेनैकस्तन्तुर्निष्पद्यते उपरितने पक्ष्मण्यच्छिन्नेऽधस्त्य पक्ष्म न छिद्यतेऽन्यस्मिन्काले उपरितन पक्ष्माच्छिन्नोऽन्यस्मिंश्च कालेऽधस्त्य पक्ष्माच्छिद्यते तस्मात्स समयो न भवति। एव वदन्त प्रज्ञापक चोदकोऽवादीत् येन कालेन तेन तन्तुवायदारकेण तस्य तन्तोरुपरितन पक्ष्मच्छिन्न स समयो ? न भवति । कस्मात् ? यस्मादनन्ताना सघाताना समुदयसमितिसमागमेन एक पक्ष्मा निष्पद्यते उपरितने सघातेऽविसघातितेऽधस्त्य सघातो न विसघात्यतेऽन्यस्मिन्काल उपरितन संघातो विसघात्यतेऽन्यस्मिंश्च कालेऽधस्त्य सघातो विसघात्यते तस्मात्स समयो न भवति अतोऽपि सूक्ष्मतर समय प्रज्ञप्त ।आयुष्मन् श्रमणासख्येयाना समयाना समुदितिसमितिसमागम सैकावलिकेत्युच्यते ।

कम्हा जम्हा संखिजाणं तंतूणं समुदयसमियसमागमेणं पडसाडिया निप्फजाइ उवरिल्लयंमि तंतुंमि अछिन्ने हिट्ठिल्ले तंतू न छिजाइ अन्नंमि काले उवरिल्ले तंतू छिजाइ अन्नंमि काले हिट्ठिल्ले तंतू छिजाइ तम्हा से समए न भवइ एवं वयंतं पन्नवगं चोयए एवं वयासी जेणं कालेणं तुन्नागदारएणं तीसे पडसाडियाए वा पट्टसाडियाए वा उवरिल्ले तंतू छिन्ने से समए? न भवइ कम्हा जम्हा संखिजाणं पम्हाणं समुदयसमिइसमागमणेणं एगे तंतू निप्फजाइ उवरिल्ले पम्हंमि अछिन्ने हिट्ठिल्ले पम्हे न छिजाइ अन्नंमि काले उवरिल्ले पम्हे छिजाइ अन्नंमि काले हिट्ठिल्ले पम्हे छिजाइ तम्हा से समए न भवइ एवं? वयंतं पन्नवगं चोयए एवं वयासि जेणं कालेणं तेणं तुन्नागदारएणं तस्स तंतुस्स उवरिल्ले पम्हे छिन्ने से समए ? न भवइ कम्हा जम्हा अणंताणं संघायाणं समुदयसमिइसमागमेणं एगे पम्हे निप्फजाइ उवरिल्ले संघाए अविसंघाडए हिट्ठिल्ले संघाए न विसंघाइज्जाइ अन्नंमि काले उवरिल्ले संघाए विसंघाइज्जाइ अन्नंमि काले हिट्ठिल्ले संघाए विसंघाइज्जाइ तम्हा से समए न भवइ इत्तो वि णं सुहुमतराए समए पन्नत्ते समणाउसो असंखिज्जाणं समयाणं समुदयसमिइ समागमेणं सा एगा आवलिय त्ति पवुच्चइ"। संख्येया आवलिका आन एक उच्छ्वास इत्यर्थः। ता एव संख्येया निःश्वासः, द्वयोरपि कालः प्राणुः, सप्तभिः प्राणुभिः स्तोकः, सप्तभिः स्तोकैर्लवः, सप्तसप्तत्या लवानां मुहूर्तः, त्रिंशता मुहूर्तैरहोरात्रः। तैः पंचदशभिः पक्षः, ताभ्यां द्वाभ्यां मासः, मासद्वयेन ऋतुः, ऋतुत्रयमानमयनं, अयनद्वयेन संवत्सरः, पंचभिस्तैर्युगं, विंशत्या युगैर्वर्षशतं, तैर्दशभिर्वर्षसहस्रं, तेषां शतेन वर्षलक्षं, चतुरशीत्या वर्षलक्षैः पूर्वांगं भवति, पूर्वांगं चतुरशीतिवर्षलक्षैर्गुणितं

पूर्वं भवति, तच्च भवति कोटिलक्षाणि पट्पञ्चाशच्च कोटिसहस्राणि वर्षाणाम् । उक्तं च–"पुंवस्स य परिमाणं सयरिं खलु होंति कोडिलक्खाउ । छप्पन्नं च सहस्सा बोधव्वा वासकोडीण ॥ १ ॥" (अकत ) स्थापना–७०५६०००००००००० । इदमपि चतुरशीत्या लक्षैर्गुणितं त्रुटिताङ्गं भवति, एतदपि चतुरशीत्या लक्षैर्गुणितं त्रुटितं, एतदपि चतुरशीतिलक्षैर्गुणितमटटाङ्गं, एतदपि चतुरशीत्या लक्षैर्गुणितमटटं, एवं सर्वत्र पूर्वः पूर्वो राशिश्चतुरशीतिलक्षस्वरूपेण गुणकारेण गुणित उत्तरोत्तरराशिरूपतां प्रतिपद्यत इति प्रतिपत्तव्यम् । ततश्च अववाङ्गं, अववं, हुहूकाङ्गं, हुहूकं, उत्पलाङ्गं, उत्पलं, पद्माङ्गं पद्मं, नलिनाङ्गं, नलिनं, अर्थनिपूराङ्गं, अर्थनिपूरं, अयुताङ्गं, अयुतं, नयुताङ्गं, नयुतं, प्रयुताङ्गं, प्रयुतं, चूलिकाङ्गं, चूलिका शीर्षप्रहेलिकाङ्गं, एवमेते राशयश्चतुरशीतिलक्षस्वरूपेण गुणकारेण यथोत्तरं वृद्धा द्रष्टव्यास्तावद्यावदिम्मेन शीर्षप्रहेलिकाङ्गं चतुरशीतिलक्षैर्गुणितं शीर्षप्रहेलिका भवति । अस्याः स्वरूपमङ्कतोऽपि दर्श्यते–७५८२६३२५३०७३०१०२४११५७९७३५६९९७५६९६४०६२१८९६६८४८०८०१८३२९६ अग्रे चत्वारिंशं शून्यशतम् । तदेवं शीर्षप्रहेलिकायां सर्वाण्यमूनि चतुर्नवत्यधिकशतसंख्यान्यङ्कस्थानानि भवन्ति, एतस्माच्च परतोऽपि संख्येयः कालोऽस्ति, स त्वनतिशयिनामसंव्यवहार्यत्वात् सर्षपोपमयात्रैव वक्ष्यते । पल्योपमसागरोपमपुद्गलपरावर्तादिकालस्वरूपं पुनः स्वोपज्ञशतकटीकायां सविस्तरमभिहितं ततः एवावधारणीयम् । ततो धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायपुद्गलास्तिकायकालद्रव्याणि पारिणामिके तेन तेन रूपेण परिणमनस्वभावे पर्यायविशेषे वर्तन्त इति

१ पूर्वस्य च परिमाणं भवति कोटिलक्षाणां सप्ततिः खलु । वर्षकोटीनां च पट्पञ्चाशत्सहस्रा ज्ञातव्या ।

जीवानां पुद्गलानां च गतिस्थित्युपष्टम्भावकाशदानपरि-
शेषः । तथा हि–धर्माधर्माकाशास्तिकायानामनादिकालादारभ्य जीवानां पुद्गलानां च गतिस्थित्युपष्टम्भावकाशदानपरि-
णामेन परिणतत्वादनादिपारिणामिकभाववर्तित्वं, कालरूपसमयस्याप्यपरापरसमयोत्पत्तितयावलिकादिपरिणामपरिणत-
त्वादनादिपारिणामिकभाववर्तित्वमेव, द्व्यणुकादिस्कन्धानां सादिकालात्तेन तेन स्वभावेन परिणामात्सादिपारिणामिकत्वं-
(कत्वमेवानादिस्कंधानां त्वनादि) मेर्वादिस्कंधानां त्वनादिकालात्तेन तेन रूपेण परिणामादनादिपारिणामिकभाववर्तित्वं
चेति । आह–किं सर्वेऽप्यजीवाः पारिणामिक एव भावे वर्तन्ते, आहोश्वित् केचिदन्यस्मिन्नपीत्याह–'खंधा उदए
वि त्ति' स्कन्धा अनन्तपरमाण्वात्मका न तु केवलाणवः, तेषां जीवेनाग्रहणात् । औदयिकेऽप्यौदयिकभावेऽपि न
केवलं पारिणामिक इत्यपिशब्दार्थः । तथाहि–शरीरादिनामोदयजनित औदारिकादिशरीरतयौदारिकादीनां स्कन्धाना-
मेवोदय इति भावः । उदय एवौदयिक इति व्युत्पत्तिपक्षे तु कर्मस्कन्धलक्षणेष्वजीवेष्वौदयिकभावो भवतीति भावः ।
तथा हि–क्रोधाद्युदये जीवस्य कर्मस्कन्धानामुदयस्तेषामेवौदयिकत्वमिति । नन्वेवं कर्मस्कन्धाश्रिता औपशमिकादयोऽपि
भावा अजीवानां संभवन्त्यतस्तेषामपि भणनं प्राप्नोति, सत्यं, तेषामविवक्षितत्वात्, अत एव कैश्चिदजीवानां पारिणा-
मिक एव भावोऽभ्युपगम्यत इति ॥ ६९ ॥

व्याख्याता अजीवाश्रिता अपि भावाः, संप्रति जीवगुणभूतेषु गुणस्थानकेषु भावान्निरूपयिषुराह—

**संमाइचउसु तिग चउ भावा चउ पणुवसामगुवसंते । चउ खीणापुव्वि तिन्नि सेसगुणट्ठाणगेगजिए ॥७०॥**

टीका–'संमाइ त्ति' सम्यग्दृष्ट्यादिष्वविरतसम्यग्दृष्टिप्रभृतिषु चतुर्षु चतुःसंख्येष्वविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तल-

क्षणेषु गुणस्थानकेष्विति वक्ष्यमाणपदस्यात्रापि सवन्ध कार्य । 'तिग चउ भाव त्ति' त्रयश्चत्वारो वा भावा प्राप्यन्त इति भाव । तत्र क्षायोपशमिकसम्यग्दृष्टेश्चतुर्ष्वपि गुणस्थानकेष्विमे त्रयोऽपि भावा लभ्यन्ते । तद्यथा–यथासभवमौदयिकी गति, क्षायोपशमिकमिन्द्रियादिसम्यक्त्वादि, पारिणामिक जीवत्वमिति । क्षायिकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेश्च चत्वारो भावा लभ्यन्ते, त्रयस्तावत्पूर्वोक्ता एव, चतुर्थस्तु क्षायिकसम्यग्दृष्टे क्षायिकसम्यक्त्वलक्षण, औपशमिकसम्यग्दृष्टे पुनरौपशमिकसम्यक्त्वभाव इति । 'चउ पणुवसामगुवसते त्ति' चत्वार पच वा भावा द्वयोरप्युपशमकोपशान्तयोर्भवन्ति । किमुक्त भवति ? अनिवृत्तिबादरसूक्ष्मसपरायगुणस्थानकद्वयवर्ती जन्तुरुपशमक उच्यते, तस्य चत्वार पच वा भावा भवन्ति । कथमिति चेदुच्यते–त्रयस्तावत्पूर्ववदेव, चतुर्थस्तु क्षीणदर्शनत्रिकस्य श्रेणिमारोहत क्षायिकसम्यक्त्वलक्षणोऽन्यस्य पुनरौपशमिकस्वभाव इति । अमीषामेव चतुर्णा मध्येऽनिवृत्तिबादरसूक्ष्मसपरायगुणस्थानकद्वयवर्तिनोऽप्यौपशमिकचारित्रस्य शास्त्रातरेषु प्रतिपादनादौपशमिकचारित्रप्रक्षेपे पचम इति । उपशान्त उपशान्तमोहगुणस्थानकवर्ती तस्यापि चत्वार पच वा भावा प्राप्यन्ते, ते चानन्तरोपशमकपदप्रदर्शिता एव । 'चउ खीणापुव्वि त्ति' चत्वारो भावा क्षीणापूर्वयो क्षीणमोहगुणस्थानकेऽपूर्वकरणगुणस्थानके चेत्यर्थः । तत्र क्षीणमोहे त्रय पूर्ववत्, चतुर्थ क्षायिकसम्यक्त्वचारित्रलक्षण, अपूर्वकरणे तु त्रय पूर्ववत्, चतुर्थ पुन क्षायिकसम्यक्त्वस्वभाव औपशमिकसम्यक्त्वस्वभावो वेति । 'तिन्नि सेसगुणट्ठाणग त्ति' त्रयस्त्रिसख्या भावा भवन्ति । केष्वित्याह–विभक्तिलोपाच्छेषगुणस्थानकेषु मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टिसयोगिकेवल्ययोगिकेवलिलक्षणेषु । तत्र मिथ्यादृष्ट्यादीना त्रयाणामौदयिकी गति,

क्षायोपशमिकानीन्द्रियाणि, पारिणामिकं जीवत्वमित्येते त्रयो भावाः प्रतीता एव । सयोगिकेवल्ययोगिकेवलिनोः पुनरौदयिकी मनुजगतिः, क्षायिकं केवलज्ञानादि, पारिणामिकं जीवत्वमित्येवंरूपास्त्रय इति । आह–किममी त्रिप्रभृतयो भावा गुणस्थानकेषु चिन्त्यमानाः सर्वजीवाधारतया चिन्त्यन्ते ? आहोश्चिदेकजीवाधारतया ? इत्याह–'एगजिए त्ति' एकजीवाधारतयेत्थं भावविभागो मन्तव्यो नानाजीवापेक्षया तु संभविनः सर्वेऽपि भावा भवन्ति इति । अधुनैतेषु गुणस्थानकेषु प्रत्येकं यस्य भावस्य संबन्धिनो यावन्त उत्तरभेदा यस्मिन् गुणस्थानके प्राप्यन्त इत्येतत्सोपयोगित्वादस्माभिरभिधीयते । तद्यथा–क्षायोपशमिकभावभेदा मिथ्यादृष्टिसास्वादनयोरन्तरायकर्मक्षयोपशमजदानादिलब्धिपंचकाज्ञानत्रयचक्षुर्दर्शनाचक्षुर्दर्शनलक्षणा दश भवन्ति, सम्यग्मिथ्यादृष्टौ दानादिलब्धिपंचकज्ञानत्रयदर्शनत्रयमिश्ररूपसम्यक्त्वलक्षणा द्वादश भेदा भवन्ति, अविरतसम्यग्दृष्टौ मिश्रत्यागेन सम्यक्त्वप्रक्षेपे त एव द्वादश, विरतौ च द्वादशसु मध्ये देशविरतिप्रक्षेपे त्रयोदश, प्रमत्ताप्रमत्तयोश्च देशविरतिविरहितेषु पूर्वप्रदर्शितेषु द्वादशस्वेव सर्वविरतिमनःपर्यायज्ञानप्रक्षेपे चतुर्दश, अपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायेषु चतुर्दशभ्यः सम्यक्त्वापसारणे प्रत्येकं त्रयोदश, उपशान्तमोहक्षीणमोहयोस्त्रयोदशभ्यश्चारित्रापसारणे द्वादश क्षायोपशमिकभावभेदाः प्राप्यन्ते । अधुनौदयिकभावभेदा भाव्यन्ते–मिथ्यादृष्टावज्ञानासिद्धत्वादय एकविंशतिरपि भेदा भवन्ति, सास्वादन एकविंशतेर्मिथ्यात्वापसारणे विंशतिः, मिश्राविरतयोर्विंशतेरज्ञानापगमे एकोनविंशतिः, देशविरते च देवनारकगत्यभावे सप्तदश, प्रमत्ते च तिर्यग्गत्यसंयमाभावे पंचदश, अप्रमत्ते च पंचद-

शन्य आद्यलेश्यात्रिकाभावे द्वादश, अपूर्वकरणेऽनिवृत्तिबादरे च द्वादशान्यस्तेज पद्मलेश्ययोरभावे दश, सूक्ष्मसपराये सज्वलनलोभमनुजगतिशुक्ललेश्याऽसिद्धत्वलक्षणाश्चत्वार औदयिका भावा, उपशान्तक्षीणमोहसयोगिकेवलिषु चतुर्भ्य सज्वलनलोभाभावे त्रय, अयोगिकेवलिनस्तु मनुजगत्यसिद्धत्वरूपमौदयिकभावभेदद्वय प्राप्यते। औपशमिकभावभेदा उच्यन्ते–अविरतादारभ्योपशान्त यावदौपशमिकसम्यक्त्वरूप औपशमिकभावभेद॰ प्राप्यते, औपशमिकचारित्रलक्षणस्त्वनिवृत्तेरारभ्योपशान्त यावत्प्राप्यते। क्षायिकभावभेदश्च क्षायिकसम्यक्त्वरूपोऽविरतादारभ्योपशान्त यावत्प्राप्यते, क्षीणमोहे क्षायिक सम्यक्त्व चारित्र च प्राप्यते, सयोगिकेवल्ययोगिकेवलिनोस्तु नवापि क्षायिकभावा प्राप्यन्ते। पारिणामिकभावभेदा मिथ्यादृष्टौ त्रयोऽपि, सास्वादनादारभ्य च क्षीणमोह यावदभव्यत्ववर्जौ द्वौ भवत, सयोगिकेवल्ययोगिकेवलिनोस्तु जीवत्वमेवेति, भव्यत्वस्य च प्रत्यासन्नसिद्धावस्थायामभावादधुनापि तदपगतप्रायत्वादिना केनचित् कारणेन शास्त्रान्तरेषु नोक्तमिति नास्माभिरप्यत्रोच्यते। यस्य भावस्य भेदा यस्मिन् गुणस्थानके यावन्त उक्तास्तेषा सर्वभावभेदानामेकत्र मीलने सति तावद्भेदनिष्पन्न षष्ठ सान्निपातिकभावभेदस्तस्मिन् गुणस्थानके भवति। यथा–मिथ्यादृष्टावौदयिकभावभेदा एकविशति, क्षायोपशमिकभावभेदा दश, पारिणामिकभावभेदास्त्रय॰, सर्वे भेदाश्चतुस्त्रिशत्। एव सास्वादनादिष्वपि सर्वभावभेदमीलने तावद्भेदनिष्पन्न षष्ठ सान्निपातिकभावभेदो वाच्यः। एतदर्थसग्राहिण्यश्चैता गाथा यथा—

"पंण अंतराय अन्नाण तिन्नि अचक्खुचक्खु दस एए। मिछे सासाणे य हवंति मीसए (मिसि) अंतराय पण ॥ १ ॥
नाणतिगदंसणतिगं मीसगसंमं च बारस हवंति । एवं च अविरयंमि वि नवरि तहिं दंसणं सुद्धं ॥ २ ॥
देसे य देसविरई तेरसमा तह पमत्तअपमत्ते । मणपजवपरकेवा चउदस अपुव्वकरणे उ ॥ ३ ॥

---

१ पंचान्तरायाः अज्ञानत्रिकं चक्षुरचक्षुः एते दश मिथ्यात्वे सासादने च मिश्रे च पंचान्तरायाः ( तत्क्षयोपशमोद्भवाः ) ।१। ज्ञानत्रिकं दर्शनत्रिकं मिश्रसम्यक्त्वं चेति द्वादश भवंति । एवमेवाविरतेऽपि परं तत्र शुद्धं दर्शनं ।२। देशे देशविरतिस्त्रयोदशी तथा प्रमत्ताप्रमत्तयोर्मनः पर्यायप्रक्षेपाच्चतुर्दश अपूर्वकरणे तु ।३। वेदकसम्यक्त्वं विना त्रयोदश यावत्सूक्ष्मसंपराय इति । त एव उपशान्तक्षीणयोः चारित्रं विना द्वादशैव ।४। क्षायोपशमिकभावानामेषा कीर्त्तना गुणपदानि प्रतीत्य कृता । इदानीमौदयिकभावानां तान्येवाश्रित्य दर्शयामि ।५। एकविंशतिर्मिथ्यात्वे-चतुर्गत्यादिकाः सासादने मिथ्यात्वेन विना विंशतिर्भवन्ति । अज्ञानमृते एकान्नविंशतिर्मिश्रे ।६। एवमेवाविरते सुरनारकगतिवियोगतो देशे सप्तदश भवन्ति त एवतिर्यग्गत्यसंयमाभावात् ।७। पंचदश प्रमतेऽप्रमत्ते आदिलेश्यात्रिकाभावात्त एव द्वादश अपूर्वे एकशुक्ललेश्याभावाद्दश ।८। एवमनिवृत्तेऽपि सूक्ष्मे संज्वलनलोभमनुजगत्योः । अन्तिमलेश्यासिद्धत्वयोर्भावात् चत्वारो भावाः ।९। ( अस्तीति वितथ संज्वलनलोभविरहादुपशान्तक्षीणकेवलिनां त्रिकं लेश्याऽभावाज्जानीहि भावद्विकमेवायोगिनः ।१०। अविरतसम्यक्त्वाद्यावदुपशांतस्तावदुपशमक्षयौ सम्यक्त्वे । अनिवृत्तितः उपशांतं यावदुपशमिकं चरणं ।११। क्षीणे क्षायिकसम्यक्त्वं चारित्रं च द्विकमपि जानीहि समकालं । नव नव क्षायिकभावान् सयोगे योगे च जानीहि ।१२। जीवत्वमभव्यत्वं भव्यत्वमपि मिथ्यात्वे जानीहि। सासादनादिपु क्षीणांतेषु द्वावभव्यत्ववर्ज्यौ ।१३। संयोगिन्ययोगिनि च जीवत्वमेव । मिथ्यात्वादीनां सत्स्वभावमिश्रणात्सान्निपातिकं भावं विद्धि ।१४।

वेयगसमेण विणा तेरस जा सुहुमसपराउ त्ति । ते च्चिय उवसमखीणे चरित्तविरहेण बारस उ ॥ ४ ॥
खाउवसमिगजावाण कित्तण गुणपए पडुच्च कया । उदइयजावे इण्हि ते चेव पडुच्च दसेमि ॥ ५ ॥
चउगइयाई इगवीस मिच्छि साणेय हुति वीस च । मिच्छेण विणा मीसे इगुणीसमनाणविरहेण ॥ ६ ॥
एमेव अविरयमि सुरनारयगइ विउगउ देसे । सत्तरस हुति तेच्चिय तिरिगइअसजमाजावा ॥ ७ ॥
पन्नरस पमत्तमि अपमत्ते आइलेसतिगविरहे । तेच्चिय बारस सुक्केगलेसउ दस अपुव्वमि ॥ ८ ॥
एव अनियट्टिमि वि सुहुमे सजलणलोजमणुयगई । अतिमलेस असिद्धत्तजावउ जाण चउजावा ॥ ९ ॥
सजलणलोजविरहा उवसतखीणकेवलीण तिग । लेसाजावा जाणसु अजोगिणो जावदुगमेव ॥ १० ॥
अविरयसमा उवसतु जाव उवसमगखाइगा सम । अनियट्टीउ उवसंतु जाव उवसामिय चरण ॥ ११ ॥
खीणमि खइयसम चरण च दुग पि जाण समकाल । नव नव खाइगजावा जाण सजोगे अजोगे य ॥ १२ ॥
जीवत्तमजवत्त जवत्त पि हु मुणेसु मिच्छमि । साणाई खीणते दोन्नि अजवत्तवज्जा उ ॥ १३ ॥
सजोगिमि अजोगिमि य जीवत्त चेव मिच्छमाईण । ससजावमीज(मीस)णाउ जाव मुण सन्निवाय तु ॥ १४ ॥"

व्याख्यातप्राया एवैता , नवरमेकादश्या गाथाया 'उवसमगखाइगा सम त्ति' अनेनौपशमिकक्षायिकसम्यक्त्वरूपमौपशमिकक्षायिकजावजेदद्वय युगपल्लाघवार्थ निरूपित । ततश्चाविरतादारभ्योपशान्तमोहं यावत् कस्यचिदौपशमिकसम्यक्त्वरूपौपशमिकजावजेद प्राप्यते कस्यचित्पुन क्षायिकसम्यक्त्वरूप क्षायिकजावजेदश्चेति ॥ ७० ॥

व्याख्यातं मूलद्वारगाथायां भावद्वारं, संप्रति संख्येयकादिद्वारं प्रचिकटयिषुराह—

**संखिज्जेगमसंखं परित्तजुत्तनियपयजुयं तिविहं। एवमणंतं पि तिहा जहन्नमज्झुक्कसा सव्वे ॥ ७१ ॥**

टीका—एतावन्त एत इति संख्यानं संख्येयं "य एच्चातः" (५-१-२८) इति यप्रत्ययः। तच्चैकमेकमेव भवति नापरे असंख्येयादेरिव परीत्तादयो मूलभेदस्वरूपा भेदा अस्य विद्यन्त इति भावः। न संख्यामर्हतीत्यसंख्यं "दंडादिभ्यो यः" (६-४-१७९) इति यप्रत्ययः। असंख्येयकं तत्पुनः परीत्तं च युक्तं च निजपदं स्वकीयपदमसंख्येयकलक्षणं तच्च परीत्त-युक्तनिजपदानि तैर्युक्तं समन्वितं सत्, किमित्याह—त्रिविधं त्रिप्रकारं भवति। यथा—परीत्तासंख्येयकं, युक्तासंख्येयकं, असंख्यातासंख्येयकमित्युक्तं त्रिधाऽसंख्येयकमधुना त्रिविधमनन्तकमाह—'एवमणंतं पि तिह त्ति' एवमनेनानन्तरप्रद-र्शितप्रकारेण परीत्तयुक्तनिजपदयुक्तलक्षणेनानन्तमप्यनन्तकमपि न केवलमसंख्येयकमित्यपिशब्दार्थः। त्रिधा त्रिप्रकारं वेदितव्यं तद्यथा—परीत्तानन्तकं, युक्तानन्तकं, अनन्तानन्तकमित्येवमेतानि समुदितानि सप्तापि पदानि पुनरेकैकशस्त्रि-रूपाणि भवन्तीति दर्शयितुमाह—'जहन्नमज्झुक्कसा सव्वे त्ति' प्राकृतत्वाल्लिंगव्यत्ययाज्जघन्यमध्यमोत्कृष्टानि जघन्यमध्यमो-त्कृष्टभेदभिन्नानि सर्वाणि समस्तानि एकैकशः सप्तापि पदानि वेदितव्यानीत्यर्थः। तथा हि—जघन्यसंख्येयकं, मध्यमसं-ख्येयकं, उत्कृष्टसंख्येयकं। तथा जघन्यपरीत्तासंख्येयकं, मध्यमपरीत्तासंख्येयकं, उत्कृष्टपरीत्तासंख्येयकं, जघन्ययुक्ता-संख्येयकं, मध्यमयुक्तासंख्येयकं, उत्कृष्टयुक्तासंख्येयकं, जघन्यासंख्यातासंख्येयकं, मध्यमासंख्यातासंख्येयकं, उत्कृष्टा-संख्यातासंख्येयकं। तथा जघन्यपरीत्तानन्तकं, मध्यमपरीत्तानन्तकं, उत्कृष्टपरीत्तानन्तकं, जघन्ययुक्तानन्तकं, मध्यम,

युक्तानन्तकं, उत्कृष्टयुक्तानन्तकं, जघन्यानन्तानन्तकं, मध्यमानन्तानन्तकं, उत्कृष्टानन्तानन्तकं । तदेवं सङ्ख्यातकं त्रिधा, असङ्ख्यातमनन्तकं च नवधा भवतीति ॥ ७१ ॥

तदेवं सङ्ख्येयकादिभेदप्ररूपणामात्रं कृत्वा विस्तरतस्तत्स्वरूपं निरूपयिषुः सङ्ख्यातकं त्रिधेति यदुद्दिष्टं तद्विवृण्वन्नाह—

**लहु संखिज्जं दुच्चिय अओ परं मज्झिमं तु जा गुरुयं । जंबूद्दीवपमाणय चउपल्लपरूवणाइ इमं ॥ ७२ ॥**

टीका—इहैकको गणनसङ्ख्यां न लभते, यतः एकस्मिन् घटादौ दृष्टे घटादिरस्तीदं तिष्ठतीत्येवमेव प्रायः प्रतीतिरुत्पद्यते, नैकसङ्ख्याविषयत्वेन । अथवादानसमर्पणादिव्यवहारकाले एकं वस्तु प्रायो न कश्चिद्गणयति, अतोऽसंव्यवहार्यत्वादल्पत्वाद्वा नैको गणनसङ्ख्यां लभते, तस्माद् द्विप्रभृतिरेव गणनसङ्ख्या । अत एवाह—सङ्ख्येयं सङ्ख्यातकं लघु जघन्यं द्व्येव, चियशब्दस्यावधारणार्थत्वात् यदाहुः श्रीहेमचन्द्रसूरिपादाः प्राकृतलक्षणे—"एव चेव चिय च्च अवधारणे" (८ २-८४) द्वावेव, नैकं पूर्वोदितयुक्तेः । अतः परमेतस्माद् द्विकरूपजघन्यसङ्ख्यातकादूर्ध्वं, मध्यमं तु सङ्ख्यातकं, पुनस्त्रिचतुरादिकमनेकप्रकारं भवति । कियद्दूरं यावन्मध्यमं भवतीत्याह—'जा गुरुय त्ति' यावदित्यवधौ गुरुकमुत्कृष्टं सर्वोपरिवर्तिसङ्ख्यातकं प्राप्नोतीति शेषः अथेदमेव गुरुकं सङ्ख्यातकं कथं विज्ञेयमित्याह—इदमधुनैव वक्ष्यमाणस्वरूपं गुरुकं सङ्ख्यातकं ज्ञेयमिति शेषः । कया ? जम्बूद्वीपप्रमाणचतुष्पल्यप्ररूपणया जम्बूनाम्ना वृक्षेणोपलक्षितो द्वीपो जम्बूद्वीपस्तेन जम्बूद्वीपेन प्रमाणमियत्तावधारणं येषां ते जम्बूद्वीपप्रमाणकास्ते च ते चत्वारश्चतुःसङ्ख्याः पल्याश्च धान्यपल्या इव जम्बूद्वीपप्रमाणकचतुष्पल्यास्तेषां प्रकृष्टरूपा प्ररूपणा व्यावर्णना तया । एतदुक्तं भवति—यथा जम्बूद्वीपो लक्षयोजनप्रमाण एवमेतेऽप्यायामविष्क

भाभ्यां प्रत्येकं लक्षयोजनप्रमाणा वृत्ताकारत्वाच्च परिधिना "परिही[1] तिलक्ख सोलससहस्स दो य सय सत्तवीसहिया। कोसतिय अठवीसं धणुसय तेरंगुलद्धहियं ॥ १ ॥" इति गाथाभिहितप्रमाणोपेताः। उक्तं च श्रीमदनुयोगद्वारसूत्रे—"जह[2]न्नयं संखिज्जयं कित्तिव्वियं होइ? दो रूवाइं। तेण परं अजहन्नमणुक्कोसयाइं ठाणाइं जाव उक्कोसयसंखिज्जयं न व पावइ। उक्कोसयं संखिज्जयं कित्तियं होइ? उक्कोसयस्स संखिज्जयस्स परूवणं करिस्सामि से जहा नामए पल्ले सिया एगं जोयणसयसहस्सं आयामविक्खंभेणं तिन्नि जोयणसयसहस्साइं सोलस सहस्साइं दोन्नि य सत्तावीसे जोयणसए तिन्नि य कोसे अठावीसं च धणुसयं तेरस अंगुलाइं अद्धंगुलं च किंचि विसेसाहियं परिक्खेवेणं"। ततो जंबूद्वीपप्रमाणचतुःपल्यप्ररूपणयेदमुत्कृष्टसंख्यातकं प्ररूपयिष्यत इति भावः ॥ ७२ ॥

अथैते चत्वारोऽपि पल्याः किंनामान इत्येतदाह—

**पल्लाणवट्ठियसलागपडिसलागमहासलागक्खा। जोयणसहसोगाढा सवेइयंता ससिहभरिया ॥ ७३ ॥**

---

१ परिधिस्त्रयो लक्षाः षोडश सहस्राः सप्तविंशत्यधिके द्वे शते क्रोशत्रयं अष्टाविंशत्यधिकं शतं धनुषां अर्धाधिकत्रयोदशांगुलानि।

२ जघन्यं संख्यातकं कियद्भवति? द्वे रूपे। ततः परमजघन्योत्कृष्टानि स्थानानि यावदुत्कृष्टसंख्यातकं नैव प्राप्नोति। उत्कृष्टसंख्यातकं कियद्भवति? उत्कृष्टसंख्यातकस्य प्ररूपणां करिष्ये। अथ यथानाम पल्यः स्यात् आयामविष्कंभाभ्यां योजनलक्षं त्रीणि योजनलक्षाणि षोडश सहस्राणि द्वे शते सप्तविंशतिश्च योजनानां त्रयश्च क्रोशा अष्टाविंशतिश्च धनुषां शताधिका त्रयोदशांगुलानि सार्धानि किंचिद्विशेषाधिकानि च परिक्षेपेण।

टीका–धान्यपल्य इव पल्या कल्प्यन्ते, ते च जबूद्वीपप्रमाणा किंनामान इत्याह–'अणवट्ठियेत्यादि' यथोत्तर वर्धमानस्वभावतयावस्थितरूपाभावादनवस्थित एवोच्यते। तथेह शलाका एकैकसर्षपप्रक्षेपलक्षणास्ताभिः शलाकाभिर्भ्रियमाणत्वात्पल्योऽपि शलाका। तथा प्रतिशलाकाभिर्निष्पन्नत्वात्प्रतिशलाका। महाशलाकाभिर्निर्वृत्तत्वान्महाशलाका। तत एषा द्वन्द्वेऽनवस्थितशलाकाप्रतिशलाकामहाशलाकास्ता इत्थभूता आख्या सज्ञा येषा तेऽनवस्थितशलाकाप्रतिशलाकामहाशलाकाख्या। त एव विशिष्यन्ते–योजनसहस्र तु व्यवगाढा। इदमुक्त भवति–रत्नप्रभाया पृथिव्या प्रथम योजनसहस्रप्रमाण रत्नकाण्ड भित्त्वा द्वितीये वज्रकाण्डे प्रतिष्ठिता इति। पुनस्त एव विशिष्यन्ते–'सवेइयत त्ति' वज्रमय्या अष्ट योजनोच्छ्रायाश्चत्वार्यष्टौ द्वादश योजनान्युपरिमध्याधोविस्तृताया जबूद्वीपनगरप्राकारकल्पाया जगत्या द्विगव्यूतोच्छ्रितेन पचधनु शतविस्तृतेन नानारत्नमयेन जालकटकेन परिक्षिप्ताया उपरि वेदिकेति पद्मवरवेदिकेत्यर्थ, द्विगव्यूतोच्छ्रिता पचधनु शतविस्तीर्णा गवाक्षहेमकिंकिणीजालघटायुक्ता देवानामासनशयनमोहनविविधक्रीडास्थानमुभयतो वनखण्डवती तस्या अन्त' पर्यवसानमग्रभाग इतियावत् वेदिकात, ततश्च सहवेदिकान्तेन वर्तन्त इति सवेदिकान्ता., ते च कथ सर्षपैर्भृता इत्याह–'ससिहभरिय त्ति' सह शिखयोच्छ्रयलक्षणया वर्तन्त इति सशिखा, तत सशिख यथा भवति तथा सर्षपैर्भृता पूरिता सशिखभृताः कर्तव्या इति शेष। अयमत्राशय–एतेषा व्यावर्णितस्वरूपाणा चतुर्णामपि पल्याना मध्याद्यो यथावसर सर्षपै पूर्यते त योजनसहस्रावगाढादूर्ध्व समधिकाष्टयोजनोच्छ्रितवेदिकान्त पूरयित्वा तदुपरि तावच्छिखा वर्ध-

नीया यावदेकोऽपि सर्षपो नावतिष्ठत इति । अत्र सर्वे सवेदिकान्ताः सशिखभृताश्च कर्तव्या इति सामान्योक्तावपि प्रथममनवस्थितपल्य एव भृतः करणीयः, शेषास्तु यथावसरमेवेति मन्तव्यमिति ॥ ७३ ॥

अधुना तस्यानवस्थितपल्यस्य जंबूद्वीपप्रमाणस्य सर्षपैर्भृतस्य यद्विधेयं तदाह—

**ता दीवुदहिसु इक्किक्कसरिसवं खिवियनिट्ठिए पढमे। पढमं व तदंतं चिय पुण भरिए तंमि तह खीणे॥७४॥**

टीका—ततः सर्षपभरणादनन्तरमसत्कल्पनया केनचिद्देवेन दानवेन वा वामकरतले धृत्वा द्वीपोदधिषु द्वीपसमुद्रेषु एकैकं सर्षपं सिद्धार्थं क्षिप्त्वा निष्ठितेऽन्तर्भूतेऽथवानिष्ठापिते रिक्तीकृते प्रथमेऽनवस्थितपल्ये । कोऽर्थः ? एकं सर्षपं द्वीपे प्रक्षिपति, एकमुदधौ, पुनरप्येकं द्वीपे, एकमुदधौ, एवं प्रतिद्वीपं प्रत्युदधि चैकैकं सर्षपं प्रतिक्षिपन्नसौ देवो वा दानवो वा तावद्गतो यावदनवस्थितपल्यो निष्ठितो भवति । ततः किं विधेयमित्याह—'पढमं वेत्यादि' द्वीपे समुद्रे वा यत्रासावनवस्थितपल्यो निष्ठितो भवति 'तदंतं चियत्ति' स एवानवस्थितपल्यस्य निष्ठाकारी द्वीपः समुद्रो वाऽन्तः पर्यवसानप्रमाणतया यस्य द्वितीयानवस्थितपल्यस्य स तदन्तस्तं द्वितीयानवस्थितपल्यप्रमाणाभिधायकं विशेषणमिदं, ततस्तदन्तमेव चियशब्दस्यावधारणार्थत्वाद्विस्तीर्णतया तावत्प्रमाणमेवेत्यर्थः । प्रथममिवाद्यपल्यमिवेत्युपमानेन द्वितीयमनवस्थितपल्यमपि सहस्रयोजनावगाढमष्टयोजनोच्छ्रितजगत्युपरिवेदिकोपशोभितं सशिखं सर्षपैर्भृतं कुर्यादिति सूचयति । ततः प्रथमानवस्थितपल्यमिव तदन्तमेव पुनर्भूयो भृतैः सर्षपैः पूरिते तस्मिन् द्वितीयानवस्थितपल्ये तथा तेन प्रकारेण निक्षिप्तचरमसर्षपद्वीपादेरग्रत एकः सर्षपो द्वीपे, एकः समुद्रे, इत्यादिना क्षीणे निष्ठिते सति द्वितीयानवस्थितपल्ये ॥ ७५ ॥

ततः किं विधेयमित्याह—

खिप्पइ सलागपल्लेगुसरिसवो इय सलागखवणेणं। पुन्नो बीओ य तओ पुव्विं पि व तंमि उद्धरिए ॥ ७५॥

टीका—क्षिप्यते निधीयते शलाकापल्ये द्वितीये शलाकासंज्ञक एकसख्य एव सर्षप स च नानवस्थितपल्यसत्क, किं त्वन्य एवेत्यवसीयते, 'पुण भरिए तंमि तह खीणे' इति सूत्रावयवस्य सामस्त्यरिक्तीकरणप्रतिपादनपरत्वात्। अन्ये त्वनवस्थितपल्यसत्क एव क्षिप्यते इत्याचक्षते। तत्त्वं तु केवलिनो विदन्तीति। आह—किमिति द्वितीयपल्य एव निष्ठिते सत्येकस्य सर्षपस्य शलाकापल्ये प्रक्षेपणमभिहितं यावता प्रथमपल्येऽपि निष्ठिते तत्रैकस्य सर्षपस्य प्रक्षेपो युज्यत इति? तदयुक्तम्, अभिप्रायापरिज्ञानात्, यतोऽनवस्थितपल्यस्य शलाकाभिरेवासौ पूरणीयः, प्रथमश्च लक्षयोजनविस्तृतत्वेनावस्थितपरिणामतयाऽनवस्थित एव न भवतीत्यतो द्वितीयाद्यनवस्थितपल्यशलाका एव तत्र प्रक्षेपमर्हन्तीति। न चैतत् स्वमनीषिकाविजृम्भित, यदुक्तमनुयोगद्वारेषु—"'से णं पल्ले सिद्धत्थयाणं भरिए तओ णं तेहिं सिद्धत्थएहिं दीवसमुद्दाणं उद्धारे घिप्पइ एगे दीवे एगे समुद्दे एगे दीवे एगे समुद्दे एवं खिप्पमाणेहिं खिप्पमाणेहिं जावइयाणं दीवसमुद्दा तेहिं सिद्धत्थएहिं अप्फुन्ना एसणं एवइए खित्ते पल्ले आइट्ठे से णं पल्ले सिद्धत्थयाणं भरिए तओ णं तेहिं सिद्धत्थएहिं दीव-

१ सपल्यः सर्षपैर्भृतः। ततस्तैः सर्षपैर्द्वीपसमुद्राणां उद्धारो गृह्यते एको द्वीपे एकः समुद्रे २ एवं क्षिप्यमाणैः २ यावन्तो द्वीपसमुद्रास्तैः सर्षपैः स्पृष्टा एष एतावान् क्षेत्रपल्य आदिष्टः। स पल्यः सर्षपैर्भृतः ततस्तैः सर्षपैर्द्वीपसमुद्राणामुद्धारो गृह्यते एको द्वीपे एकः समुद्रे २ एवं क्षिप्यमाणैः २ यावन्तो द्वीपसमुद्रास्तैः सर्षपैः स्पृष्टा एषा एतावति क्षेत्रे पल्ये प्रथमा शलाका।

समुद्दाणं उद्धारे घिप्पइ एगे दीवे एगे समुद्दे एगे दीवे एगे समुद्दे एवं खिप्पमाणेहिं खिप्पमाणेहिं जावइयाणं दीवसमुद्दा तेहिं सिद्धत्थएहिं अप्फुन्ना एसणं एवइए खित्ते पल्ले पढमा सलागा" इति । यश्च 'पल्लाणवट्ठिए' इत्यादिना गाथायां प्रथमस्यानवस्थितव्यपदेशोऽसौ योग्यतामात्रेण राज्यार्हकुमारस्य राजव्यपदेशवत् द्रष्टव्यः । 'इय सलागखवणेण पुन्नो बीओ य त्ति' इत्यमुना पूर्वप्रदर्शितशलाकाक्षपणप्रकारेण द्वितीयश्च शलाकापल्यः पूर्णो भृतो भवति सशिख इति यावत् । इयमत्र भावना—ततो यस्मिन् द्वीपे समुद्रे वा स एष द्वितीयपल्यो निष्ठां गतस्तदन्ता मूलतः सर्वेऽपि ये द्वीपसमुद्रास्तावत्प्रमाणः पुनरन्यः पल्यः परिकल्प्यते पूर्ववत् सर्षपैः पूर्यते, ततस्तं तावत्प्रमाणं पल्यमुत्पाट्य ततो निष्ठितस्थानात् परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत्, यावदसौ निष्ठितो भवति । ततो द्वितीया शलाका सर्षपरूपा शलाकापल्ये प्रक्षिप्यते. ततोऽपि यस्मिन् द्वीपे समुद्रे वा स एष तृतीयोऽनवस्थितपल्यो निष्ठितस्तदन्ता मूलतः सर्वेऽपि ये द्वीपसमुद्रास्तावत्प्रमाणः पुनरन्यः पल्यः परिकल्प्यते पूर्ववत् सर्षपैरापूर्यते, ततस्तं तावत्प्रमाणं पल्यमुत्पाट्य ततो निष्ठितस्थानात्परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत्, यावदसौ निष्ठितो भवति । ततस्तृतीया सर्षपरूपा शलाका शलाकापल्ये प्रक्षिप्यते, एवमनेन क्रमेण पुनः पुनरनवस्थितपल्यस्य सर्षपभरणरिक्तीकरणलब्धैकैकसर्षपरूपाभिः शलाकाभिः शलाकापल्यो यथोक्तप्रमाणः सशिखाकस्तावत्पूरयितव्यो यावत्तत्रैकोऽप्यन्यः सर्षपो न मातीति । 'बीओ य त्ति' इत्यत्र चशब्दात्पूर्वपरिपाट्यागतोऽनवस्थितपल्यः सर्षपैरापूरणीयः, ततः किं विधेयमित्याह—तओ पुव्वं पि व तंमि उद्धरिए त्ति' ततः शलाकापल्यपूर्वपरिपाट्यागतानवस्थितपल्यापूरणानन्तरं पूर्ववत्तस्मिन् शलाकापल्ये उद्धृते सति ॥ ७५ ॥

खीणे सलाग तइए एवं पढमेहि बीयय भरसु। तेहि तइय तेहि य तुरिय जा किर फुडा चउरो ॥७६॥

टीका—क्षीणे च निर्लेपे सति सर्षपरूपा शलाका तृतीये प्रतिशलाकापल्ये प्रक्षिप्यते ऽतीयमक्षरगमनिका । भावार्थस्त्वयम्—तत शलाकापल्यापूरणानन्तर त शलाकापल्य वामकरतले कृत्वा पूर्वानवस्थितपल्यचरमसर्षपाक्रान्ताद्द्वीपात् समुद्राद्वा परत प्रतिद्वीप प्रतिसमुद्र चैकैक सर्षप प्रतिक्षिपेद्यावदसौ निष्ठितो भवति । ततः प्रतिशलाकापल्ये सर्षपरूपा प्रथमा प्रतिशलाका प्रक्षिप्यते, ततोऽनन्तरोक्तोऽनवस्थितपल्य उत्पाद्यते, तत शलाकापल्यसर्षपाक्रान्ताद्द्वीपात् समुद्राद्वा परत पूर्वक्रमेण द्वीपसमुद्रेष्वेकैक सर्षप प्रक्षिपेत्, यावदसौ नि शेषतो रिक्तो भवति । तत शलाकापल्ये पुनरपि सर्षपरूपा एका शलाका प्रक्षिप्यते, ततोऽनन्तरोक्तानवस्थितपल्यचरमसर्षपाक्रान्तो द्वीप समुद्रो वा यस्तदन्तमनवस्थितपल्यसर्षपैर्भृत्वा तत परत पुनरप्येकैक सर्षप प्रतिद्वीप प्रतिसमुद्र च प्रक्षिपेद्यावदसौ निष्ठितो भवति । ततो द्वितीया शलाका शलाकापल्ये प्रक्षिप्यते, एवमपरापरानवस्थितपल्यापूरणरिक्तीकरणलब्धैकैकसर्षपैर्यदा शलाकापल्य आपूरितो भवति पूर्वपरिपाट्या चानवस्थितपल्यस्तदा शलाकापल्यमुत्पाट्य प्राक्तनानवस्थितपल्यचरमसर्षपाक्रान्ताद्द्वीपात् समुद्राद्वा परत प्रतिद्वीप प्रतिसमुद्र चैकैक सर्षप प्रक्षिपेत्, यावदसौ निर्लेपो भवति । तत प्रतिशलाकापल्ये द्वितीया शलाका प्रक्षिप्यते, ततोऽनवस्थितपल्यमुत्पाट्यानन्तररिक्तीकृतशलाकापल्यचरमसर्षपाक्रान्ताद्द्वीपात् समुद्राद्वा परत पूर्वक्रमेण द्वीपसमुद्रेष्वेकैक सर्षप प्रक्षिपेत्, यावदसौ निष्ठितो भवति । तत पुनरपि शलाकापल्ये सर्षपरूपा शलाका प्रक्षिप्यते, यत्र चासौ द्वीपे समुद्रे वा निष्ठितस्तावत्प्रमाणविस्तरात्मकमनवस्थितपल्य सर्षपैरापूर्य ततः परत पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं

सर्षपं प्रक्षिपेद्यावदसौ निष्ठितो भवति । ततः शलाकापल्ये द्वितीया शलाका सर्षपरूपा प्रक्षिप्यते, एवमनेन क्रमेण ताव-द्वक्तव्यं यावत्त्रयोऽपि प्रतिशलाकापल्यशलाकापल्यानवस्थितपल्याः परिपूर्णमापूरिता भवन्ति । ततः प्रतिशलाकापल्यमु-त्पाट्य निष्ठितस्थानात्परतः प्रतिद्वीपं प्रतिसमुद्रमेकैकं सर्षपं प्रक्षिपेद्यावदसौ निष्ठितो भवति । ततो महाशलाकापल्य एका सर्षपरूपा शलाका प्रक्षिप्यते, ततः शलाकापल्यमुत्पाट्य प्रतिशलाकापल्यगतचरमसर्षपाक्रान्ताद्द्वीपात् समुद्राद्वा परतः प्रतिद्वीपं प्रतिसमुद्रमेकैकं सर्षपं प्रक्षिपेद्यावदसौ निष्ठितो भवति । ततः प्रतिशलाकापल्ये प्रतिशलाका प्रक्षिप्यते, ततोऽनवस्थितपल्यमुत्पाटयेत्, उत्पाट्य च शलाकापल्यगतचरमसर्षपाक्रान्ताद्द्वीपात्समुद्राद्वा परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपंस्तावद्गच्छेद्यावदसौ निःशेषतो रिक्तो भवति । ततः शलाकापल्ये प्रथमा शलाका प्रक्षिप्यते, ततोऽनन्तरोक्ता-नवस्थितपल्यगतचरमसर्षपाक्रान्तो द्वीपः समुद्रो वा यस्तत्पर्यन्तविस्तरात्मकोऽनवस्थितपल्यः कल्पयित्वा सर्षपैरापूर्यते, ततस्तं समुत्पाट्य ततो निष्ठितस्थानात्परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद्यावदसौ (निष्ठितो) निर्लेपो भवति । ततो द्वितीया शलाका शलाकापल्ये प्रक्षिप्यते, एवं शलाकापल्य आपूरणीयः, एवमापूरणोत्पाटनप्रक्षेपपरंपरया तावद्वक्तव्यं यावन्महाशलाकापल्यप्रतिशलाकापल्यशलाकापल्यानवस्थितपल्याः सर्वेऽपि परिपूर्णशिखायुक्ताः समापूरिता भवन्ति । एतदेव निगमयन्नाह–'एवं पढमेहिं' इत्यादि, एवमनेन प्रदर्शितक्रमेण प्रथमैरनवस्थितपल्यैर्द्वितीयमेव द्वितीयकं शलाका-पल्यं भरस्व पूरय, तैश्च द्वितीयस्थानवर्तिभिः शलाकापल्यैस्तृतीयं प्रतिशलाकापल्यं भरस्व, तैश्च प्रतिशलाकापल्यैस्तुर्यं

चतुर्थं महाशलाकापल्यं तावद्भरख यावत् 'किलेत्याप्तागमवादसंसूचक' स्फुटा व्याप्ता सशिखा भृता इतियावच्चत्वारश्चतु सख्या अनवस्थितशलाकाप्रतिशलाकामहाशलाकाख्या पल्या भवन्तीति ॥ ७६ ॥

ततश्चतुर्णा पल्यानां पूर्णत्वे यत्सपद्यते तदाह—

**पढमतिपल्लुद्धरिया दीवुदही पल्लचउसरिसवा य। सव्वो वि एगरासी रूवूणो परमसखिज्जं ॥ ७७ ॥**

टीका-प्रथममाद्य यत्त्रिपल्य पल्यत्रयमनवस्थितशलाकाप्रतिशलाकाख्य तेनोद्धृता एकैकसर्षपप्रक्षेपेण व्याप्ता प्रथमत्रिपल्योद्धृता, क एत इत्याह-द्वीपोदधयो, न केवल द्वीपोदधय पल्यचतुष्कसर्षपाश्च, किं भवतीत्याह—सर्वोऽपि समस्तोऽप्येषोऽनन्तरोक्त सर्षपव्याप्तद्वीपसमुद्रपल्यचतुष्कगत सर्षपलक्षणो राशि सघातो रूपोन एकेन सर्षपरूपेण रहित सन् परमसंख्येयमुत्कृष्टसख्यातक भवतीति। तदेव तावदिदमुत्कृष्टसख्येयक, जघन्य तु द्वौ, जघन्योत्कृष्टयोश्चान्तराले यानि सख्यास्थानानि सर्वाणि मध्यम सख्येयकमिति सामर्थ्याद्युक्त भवति। सिद्धान्ते यत्र क्वचित् सख्यातग्रहण करोति तत्र सर्वत्रापि मध्यम सख्येयक द्रष्टव्य। यदुक्तमनुयोगद्वारचूर्णौ—"सिद्धाते य जत्थ जत्थ सखिज्जगगहण, तत्थ तत्थ अजहन्नमणुक्कोसय दट्ठव्व ति"। इद चोत्कृष्ट सख्येयकमित्थमेव प्ररूपयितु शक्यते, द्विकादिदशशतसहस्रलक्षकोट्यादिशीर्षप्रहेलिकातराशिभ्योऽतिबहुना समतिक्रान्तत्वेन प्रकारान्तरेणाख्यातुमशक्यत्वात्। यदाहुः प्रसिद्धसिद्धान्तसन्दोहविवरणप्रकरणकरणप्रमाणग्रथनावाप्तसुधाशुधामधवलयश'प्रसरधवलितसकलवसुन्धरावलयश्रीहरिभद्रसूरिपादा अनुयो

१ सिद्धाते च यत्र यत्र सख्यातकग्रहण तत्र तत्राजघन्यमनुत्कृष्ट द्रष्टव्य।

गद्धारटीकायाम्—"जंबूद्दीवप्पमाणमेत्ता चत्तारि पल्ला पढमो अणवट्ठियपल्लो बिइओ सलागापल्लो तईओ पडिसलागापल्लो चउत्थओ महासलागापल्लो एए चउरो वि रयणप्पहपुढवीए पढमं रयणकंडं जोयणसहस्सावगाहं भित्तूण बिइए वयरकंडे पइट्ठिया इमा ठवणा ( ○○○○ ) एए ठविया। एगो गणणं न उवेइ दुप्पभिई संखं ति काउं, तत्थ पढमे अणवट्ठियपल्ले दो सरिसवा पक्खित्ता एयं जहन्नगं संखिज्जगं, तत्तो एगुत्तर वुड्ढीए तिन्नि चउरो पंच जाव सो पुन्नो अन्नसरिसवं न पडिच्छइत्ति ताहे असब्भावठवणं पडुच्च वुच्चति तं को वि देवो दाणवो उक्खित्तुं वामकरयले काउं ते सरिसवे जंबूदीवाइ ( ए ) एगं

---

१ जंबूद्वीपप्रमाणाश्चत्वारः पल्याः प्रथमोऽनवस्थितपल्यो द्वितीयः शलाकापल्यस्तृतीयः प्रतिशलाकापल्यः चतुर्थको महाशलाका-पल्यः। एते चत्वारोऽपि रत्नप्रभापृथ्व्याः प्रथमं रत्नकांडं योजनसहस्रावगाहं भित्त्वा द्वितीयस्मिन् वज्रकांडे प्रतिष्ठिता। एषा स्थापना ( ○○○○ ) एते स्थापिताः। एको गणनां नोपैति द्विप्रभृतिः संख्येति कृत्वा। तत्र प्रथमेऽनवस्थितपल्ये द्वौ सर्षपौ क्षिप्तौ एतज्जघन्यं संख्यातकं। तत एकोत्तरवृद्ध्या त्रयश्चत्वारः पंच यावत्स पूर्णोन्यसर्षपं न प्रतीच्छते इति तर्हि असद्भावस्थापनां प्रतीत्योच्यते तं कोपि देवो वा दानवो वोत्क्षिप्य वामकरतले कृत्वा तान् सर्षपान् जंबूद्वीपादौ एकं द्वीपे एकं समुद्रे प्रक्षिपेद्यावन्निष्ठितास्तावच्छलाकापल्ये एकः सर्षपो न्यस्तः यत्र निष्ठितस्तेन सहादिभैर्द्वीपसमुद्रैः पुनरन्यः पल्यः क्रियते सोऽपि सर्षपैर्भृतः ततः परत एकैकं द्वीपसमुद्रेषु प्रक्षिपता निष्ठापितः ततः शलाकापल्ये द्वितीया शलाका प्रक्षिप्ता। एवमेतेनानवस्थितपल्यकरणक्रमेण शलाकाग्रहणं करोति तेन शलाकापल्यः शलाकाभिर्भृतः क्रमागतोऽनवस्थितोऽपि ततः शलाकापल्यः शलाकां न प्रतीच्छते इति कृत्वा स एव निष्ठितस्थानात्परतः पूर्वक्रमेणोत्क्षिप्तः प्रक्षिप्तो निष्ठितश्च ततः प्रतिशलाकापल्ये प्रथमा शलाका न्यस्ता ततोऽनवस्थित उत्क्षिप्तो निष्ठितस्थानात्परतः पूर्वक्रमेण प्रक्षिप्तो निष्ठितश्च ततः शलाकापल्ये शलाका प्रक्षिप्ता।

दीवे एग समुद्दे पक्खिविज्जा जाव निट्ठिया, ताहे सलागापल्ले एगो सरिसवो छूढो जइ निट्ठिओ तेण सह आरिल्लएहिं दीवसमुद्देहिं पुणो अन्नो पल्लो आइज्जइ सो वि सरिसवाण भरिओ, तओ परओ एक्केक्क दीवसमुद्देसु पक्खिवंतेण निट्ठा-विओ, तओ सलागापल्ले बिइया सलागा पक्खित्ता, एव एएण अणवट्ठियपल्लकरणक्कमेण सलागग्गहण करेंति, तेण सलागापल्लो सलागाण भरिओ कमागतो अणवट्ठियओ वि तओ सलागापल्लो सलाग न पडिच्छइ त्ति काउ सो चेव निट्ठियठाणाओ परओ पुव्वक्कमेण उक्खित्तो पक्खित्तो निट्ठिओ य तओ पडिसलागापल्ले पढमा सलागा छूढा तओ अणवट्ठिओ उक्खित्तो निट्ठियठाणाओ परओ पुव्वक्कमेण पक्खित्तो निट्ठिओ य, तओ सलागापल्ले सलागा पक्खित्ता, एंव अण्णेण अण्णेण अणवट्ठिएण आरिक्कनिक्किरतेणं जाहे पुणो सलागापल्लो भरिओ अणवट्ठिओ य। ताहे पुणो सलागापल्लो उक्खित्तो पक्खिप्पमाणो निट्ठिओ य पुव्वक्कमेण, ताहे पडिसलागापल्ले बिइया पडिसलागा छूढा, एव आइरणनिक्करणेण जाहे तिन्नि वि पडिसलागसलागअणवट्ठियपल्लो य भरिओ ताहे पडिसलागापल्लो उक्खित्तो पक्खिप्पमाणो निट्ठिओ य ताहे महासलागापल्ले पढमा सलागा छूढा, ताहे सलागापल्लो उक्खित्तो पक्खिप्पमाणो निट्ठिओ य, ताहे पडिसलागा

---

एंवमन्येनान्येन अनवस्थितेन भृतरिक्तीक्रियमाणेन यदा पुन शलाकापल्य भृतोऽनवस्थितश्च । तदा पुन शलाकापल्य उत्क्षिप्त प्रक्षिप्य-माणो निष्ठितश्च पूर्वक्रमेण तदा प्रतिशलाकापल्ये द्वितीया शलाका क्षिप्ता एव भरणरिक्तीकरणेन यदा त्रयोऽपि शलाका प्रतिशलाकानव-स्थितश्च भृता तदा प्रतिशलाकापल्य उत्क्षिप्त प्रक्षिप्यमाणो निष्ठितश्च तदा महाशलाकापल्ये प्रथमा शलाका क्षिप्ता तदा शलाकापल्य उत्क्षिप्त प्रक्षिप्यमाणो निष्ठितश्च तदा प्रतिशलाका पल्ये शलाका प्रक्षिप्तास्तदाऽनवस्थित उत्क्षिप्त प्रक्षिप्तश्च तदा शलाकापल्ये शलाका प्र

पल्ले सलागा पक्खित्ता ताहे अणवट्ठिओ उक्खित्तो पक्खित्तो य, ताहे सलागापल्ले सलागा पक्खित्ता, एवं आइरणनिक्किरणक-मेण ताव कायव्वं जाव परंपरेणं महासलागपडिसलागसलागअणवट्ठियपल्लो य चउरो वि भरिया, ताहे उक्कोसमइच्छियं, इत्थ जावइया अणवट्ठियपल्लसलागपल्लपडिसलागपल्लेण य दीवसमुद्दा उद्धरिया, जे उ चउपल्लट्ठिया सरिसवा एस सव्वो वि एत-प्पमाणो रासी एगरूवूणो उक्कोसयं संखिज्जयं हवइ जहण्णुक्कोसट्ठाणमज्झे जे ठाणा ते सव्वे पत्तेयं अजहण्णमणुक्कोसया संखिज्जया भणियव्वा, सिद्धंते य जत्थ जत्थ संखिज्जगग्गहणं कयं तत्थ तत्थ सव्वं अजहन्नमनुकोसयं दट्ठव्वं, एवं संखेज्जगे परू-विए सीसो पुच्छइ–भगवं किमेएणं अणवट्ठियपल्लसलागपडिसलागाईहिं य दीवसमुद्दुद्धारगहणेण य उक्कोससंखिज्जपरू-वणा किज्जइ ? गुरु भणइ–नत्थि अन्नो संखिज्जगस्स परूवणोवाओ त्ति ॥ ७७ ॥

इत्युक्तं त्रिविधमपि संख्येयकं, इदानीं नवविधमसंख्येयकं नवविधमेव चानन्तकं निरूपयिषुर्गाथायुगमाह–

**रूवजुयं तु परित्तासंखं लहु अस्स रासि अब्भासे । जुत्तासंखिज्जं लहु आवलियासमयपरिमाणं ॥७८॥**

क्षिप्ता एवं भरणरिक्तीकरणक्रमेण तावत्कर्त्तव्यं यावत्परंपरया महाशलाका प्रतिशलाका शलाकाऽनवस्थितपल्यश्च चत्वारोऽपि भृताः तदोत्कृष्टं जातं । अत्र यावन्तोऽनवस्थितशलाकाप्रतिशलाकापल्यैर्द्वीपसमुद्रा उद्धृता ये च चतुष्पल्यस्थिताः सर्षपा एष सर्वोऽपि एतत्प्रमाणो राशिरेक-रूपोन उत्कृष्टं संख्यातकं भवति । जघन्योत्कृष्टस्थानमध्ये यानि स्थानानि तानि सर्वाणि प्रत्येकं अजघन्यमनुत्कृष्टं संख्यातकं भणितव्यं । सिद्धान्ते च यत्र यत्र संख्येयग्रहणं कृतं तत्र तत्र सर्वं अजघन्यमनुत्कृष्टं द्रष्टव्यं । एवं संख्यातके प्ररूपिते शिष्यः पृच्छति–भगवन् किमेते-नानवस्थितशलाकाप्रतिशलाकादिना द्वीपसमुद्रग्रहणेन चोत्कृष्टसंख्यातकप्ररूपणा क्रियते? गुरुर्भणति नास्त्यन्यः संख्येयकस्य प्ररूपणोपाय इति ।

टीका–पूर्वोक्तमेवोत्कृष्ट सख्येयक रूपयुत तु रूपेणैकेन सर्षपेण पुनर्युक्त सल्लघु जघन्य परीत्तासख्य परीत्तासख्येयक भवति । इदमत्र हृदय–इह येनेकेन सर्षपरूपेण रहितोऽनन्तरोद्दिष्टो राशिरुत्कृष्टसख्यातमुक्त तत्र राशौ तस्यैव रूपस्य निक्षेपो यदा क्रियते तदा तदेवोत्कृष्ट सख्यातक जघन्य परीत्तासख्यातक भवतीति । इह च जघन्यपरीत्तासंख्येयकेऽभिहिते यद्यपि तस्यैव मध्यमोत्कृष्टभेदप्ररूपणावसरस्तथापि परीत्तयुक्तनिजपदभेदतस्त्रिभेदानामप्यसख्येयकाना मध्यमोत्कृष्टभेदौ पश्चादल्पवक्तव्यत्वात् प्ररूपयिष्येते अतोऽधुना जघन्ययुक्तासख्यातक तावदाह–'अस्स रासि अपामे' इत्यादि अस्य राशेर्जघन्यपरीत्तासख्येयकगतराशेरभ्यासे परस्परगुणने सति लघु जघन्य युक्तासंख्येयक भवति। तच्चावलिकासमयपरिमाण, आवलिका "असखिज्जाण समयाण समुदयसमिइसमागमेण"[१] इत्यादिसिद्धान्तप्रसिद्धा तस्या समया निर्विभागा कालविभागास्तत्परिमाणमावलिकासमयपरिमाण जघन्ययुक्तासख्येयकतुल्यसमयराशिप्रमाणा आवलिका इत्यर्थ । एतदुक्त भवति–जघन्यपरीत्तासख्येयकसबन्धीनि यावन्ति सर्षपलक्षणानि रूपाणि तान्येकैकश पृथक् पृथक् सस्थाप्य तत एकैकस्मिन् रूपे जघन्यपरीत्तासख्यातकप्रमाणो राशिर्व्यवस्थाप्यते, तेषा च राशीना परस्परमभ्यासो विधीयते । इहैवं भावना–असत्कल्पनया किल जघन्यपरीत्तासख्येयकराशिस्थाने पच रूपाणि कल्प्यन्ते, तानि विभ्रियन्ते—जाता पचेकका एककानामध प्रत्येक पचैव वारा' पच व्यवस्थाप्यन्ते । तद्यथा–$\frac{१}{५}$-$\frac{१}{५}$-$\frac{१}{५}$-$\frac{१}{५}$-$\frac{१}{५}$ । अत्र पचभि' पच गुणिता जाता पचविशति , सापि पचभिरभ्यासे जात पचविश शत, इत्यादिक्रमेणामीषा राशीना परस्पराभ्यासे जातानि

१ असख्येयाना समयाना समुदयसमितिसमागमेन ।

जघन्ययुक्तासंख्यातकराशिरेकेन रूपेण न्यूनः स एव पाश्चात्य उत्कृष्टपरीत्तासंख्येयकस्वरूपो भवति। जघन्यासंख्यातासंख्यातकराशिस्त्वेकेन रूपेण न्यूनः सन् पाश्चात्य उत्कृष्टयुक्तासंख्यातकस्वरूपो भवति। जघन्यपरीत्तानन्तकराशिः पुनरेकेन रूपेण न्यूनः पाश्चात्य उत्कृष्टासंख्यातासंख्यातकस्वरूपो भवति। जघन्ययुक्तानन्तकराशिस्त्वेकरूपोनः पाश्चात्य उत्कृष्टपरीत्तानन्तकस्वरूपो भवति। जघन्यानन्तानन्तकराशिरेकरूपरहितः पाश्चात्य उत्कृष्टयुक्तानन्तकस्वरूपो भवतीति। इदं चासंख्येयकानन्तकभेदानामित्थं प्ररूपणमागमाभिप्रायत उक्तं, कैश्चिदन्यथापि चोच्यते ॥ ७९ ॥

अत एवाह—

**इय सुत्तुत्तं अन्ने वग्गियमिक्कसि चउत्थयमसंखं। होइ असंखासंखं लहु रूवजुयं तु तं मज्झं ॥ ८० ॥**

टीका—इति पूर्वोक्तप्रकारेण यदसंख्यातकानन्तकस्वरूपं प्रतिपादितं तत्सूत्रेऽनुयोगद्वारलक्षणे सिद्धान्त उक्तं निगदितं। तथा चोक्तं श्रीअनुयोगद्वारे—"उक्कोसए संखिज्जए रूवं पक्खित्तं जहन्नयं परित्तासंखिज्जयं होइ, तेण परं अजहन्नमणुक्कोसयाइं ठाणाइं जाव उक्कोसयं परित्तासंखिज्जं न पावेइ, उक्कोसयं परित्तासंखिज्जयं कित्तियं होइ, जहन्नय परित्तासंखिज्जयं जहन्नयपरित्तासंखिज्जयमित्ताणं रासीणं अन्नमन्नब्भासो रूवूणो उक्कोसयं परित्तासंखिज्जयं हवइ। अहवा जहन्नयं जुत्तासंखिज्जयं रूवूणं उक्कोसयं परित्तासंखिज्जयं होइ। जहन्नयं जुत्तासंखिज्जयं कित्तियं होइ? जहन्नयपरित्तासं-

---

१ उत्कृष्टे संख्यातके रूपं प्रक्षिप्तं जघन्यं परीत्तासंख्यातकं भवति ततः परमजघन्योत्कृष्टानि स्थानानि यावदुत्कृष्टं परीत्तासंख्यातकं न प्राप्नोति। उत्कृष्टं परीत्तासंख्यातकं कियद्भवति?। जघन्यपरीत्तासंख्येयकं जघन्यपरीत्तासंख्येयकानां राशीनामन्योन्याभ्यासो रूपोन उत्कृष्टं

खिज्जयमित्ताण रासीण अन्नमन्नब्भासो पडिपुन्नो जहन्नय जुत्तासखिज्जय होइ। अहवा उक्कोसए परित्तासखिज्जए रूव पक्खित्त जहन्नय जुत्तासखिज्जय होइ। आवलिया वि तित्तिया चेव। तेण पर अजहन्नमणुक्कोसयाइ ठाणाइ जाव उक्कोसय जुत्तासखिज्जय न पावइ। उक्कोसय जुत्तासखिज्जय कित्तिय होइ?। जहन्नएण जुत्तासखिज्जएण आवलिया गुणिया अन्नमन्नब्भासो रूवूणो उक्कोसय जुत्तासखिज्जय होइ। अहवा जहन्नय सखिज्जासखिज्जय रूवूण उक्कोसय जुत्तासखिज्जय होइ। जहन्नय असखिज्जासखिज्जय कित्तिय होइ, जहन्नेण जुत्तासखिज्जएण आवलिया गुणिया अन्नमन्नब्भासो पडिपुन्नो जहन्नय असखिज्जासखिज्जय होइ। अहवा उक्कोसए जुत्तासखिज्जए रूव पक्खित्त जहन्नय असखिज्जासखिज्जय होइ, तेण पर अजहन्नमणुक्कोसयाइ ठाणाइ जाव उक्कोसय असखिज्जासखिज्जय न पावेइ। उक्कोसय असखिज्जासंखिज्जय कित्तिय होइ?। जहन्नय असखिज्जासखिज्जय जहन्नयअसखिज्जासखिज्जयमित्ताण रासीण अन्नमन्नब्भासो रूवूणो उक्कोसय असखिज्जासखिज्जय होइ। अहवा जहन्नय परित्ताणतय रूवूण उक्कोसय असखिज्जासखिज्जय होइ। जहन्नय परि-

---

परीत्तासख्यातक भवति, अथवा जघन्य युक्तासख्यातक रूपोन उत्कृष्ट परीत्तासख्यातक भवति। जघन्य युक्तासख्यातक कियद्भवति? जघन्यपरीत्तासख्यातमात्राणा राशीनामन्योन्याभ्यास प्रतिपूर्णो जघन्य युक्तासख्येयक भवति। अथवोत्कृष्टे परीत्तासख्येयके रूप प्रक्षिप्त जघन्य युक्तासख्यातक भवति। आवलिकापि तावत्येव। तत परमजघन्योत्कृष्टानि स्थानानि यावदुत्कृष्ट युक्तासख्यातक न भवति। उत्कृष्ट युक्तासख्य कियद्भवति? जघन्ययुक्तासख्येनावलिका गुणिता अन्योन्याभ्यासो रूपोन उत्कृष्ट युक्तासख्यातक भवति। अथवा जघन्यमसख्यासख्यातक रूपोन उत्कृष्ट युक्तासख्यातक भवति। जघन्यमसख्यासख्यातक कियद्भवति? जघन्ययुक्तासख्यातकेनावलिका गुणिता

— संख्येया x आवलिका² − १ = उत्कृष्टसंख्यातक

त्ताणंतयं कित्तियं होइ ? । जहन्नयं असंखिज्जासंखिज्जयं जहन्नयअसंखिज्जासंखिज्जयमित्ताणं रासीणं अन्नमन्नब्भासो पडिपुन्नो जहन्नयं परित्ताणंतयं होइ । अहवा उक्कोसए असंखिज्जासंखिज्जए रूवं पक्खित्तं जहन्नयं परित्ताणंतयं होइ । तेण परं अजहन्नमणुक्कोसयाइं ठाणाइं जाव उक्कोसं परित्ताणंतयं न पावइ । उक्कोसयं परित्ताणंतयं कित्तियं होइ ? जहन्नयं परित्ताणंतयं जहन्नयपरित्ताणंतयमित्ताणं रासीणं अन्नमन्नब्भासो रूवूणो उक्कोसयं परित्ताणंतयं होइ । अहवा जहन्नयं जुत्ताणंतयं रूवूणं उक्कोसयं परित्ताणंतयं होइ । जहन्नयं जुत्ताणंतयं कित्तियं होइ ? जहन्नयं परित्ताणंतयं जहन्नपरित्ताणंतयमित्ताणं रासीणं अन्नमन्नब्भासो पडिपुन्नो जहन्नयं जुत्ताणंतयं होइ । अहवा उक्कोसए परित्ताणंतए रूवं पक्खित्तं जहन्नयं जुत्ताणंतयं होइ । अभवसिद्धिया वि तत्तिया चेव । तेण परं अजहन्नमणुक्कोसयाइं ठाणाइं जाव उक्को-

---

अन्योन्याभ्यासः प्रतिपूर्णो जघन्यासंख्यासंख्यातकं भवति । अथवोत्कृष्टे युक्तासंख्ये रूपं प्रक्षिप्तं जघन्यासंख्यासंख्यातकं भवति । ततः परमजघन्योत्कृष्टानि स्थानानि यावदुत्कृष्टमसंख्यासंख्यातकं न प्राप्नोति । उत्कृष्टासंख्यासंख्यातकं कियद्भवति । जघन्यासंख्यासंख्यातकं जघन्यसंख्यासंख्यातकमात्राणां राशीनामन्योन्याभ्यासो रूपोन उत्कृष्टासंख्यासंख्यातकं भवति । अथवा जघन्यपरीतानंतकं रूपोनं उत्कृष्टासंख्यासंख्यातकं भवति। जघन्यपरीत्तानंतकं कियद्भवति ? जघन्यासंख्यातासंख्यातं जघन्यासंख्यातासंख्यातमात्राणां राशीनामन्योन्याभ्यासः। प्रतिपूर्णो जघन्यपरीत्तानंतकं भवति । अथवोत्कृष्टेऽसंख्यासंख्याते रूपं प्रक्षिप्तं जघन्यपरीत्तानंतं भवति । ततः परमजघन्योत्कृष्टानि स्थानानि यावदुत्कृष्टं परीत्तानंतं न प्राप्नोति । उत्कृष्टपरीत्तानंतं कियद्भवति ? जघन्यपरीत्तानंतकं जघन्यपरीत्तानंतकमात्राणां राशीनामन्योन्या-

सय जुत्ताणतय न पावइ । उक्कोसयं जुत्ताणतय किंत्तिय होइ ? जहन्नएणं जुत्ताणतएण अभवसिद्धिया गुणिया अन्नमन्नब्भासो रूवूणो उक्कोसय जुत्ताणतय होइ । अहवा जहन्नय अणताणतय रूवूण उक्कोसय जुत्ताणंतय होइ । जहन्नय अणताणतय किंत्तिय होइ ? जहन्नएण जुत्ताणतएण अभवसिद्धिया गुणिया अन्नमन्नब्भासो पडिपुन्नो जहन्नय अणंताणतय होइ । अहवा उक्कोसए जुत्ताणतए रूव पक्खित्त जहन्नय अणताणंतय होइ । तेण पर अजहन्नमणुक्कोसयाइ ठाणाइ । एव उक्कोसय अणताणतय नत्थि" इत्युक्त सूत्राभिप्राय । साम्प्रत मतान्तरगतमसख्यातानन्तकस्वरूपमाह—'अन्ने वग्गिय' इत्यादि, अन्ये आचार्या एके सूरय एवमाहु , यथा—चतुर्थकमसख्य जघन्ययुक्तासख्यातकरूप वर्गित तावर्तव राशिना गुणितं सत् 'एक्कसिति' एकवार भवति जायते सपद्यतेऽसख्यासख्य लघु जघन्य जघन्यासख्यातासख्यातक भवतीत्यर्थ । अत्रापि मतेऽसख्यातकमुद्दिश्य मध्यमोत्कृष्टभेदप्ररूपणा पूर्वोक्तैवेति दर्शयन्नाह—'रूवजुयं' तु त

---

भ्यासो रूपोन उत्कृष्टपरीत्तानत भवति । अथवा जघन्ययुक्तानत रूपोनमुत्कृष्टपरीत्तानत भवति । जघन्ययुक्तानत कियद्भवति ? जघन्यपरीत्तानत जघन्यपरीत्तानतमात्रराशीनामन्योन्याभ्यास प्रतिपूर्णो जघन्ययुक्तानत भवति । अथवोत्कृष्टे परीत्तानते रूप प्रक्षिप्त जघन्ययुक्तानत भवति । अभवसिद्धिका अपि तावन्त एव । तत परमजघन्योत्कृष्टानि स्थानानि यावदुत्कृष्ट युक्तानत न प्राप्नोति । उत्कृष्ट युक्तानत कियद्भवति ? जघन्ययुक्तानतेनाभवसिद्धिका गुणिता अन्योन्याभ्यासो रूपोन उत्कृष्ट युक्तानन्तक भवति । अथवा जघन्यानन्तानन्त रूपोनमुत्कृष्टयुक्तानत भवति । जघन्यानतानतक कियद्भवति ? जघन्ययुक्तानतेनाभवसिद्धिका गुणिता अन्योन्याभ्यास प्रतिपूर्णो जघन्यानतानतक भवति । अथवोत्कृष्टे युक्तानते रूप प्रक्षिप्त जघन्यानतानतक भवति । तत परमजघन्योत्कृष्टानि स्थानानि । एवमुत्कृष्टमनतानतक नास्ति ।

मग्नं ति' रूपेण सर्षपलक्षणेन युतं रूपयुतं तुरवधारणे व्यवहितसंबन्धश्च तदिति तदेवानन्तराभिहितं जघन्यासंख्येयासंख्येयादिकं किं भवतीत्याह—मध्यं मध्यमासंख्येयासंख्येयादिकं भवति ॥ ८० ॥

**रुवूणमाइमं गुरु तिवग्गिउं तं इमं दस खेवे । लोगागासपएसा धम्माधम्मेगजियदेसा ॥ ८१ ॥**

टीका—तदेव जघन्यासंख्येयासंख्येयादिकं रूपोनमेकेन रूपेण रहितं सदादिमं तदपेक्षयाद्यस्य राशेः संबन्धि गुरु उत्कृष्टं भवतीति । अयमत्राशयः—जघन्यासंख्येयासंख्येयकं रूपोनं सद्युक्तासंख्यातकमुत्कृष्टं भवति, जघन्यपरीत्तानन्तकं रूपोनमसंख्येयासंख्येयकमुत्कृष्टं भवति, जघन्ययुक्तानन्तं तु रूपोनमुत्कृष्टं परीत्तानन्तं भवति, जघन्यानन्तानन्तकं तु रूपोनमुत्कृष्टं युक्तानन्तकं भवतीति । अधुना जघन्यपरीत्तानन्तकं मतान्तरेण प्ररूपयन्नाह— तिवग्गिउं तं इत्यादि, तदिति प्रागभिहितं जघन्यासंख्येयासंख्येयकं त्रिर्वर्गयित्वा सदृशद्विराशी परस्परं त्रीन् वारानभ्यस्येत्यर्थः । अयमत्राशयः—जघन्यासंख्येयासंख्येयकराशेः सदृशद्विराशिगुणनलक्षणो वर्गो विधीयते, तस्यापि वर्गराशेः पुनर्वर्गः क्रियते, तस्यापि वर्गराशेः पुनरपि वर्गो निष्पाद्यते इति । ततः किमित्याह—इमान् वक्ष्यमाणस्वरूपान् दशेति दशसंख्यान् क्षिप्यन्त इति "कर्मणि घञ्" क्षेपाः प्रक्षेपणीयराशयस्तान् क्षिपस्व निधेहीत्युत्तरगाथायां संबन्धः । तथा हि—लोकाकाशस्य प्रदेशाः, धर्मश्चाधर्मश्चैकजीवश्च धर्माधर्मैकजीवास्तेषां देशाः प्रदेशाः । अयमत्रार्थः—धर्मास्तिकायप्रदेशा अधर्मास्तिकायप्रदेशा एकजीवप्रदेशाः ( च ) ॥ ८१ ॥

तथा—

ठिइबंधज्झवसाया अणुभागा जोगछेयपलिभागा। दुण्ह य समाण समया पत्तेयनिगोयए खिवसु ॥८४॥

टीका-स्थितिबन्धस्य कारणभूतान्यध्यवसायस्थानानि कपायोदयरूपाण्यध्यवसायशब्देनोच्यन्ते, तान्यसख्येयान्येव । तथा हि-ज्ञानावरणस्य जघन्यान्तर्मुहूर्तप्रमाण' स्थितिबन्ध, उत्कृष्टतस्तु त्रिंशत्सागरोपमकोटाकोटीप्रमाण, मध्यमपदे त्वेकद्वित्रिचतुरादिसमयाधिकान्तर्मुहूर्तादिकोऽसख्येयभेद । एषा स्थितिबन्धाना निर्वर्तकान्यध्यवसायस्थानानि प्रत्येकमसख्येयलोकाकाशप्रदेशप्रमाणानि भिन्नान्येव । एव च स त्वेकस्मिन्नपि ज्ञानावरणेऽसख्येयानि स्थितिबन्धाध्यवसायस्थानानि लभ्यन्ते। एव दर्शनावरणादिष्वपि वाच्यम् । 'अणुभागत्ति'अनुभागा ज्ञानावरणादिकर्मणां जघन्यमध्यमादिभेदभिन्ना रसविशेषा, एतेषा चानुभागविशेषाणा निर्वर्तकान्यसख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्त्यतोऽनुभागविशेषा अप्येतावन्त एव द्रष्टव्या, कारणभेदाश्रितत्वात्कार्यभेदाना । 'जोगछेयपलिभाग त्ति' योगो मनोवाक्कायविषय वीर्य तस्य केवलिप्रज्ञाछेदेन प्रतिविशिष्टा निर्विभागा भागा योगछेदपरिभागास्ते च निगोदादीना सज्ञिपंचेन्द्रियपर्यन्ताना जीवानामाश्रिता जघन्यादिभेदभिन्ना असंख्येया मन्तव्या । 'दुण्ह य समाण समयत्ति' द्वयोश्च समयोरुत्सर्पिण्यवसर्पिणीकालस्वरूपयो समया असख्येयस्वरूपा' । 'पत्तेयनिगोयए त्ति' अनन्तकायिकान् वर्जयित्वा शेषा पृथिव्यप्तेजोवायुवनस्पतिवसा प्रत्येकशरीरिण सर्वेऽपि जीवा इत्यर्थ', ते चासख्येया भवन्ति । निगोदा सूक्ष्माण

वादराणां चानन्तकायिकवनस्पतिजीवानां शरीराणीत्यर्थः, ते चासंख्याताः । एवमेते प्रत्येकमसंख्येयस्वरूपा दश क्षेपास्तान् क्षिपस्व ॥ ८२ ॥

अथ राशिदशकप्रक्षेपानन्तरं तस्यैव राशेर्यस्मिन् विहिते यद्भवति तदाह–

**पुणरवि तंमि तिवग्गिय परित्तणंत लहु तस्स रासीणं। अब्भासे लहु जुत्ताणंतं अभव्वजियमाणं ॥ ८३॥**

टीका–पुनरपि 'तंमि त्ति' तस्मिन्ननन्तरोदिते प्रक्षिप्तप्रक्षेपदशके त्रिवर्गिते त्रीन् वारान् वर्गिते सति परीत्तानन्तं लघु जघन्यं भवति । इदमुक्तं भवति–जघन्यासंख्येयासंख्येयकस्वरूपं वारत्रयं वर्गिते राशौ ते क्षेपाः क्षिप्यन्ते । तत इत्थं पिंडितो यो राशिः संपद्यते स पुनरपि वारत्रयं वर्ग्यते ततो जघन्यं परीत्तानन्तकं भवतीति । इदमिदानीं जघन्ययुक्तानन्तकनिरूपणायाह–'तस्स रासीणेत्यादि' तस्य जघन्यपरीत्तानन्तकस्य संबन्धिनां राशीनामन्योन्यमभ्यासे सति लघु जघन्यं युक्तानन्तकमभव्यजीवमानं भवति । इयमत्र भावना–जघन्यपरीत्तानन्तके ये राशयः सर्षपरूपास्ते पृथक् पृथक् व्यवस्थाप्यन्ते, तेषां तथा व्यवस्थापितानां जघन्यपरीत्तानन्तकमानानां राशीनामन्योऽन्याभ्यासे सति युक्तानन्तं जघन्यं भवति, तथा जघन्ययुक्तानन्तके यावन्ति रूपाणि वर्तन्त अभव्यसिद्धिका अपि जीवाः केवलिना तावन्त एव दृष्टा इति ॥८३॥

जघन्यानन्तानन्तकप्ररूपणायाह–

**तव्वग्गे पुण जायइ णंताणंत लहु तं च तिक्खुत्तो । वग्गसु तह वि न तं होइ णंतखेवे खिवसु छ इमे ॥८४॥**

टीका–तस्य जघन्ययुक्तानन्तकराशेर्वर्गे सकृदभ्यासे तद्वर्गे कृते सति पुनर्भूयोऽपि जायते सपद्यतेऽनन्तानन्त लघु जघन्य जघन्यानन्तकं भवतीत्यर्थः । उत्कृष्टानन्तानन्तकप्ररूपणायाह–'त च तिक्खुत्तो' इत्यादि, तच्च तत्पुनर्जघन्यमनन्तानन्त त्रिकृत्वस्त्रीन् वारान् वर्गयस्व तावतैव राशिना गुणय । अयमत्रार्थः –जघन्यानन्तानन्तकराशेस्तावतैव राशिना गुणनस्वरूपो वर्गः क्रियते, ततस्तस्य वर्गितराशेः पुनर्वर्गः, तस्यापि वर्गितराशेर्भूयोऽपि वर्ग इति । तथाप्येवमपि वारत्रय वर्गे कृतेऽपि तदुत्कृष्टमनन्तानन्तक न भवति न जायते । ततः किं कार्यमित्याह–अनन्तक्षेपानिमान् वक्ष्यमाणस्वरूपान् षड् षट्संख्यान् क्षिपस्व निधेहीति ॥ ८४ ॥

तानेव षडनन्तक्षेपानाह–

सिद्धा निगोयजीवा वणस्सई काल पुग्गला चेव । सव्वमलोगनहं पुण तिवग्गिउं केवलदुगम्मि ॥८५॥

टीका–सर्व एव सिद्धा निष्ठितनिःशेषकर्माणः, निगोदजीवाः समस्ता अपि सूक्ष्मबादरभेदभिन्ना अनन्तकायिकसत्त्वाः, वनस्पतयः प्रत्येकानन्ताः सर्वेऽपि वनस्पतिजीवाः, काल इति सर्वोऽप्यतीतानागतवर्तमानकालसमयराशिः, पुद्गलाः समस्तपुद्गलराशेः परमाणवः, सर्वं समस्तमलोकनभोऽलोकाकाशमित्युपलक्षणत्वात् सर्वोऽपि लोकालोकप्रदेशराशिः, एतत्षड्राशिषट्कप्रक्षेपानन्तरं यस्मिन् कृते यद्भवति तदाह–पुनः पुनरपि त्रिर्वर्गयित्वा त्रीन् वारांस्तावतैव राशिना गुणयित्वा केवलद्विके केवलज्ञानकेवलदर्शनयुगले क्षिप्ते सति ॥ ८५ ॥

किमित्याह–

खित्ते णंताणंतं हवइ जिठ्ठं तु ववहरइ मझं। इय सुहुमत्थवियारो लिहिओ देविंदसूरीहिं ॥ ८६ ॥

टीका–क्षिप्ते न्यस्ते सत्यनन्तानन्तकं भवति जायते ज्येष्ठमुत्कृष्टं 'तुः' पुनरर्थे व्यवहितसंबन्धश्च व्यवहरति व्यवहारकारि मध्यं तु मध्यमं पुनः। इयमत्र भावना–इह केवलज्ञानकेवलदर्शनशब्देन तत्पर्याया उच्यन्ते, ततः केवलज्ञानकेवलदर्शनयोः पर्यायेष्वनन्तेषु क्षिप्तेषु सत्स्विति द्रष्टव्यम्। नवरं ज्ञेयपर्यायाणामानन्त्याज्ज्ञानपर्यायाणामप्यानन्त्यं वेदितव्यं, एवमनन्तानन्तं ज्येष्ठं भवति, सर्वस्यैव वस्तुजातस्यात्र संगृहीतत्वात्, अतः परं वस्तुतत्त्वस्यैव संख्याविषयस्याभावादित्यभिप्रायः। सूत्राभिप्रायतस्त्वेवभमप्यनन्तानन्तकमुत्कृष्टं न प्राप्यते, अनन्तकस्याष्टविधस्यैव तत्र प्रतिपादितत्वात्। तथा चोक्तमनुयोगद्वारेषु–"एवमुक्कोसयं अणंताणंतयं नत्थि" तदत्र तत्त्वं केवलिनो विदन्ति। सूत्रे तु यत्र क्वचिदनन्तानन्तकं गृह्यते तत्र सर्वत्राजघन्योत्कृष्टशब्दवाच्यमनन्तानन्तकं द्रष्टव्यम्। तदेवं व्याख्यातं सप्रपंचं संख्यातकासंख्यातकानन्तकादिस्वरूपं, तन्निरूपणे च व्याख्याता "नमिय जिणं जिय मग्गण" इत्यादिमौलद्वारगाथा। संप्रति षडशीतिसंख्यगाथाप्रमाणत्वेन यथार्थं षडशीतिकशास्त्रं समर्थयन्नाह–'इय सुहुमत्थवियारो' इत्यादि, इति पूर्वोक्तप्रकारेण सूक्ष्मो मन्दमतिनाऽगम्यो योऽर्थः शब्दाभिधेयं तस्य विचारो विचारणं लिखितोऽक्षरविन्यासीकृतः पंचसंग्रहादिशास्त्रेभ्य इति

---

१ एवमुत्कृष्टमनंतानंतकं नास्ति।

शेप । कैरित्याद्–देवेन्द्रसूरिभिः कराखकलिकाखपाताखतखावमकाद्विशुद्धधर्मधुरोद्धरणधुरीणश्रीमज्जगच्चन्द्रसूरिक्रमकमल-चचरीकैरिति ॥ ८६ ॥

विष्णोरिव यस्य विभो पदनयी व्यानशे जगन्निखिलम् । सूक्ष्मार्थसार्थदेशी स श्रीवीरो जिनो जयतु ॥ १ ॥
कुन्दोज्ज्वलकीर्तिभरैः सुरभीकृतमकलविष्टपाभोग । शतमखशतभिनतपदः श्रीगौतमगणधर पातु ॥ २ ॥
तदनु सुधर्मस्वामी जम्बूप्रभवादयो मुनिवरिष्ठा । श्रुतजलनिधिपारीणा भूयास श्रेयसे सन्तु ॥ ३ ॥
तत प्राप्ततपाचार्येत्यभिख्या भिक्षुनायका । समभूवन् कुले चान्द्रे श्रीजगच्चन्द्रसूरय ॥ ४ ॥
जगज्जनितबोधाना तेषा शुद्धचरित्रिणाम् । विनेया समजायन्त श्रीमद्देवेन्द्रसूरय. ॥ ५ ॥
स्वान्ययोरुपकाराय श्रीमद्देवेन्द्रसूरिणा । षडशीतिकटीकेय सुखबोधा विनिर्ममे ॥ ६ ॥
विबुधवरधर्मकीर्त्तिश्रीविद्यानन्दसूरिमुख्यबुधै । स्वपरसमयैककुशलैस्तदैव सशोधिता चेयम् ॥ ७ ॥
यदुदितमल्पमतिना सिद्धान्तविरुद्धमिह किमपि शास्त्रे । विद्वद्भिस्तत्त्वज्ञै प्रसादमाधाय तच्छोध्यम् ॥ ८ ॥
षडशीतिकशास्त्रमिद विवृण्वता यन्मयार्जित सुकृतम् । तेनास्तु भव्यलोक सूक्ष्मार्थविचारणाचतुरः ॥ ९ ॥

॥ इति श्रीदेवेन्द्रसूरिविरचिता स्वोपज्ञषडशीतिकटीका समाप्ता ॥

# श्री कर्मग्रंथ चतुष्क सटीक

## समाप्त.

शेठ रतनजी वीरजी अने जीवणभाइ जेचंदनी सहायवडे

छपावी प्रगट करनार

श्री जैनधर्मप्रसारक सभा.

भावनगर.